# A CRITIQUE ON THE VAIŚEṢIKA TATTVAS IN THE PĀṆINIAN SYSTEM OF GRAMMAR

by

**Dr RAM SHARAN SHASTRI,**

*Navya Vyākaraṇācārya, M A , Ph D*

*Senior Research Fellow U G C* (1972-1975),

*Department of Sanskrit, University of Delhi,*

*Pool Officer, Council of Scientific and Industrial Research*

*Department of Sanskrit, University of Delhi, Delhi*

*Published*

**by the author**

*Address* :—

Vaidya Bhim Sen Shastri, M. A.

Sahityaratna,

**537, LAJPATRAI MARKET, DELHI-6**

# पाणिनीयव्याकरणशास्त्रे वैशेषिकतत्त्वमीमांसा

**डॉ० रामशरणशास्त्री**
नव्यव्याकरणाचार्यः, एम० ए०, पी-एच्० डी०
वरिष्ठानुसन्धाता, विश्वविद्यालयानुदानायोग, सस्कृतविभागः,
दिल्लीविश्वविद्यालय, दिल्ली;
पूल आफिसर, कौन्सिल आफ साइन्टिफिक एण्ड इडस्ट्रियल रिसर्च,
सस्कृतविभागः, दिल्लीविश्वविद्यालय., दिल्ली ।

प्राप्तिस्थानम्
**वैद्य भीमसेन शास्त्री, एम० ए०,**
साहित्यरत्न
**५३७, लाजपतराय मार्केट,**
**दिल्ली-६**



DR. SATYA VRAT SHASTRI
Professor and Head of the Department of
Sanskrit and Dean, Faculty of Arts,
UNIVERSITY OF DELHI
**DELHI**

# समर्पणम्

दिल्लीस्थे विश्वविद्यानामालये निर्जरालये ।
गुणैरुदार आचार्यश्श्रीमान् सत्यव्रतस्सुधीः ॥१॥

आम्नाती सर्ववेदेषु सर्वशास्त्रेषु निष्ठितः ।
प्रसक्तस्समयाचारे यश्श्राद्धः परमात्मनि ॥२॥

अधृष्यश्चाऽभिगम्यश्च विद्यया विनयेन च ।
आचार्य्यकेण यश्चेह मूर्ध्नि लोकस्य वर्त्तते ॥३॥

अमृतस्यन्दिनी वाणी कृतिर्लोकम्पृणा किल ।
हरत्यवश्यं यस्येह चित्तं प्रद्विषतामपि ॥४॥

उदात्तञ्चावदातञ्च भव्यञ्चैवापि वर्त्तते ।
मनोज्ञं यस्य चारित्रं स्पृहार्हं महतामपि ॥५॥

यस्य सम्पर्कमात्रेण प्रज्ञा तत्त्वार्थदर्शिनी ।
प्रजायते गुरौ तस्मिन् कृतिमेतां समर्पये ॥६॥

# प्रास्ताविकम्

I

पाणिनीयव्याकरणशास्त्रे वैशेषिकतत्त्वमीमासाऽभिधानोऽय ग्रन्थश्श्री डॉ० रामशरणशास्त्रिणा प्रणीतस्तेनैव च प्रकाशित । आदौ चाऽय वाराणसेय-सस्कृतविश्वविद्यालये विद्यावारिधि (पी-एच्० डी०) इत्युपाधि प्रेप्सुनाऽनेन विदुषा निबद्ध । षट्पदार्थीवादिनो वैशेषिकाः प्राख्यायन्त, ततः कालपर्य्यये तेऽभाव नाम पदार्थमभ्युपायन्, येन ते सप्तपदार्थीवादिनोऽभूवन्निति प्रथते प्रवाद । सप्तपदार्थश्चेमे भवन्ति—द्रव्यगुणकर्मसामान्यविशेषसमवायाऽभावा । एते च प्रायेण साकल्येनाऽसाकल्येन वा प्रतिपद्यन्ते तैर्थिकै । न्याय-दर्शने तु निर्विशेषेण सर्वेऽप्यास्थीयन्ते, दर्शनान्तरे त्वसाकल्येन । यथा पाणिनीय सर्वशास्त्रोपकारक तथा काणादमपीत्यविसवादी वाद । गौरित्यत्र कश्शब्द इति पृच्छा प्रतिविवक्षुर्भाष्यकारो द्रव्यगुणकर्मसामान्यानि चतुरो वैशेषिकान् पदार्थान् कण्ठरवेणाऽङ्गीकुरुते । विशेषसमवायौ च भगवतः पतञ्जलेरभिमतावनभिमतौ वेति दुर्वेदम्, अनादेशात् । अभावस्याऽपि पदार्थत्वप्रतिपत्तिस्तस्येष्टा न वेति पर्येष्यम् ।

वैशेषिकमधीयानाना तत्र श्राम्यताञ्च द्रव्यादयस्सप्तपदार्थाः प्रकाशा लक्षणेनोदाहरणैश्चाऽभिव्यक्ति नीता, पाणिनीयमनुशीलयताञ्च नाऽवश्य ते प्रस्फुटा यत्र तत्र प्रकीर्तिता अपि । पाणिनीये ते कियन्तः किमात्मानश्चा-ऽभ्युपेता इति न सर्वस्य विदितोऽर्थ, अविदितस्याऽस्य वेदनाय प्रकृतग्रन्थस्य प्रवृत्तिरर्थवती भवति । इह प्रबन्धे खल्वेते पदार्था वितत्य विचारितास्सवाद-विवादौ च प्रतिपद प्रदर्शितौ । द्रव्यस्य लक्षणे तावद् भेदो द्वयानाम् । गुणवत्, क्रियावत्, समवायिकारण द्रव्यमिति वैशेषिकाः प्रतिपन्ना, गुणसमुदायो द्रव्य-मिति च वैयाकरणा । एवमवयवादवयवि पृथग्द्रव्यमस्तीति वैशेषिकाः प्रति-जानते, गुणसमुदायो द्रव्यमितिवदवयवसमुदायो द्रव्यमित्येवाऽऽचक्षते शाब्दिका, न त्ववयवि द्रव्यम् । यथाऽन्यत्र तथाऽत्र ग्रन्थकार साध्वी विवेचना वितनुते, विशदा व्याक्रियाञ्च कुरुते, पूर्वपक्षितान् दोषान् समाधत्ते, न तु सूत्राद्युद्धरण-मात्रेण पर्याप्ति स्वस्य कृत्यस्य मनुते येन जिज्ञासितेऽर्थे शाम्यति जिज्ञासा कृतार्थताञ्च कलयति निबन्द्धा ।

इदञ्चेह द्रव्यनिरूपणे वैशेषिकैरनुक्तमपि किञ्चिदुक्तम्—वैयाकरणाः खलु स्वशास्त्रप्रक्रियानिर्वाहार्थं साव्यवहारिकं द्रव्यमपि सगृणते । अन्यत्र चाऽस्य पदार्थो नाश्रितो वैयाकरणनिकाय एव प्रसिद्ध इति नाऽस्य ग्राह्यता तेऽभिनिविशन्ते ।

द्रव्यविशेषाणा पृथिव्यादीना गुणादीनाञ्च निरूपणायामपि उभयोर्वैशेषिकपाणिनीययोर्दर्शनयो सम्प्रतिपत्तिविप्रतिपत्ती सम्यक् स्फोरयति विवेक्ता गवेषक । यथासम्भव पाणिनीय दर्शन युक्तिप्रमाणाभ्या सुष्ठूपपादयति । यथा वातस्यैकत्व प्रमाणयति, अपोहति च वैशेषिकस्याऽभिमत नानात्वम् । मनसो मध्यमपरिमाणवत्त्व वैयाकरणा प्रतिपन्ना., नाऽणुत्व विभुत्व वाऽस्येति विस्पष्ट सप्रमाणमुदाहरति ।

वैशेषिकपाणिनीययोर्दर्शनयोस्तत्तत्पदार्थचिन्ताया प्रवृत्तो ग्रन्थकारो योगाना साख्याना मीमासकानाञ्चाऽपि दर्शनानि प्रसङ्गादुदाहरति । एतावता विषयो विवृततरो भवतीति प्रशस्यैषा प्रवृत्ति ।

प्रायेणाऽत्र प्रबन्धे वैशेषिकमतनिरूपणाया वितत वचः, शाब्दिकमतव्याक्रियायाञ्च सक्षिप्त तदिति नाऽतिचित्रम् । प्रथम वैशेषिका पदार्था विस्तरशो व्याख्यानीया भवन्ति, व्याख्यातचराणा साधु बुद्धिमुपारूढाना तेषा व्याकरणे समुपलब्धौ यत्न कार्यो भवति । समुपलब्धानाञ्च केषाञ्चित् तत्र स्थिता या काचिदुपपादनोपादानीया भवतीत्येष क्रम. । तस्मात्पूर्वत्र व्यासमितरत्र च समास समाश्रयन्ननुसन्धाता विद्वान्न दुष्यति ।

आमूलचूलमिम निबन्धमालोचयतो मम भाति चिर महच्च निबन्द्धाऽत्र कृतो प्रायाति सकामता चाऽपि काऽपि प्रापि । बृहद्वचनविस्तरेऽप्यस्मिन् ग्रन्थे न क्वचिद् व्याहत सकीर्णमपृथगर्थमसमर्थं वा वचो विलोक्यत इति नन्दति चेतश्चिराय । इद च दृढ प्रत्येमि काणादे पाणिनीये च विशेष बुभुत्सवः सुमतयो बटवो ग्रन्थस्याऽस्याऽधीत्या बहूपकृता भविष्यन्तीति ।

**चारुदेवशास्त्री**

पाणिनीयसूत्रेषु अन्तरान्तरा द्रव्यगुणकर्मादिसप्तपदार्थवाचकशब्दाना तदवान्तरभेदवाचकशब्दानाञ्च प्रयोगा उपलभ्यन्ते । द्रव्यादीना कीदृश स्वरूप सूत्रकारस्याभीष्टमिति जायते विचारणा । अन्तरेण द्रव्यादिस्वरूपज्ञान न खलु सूत्राणि सुष्ठु प्रयोक्तु शक्यन्ते सस्कृतशब्दप्रयोगकामिभि । अतोऽवश्य निरूपणीयोऽय विषयो व्याकरणाऽध्येतृभि ।

विषयस्यास्योपादेयता गभीरताञ्चावलोक्य आयुष्मान् श्रीरामशरणशास्त्री मदीयनिर्देशानुसारेण सूत्रोक्तद्रव्यादिपदार्थस्वरूपविशदीकरणाय महता यत्नेन ग्रन्थमिममुपनिबद्धवान् । इह सर्वत्र प्रमाणोपन्यासपुरस्सर विषया विवेचिता इति व्यक्तमेव प्रतीयते । किञ्च केचन मतभेदा अपीह यथायथ समीक्षिता समाहिताश्च । सुबोधा चात्रोपपादनशैली । ग्रन्थोऽय न केवल शब्दशास्त्राध्येतृणा प्रत्युत दर्शनतत्त्वजिज्ञासूनामपि उपयोगीत्यत्र न सशयलेशोऽपि । ग्रन्थकारोऽयमेवविधान्यन्यानि पुस्तकरत्नानि रचयत्विति भगवन्त प्रार्थये ।

**डॉ० रामशङ्करभट्टाचार्यः**
भूतपूर्व उपनिदेशक.
वाराणसेयसस्कृतविश्वविद्यालयः
वाराणसी

# उपोद्घातः

इह खलु सर्वे जना निरन्तर व्यवहार कुर्वन्त एव विलोक्यन्ते । व्यवहारश्च ज्ञानमूलक एवेति नाऽत्र विप्रतिपत्ति । तदिद ज्ञान यदा प्रमारूप भवति, तदा तत्प्रमाणत एवोदेति । सन्ति प्रत्यक्षादीनि बहूनि प्रमाणानीति वृद्धा । एतेषु खलु प्रमाणेषु सूक्ष्मव्यवहिताना वस्तूना ज्ञापकश्शब्द एव मुख्य इति प्रामाणिका । शब्दप्रमाण नाम वेद इत्यातिष्ठन्ते आस्तिका । बहुविधानि ज्ञानानि वेदत एव प्रसिध्यन्तीति प्रसिद्धमेव । उक्तञ्च—**सर्वज्ञानमयो हि स** इति[1] । अत्र स.= वेद इति ।

अपि चोक्तम्—

> **सर्वेषां तु स नामानि कर्माणि च पृथक्-पृथक् ।**
> **वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे ।।** मनु० १।२१।

एतस्य वेदस्य षडङ्गानि वर्त्तन्ते । तानि च शिक्षाकल्पव्याकरणनिरुक्त-च्छन्दोज्योतिषनामधेयानि । इमानि वेदाङ्गानि सन्तीत्युच्यते । एतेषु षट्स्वङ्गे-ष्वन्यतम व्याकरणं प्रधानतयोपतिष्ठते । यथाह पतञ्जलि:—**ब्राह्मणेन निष्का-रणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्चेति । प्रधानञ्च षट्स्वङ्गेषु व्याकरणम्** (म० भा० १।१ पस्पशा०) इति ।

षट्स्वङ्गेषु व्याकरणस्य प्रधानत्वादेव छान्दोग्योपनिषदि व्याकरणमुप-क्रम्य **वेदानां वेद** इत्युक्तम्[2] । भर्तृहरिरपि वेदाना प्रधानमङ्ग व्याकरणमस्ती-त्यचकथत् । तथाहि—

> **आसन्न ब्रह्मणस्तस्य तपसामुत्तमं तपः ।**
> **प्रथमं छन्दसामङ्गमाहुर्व्याकरणं बुधाः ।।** वा० प० १।११।।

व्याकरण खलु लक्ष्यलक्षणरूपम् । अत्र लक्ष्य प्रकृतिप्रत्ययात्मक पदं वाक्यञ्च । यथा—पच् इति प्रकृति , घञ् इति प्रत्यय , अनयोर्योगे (पच्+घञ्) पाक इति । अत्र लक्षणम्—**भावे** (पा० सू० ३।३।१८) इति सूत्रम् । तथा चैतयोर्लक्ष्यलक्षणयोर्यत्समुदित रूपम्, एतदेव व्याकरणमिति कथ्यते । यथाह

---

१ मनुस्मृति २।७ ।

२. छान्दो० उप० ७।१।२।

पतञ्जलिः—**लक्ष्यलक्षणे व्याकरणम्, लक्ष्यञ्च लक्षणञ्चैतत्समुदित व्याकरणं भवति** (म० भा० १।१ पस्पशा०) इति ।

व्याकरणज्ञानवान् नरश्शब्दप्रयोगे कुशलो भवति । व्याकरण खलु साधुशब्दान् शास्ति, व्याक्रियन्ते व्युत्पाद्यन्ते साधुशब्दा अनेनेति व्युत्पत्ते । यथोक्तम्—

**उत त्व पश्यन्न ददर्श वाचम्**
**उत त्वः शृण्वन्न शृणोत्येनाम् ।**
**उतो त्वस्मै तन्वं विसस्रे**
**जायेव पत्य उशती सुवासाः ॥**

अपि च—

**सक्तुमिव तितउना पुनन्तो**
**यत्र धीरा मनसा वाचमक्रत ।**
**अत्रा सखायस्सख्यानि जानते**
**भद्रैषां लक्ष्मीर्निहिताधिवाचि ॥**

(म० भा० पस्पशा० उद्०) इति ।

व्याकरणस्येदृशमहत्त्वादेव श्रीरामोऽपि हनूमन्त प्रत्याह—

**नून व्याकरणं कृत्स्नमनेन बहुधा श्रुतम् ।**
**बहु व्याहरतानेन न किञ्चिदपभाषितम् ॥**

वा० रा० ४।३।२९

अत्रेद विज्ञेय यत् साधुशब्दाना ज्ञान व्याकरणाद् भवति । वेदाना सरक्षण साधुशब्दज्ञानवानेव जन कर्त्तुं शक्नोति । वैयाकरणा एव **स्थूलपृषतीमनड्वाहीमालभेतेत्यत्र, इन्द्रशत्रुर्वर्द्धस्वेत्यत्र** च समासस्वरौ निश्चेतु शक्नुवन्ति । अत एव व्याकरणस्य पञ्चविधेषु प्रयोजनेष्वन्यतम "रक्षा" इति स्वीक्रियते । यथाह पतञ्जलि —**रक्षोहागमलघ्वसन्देहा प्रयोजनम्, रक्षार्थं वेदानामध्येयं व्याकरणम्** (म० भा० १।१ पस्पशा०) इति ।

अर्थबुबोधयिषया शब्दाना प्रयोगो भवति । यतो ह्यर्थावबोधस्य कारण शब्द एव[1] । नहि शब्दमन्तरा चैत्रस्य हृदि स्थितमभिप्राय मैत्रो विज्ञातु

१. शब्दकारणमर्थस्य स हि तेनोपजन्यते ।
तथा च बुद्धिविषयादर्थाच्छब्द प्रतीयते ॥ वा० प० ३।३।३२,
युक्त पुनर्यच्छब्दनिमित्तको नामार्थस्स्यात्, नार्थनिमित्तकेन नामशब्देन भवितव्यम् ।
अर्थनिमित्तक एव शब्दः । म० भा० पा० सू० १।१।४६ ॥

शक्नोति, मैत्रस्य हृदि स्थितमभिप्राय चैत्रोऽपि। किन्तु शब्द पुरस्कृत्यैव परस्पर भावाऽभिव्यक्ति कुर्वति । तथा च अर्थार्थाऽवबोधस्य कारण शब्दो भवति, तथा शब्दाना यस्तत्त्वावबोधो जायते, तस्य कारणं व्याकरण-मेवाऽस्ति, व्याकरणमन्तरा शब्दाना तत्त्वाऽवबोधस्याऽनुपपत्ते. । यथोक्तं भर्तृहरिणा—

**अर्थप्रवृत्तितत्त्वानां शब्दा एव निबन्धनम् ।**
**तत्त्वाऽवबोधश्शब्दानां नाऽस्ति व्याकरणादृते ॥**

**वा० प० १।१३ इति ।**

यो हि व्याकरण जानाति, स एव शास्त्रान्तरेषु प्रवेष्टु शक्नोति । यो व्याकरण न जानाति, स कथमपि शास्त्रान्तरेषु प्रवेष्टु नाऽर्हति । शब्दज्ञानवानेव शास्त्रान्तरस्य रहस्य विज्ञातुं शक्नोति । यथाह भास्कराचार्यो लीलावत्याम्—

**यो वेद वेदवदनं सदनं हि सम्यक्**
**ब्राह्म्यस्स वेदमपि वेद किमन्यशास्त्रम् ।**
**यस्मादत प्रथममेतदधीत्य धीमान्**
**शास्त्रान्तरेषु भवति श्रवणेऽधिकारी ॥**

व्याकरणज्ञानवानेव नरस्स्वजन:, श्वजन:, सकलम्, शकलम्, सकृत्, शकृदित्येतेषा शब्दानामर्थभेदपुरस्सर ज्ञान कर्त्तुं शक्नोति । यथोक्तमभियुक्तै —

**यद्यपि बहु नाधीषे तथाऽपि पठ पुत्र ! व्याकरणम् ।**
**स्वजनश्श्वजनो मा भूत् सकलं शकलं सकृत् शकृत् ॥**

किं बहुना व्याकरणस्य लक्षणेन सस्कृत एक एव शब्दो यथावसर-मुच्चार्य्यते केनचित्तर्हि स जन इह परत्र च सुख लभते । यतो हि केनाप्युच्चारितसस्कारयुक्तश्शब्दस्तस्मै कामधुग् भवति । प्रयोक्ता यद् यदिच्छति, तत्तत् प्राप्नोति साधुशब्दप्रयोगबलात् । यथाह पतञ्जलि —**एकश्शब्द सम्यग् ज्ञातश्शास्त्रान्वितस्सुप्रयुक्तस्स्वर्गे लोके च कामधुग्भवति** (म० भा० ६।१।८४) इति ।

इह चतुर्षु पुरुषार्थेषु अर्थधर्मकाममोक्षेषु यो हि मोक्षरूप पुरुषार्थस्तस्याऽवाप्तिर्व्याकरणविद्भिरेव क्रियते । यतो हि शब्दशास्त्रे यदनादिनिधन शब्द-

तत्त्व वर्त्तते, तदेव ब्रह्मतत्त्वमिति कथ्यते[1] । शब्दब्रह्मतत्त्व व्याकरणज्ञानवता जनेनाऽवाप्यते । शब्दब्रह्मविद् ब्रह्मैव भवतीति । अमुष्यैव मोक्षत्वेन व्यवहारो भवतीति । तथा च मोक्षार्थिनामिद व्याकरण प्रथम सोपान वर्त्तते यदाश्रित्य शब्दब्रह्मण॒प्राप्तिर्भवति । यथाह हरि.—

**इदमाद्यं पदस्थानं सिद्धिसोपानपर्वणाम् ।**
**इयं सा मोक्षमाणानामजिह्मा राजपद्धति** ॥ वा० प० १।१६ इति ॥

अत्र अजिह्मा=वक्रशून्या । राजपद्धति =राजमार्गः ।

अस्य व्याकरणस्य आदिम उपदेष्टा ब्रह्मा, स बृहस्पतिमुपदिदेश, बृहस्पतिरिन्द्रम्, इन्द्रो भरद्वाजम्, भरद्वाज ऋषीन्, ऋषयो ब्राह्मणान् । तेनैतेन क्रमेण व्याकरणज्ञानस्य प्रचार॒प्रसारश्च समजायत । यथाह—**ब्रह्मा बृहस्पतये प्रोवाच, बृहस्पतिरिन्द्राय, इन्द्रो भरद्वाजाय, भरद्वाज ऋषिभ्य, ऋषयो ब्राह्मणेभ्यः** (ऋक्तन्त्र १।४) इति । अपि चाह पतञ्जलिः— **बृहस्पतिरिन्द्राय दिव्यं वर्षसहस्रं प्रतिपदोक्तानां शब्दानां शब्दपारायण प्रोवाच नान्तं जगाम** (म० भा० पस्पशा०) इति ।

व्याकरण खलु कर्तृभेदेनाष्टविधम् । एतच्चैन्द्रम् १, चान्द्रम् २, काशकृत्स्नम् ३, आपिशलम् ४, शाकटायनम् ५, पाणिनीयम् ६, आमरम् ७, जैनेन्द्रञ्च ८ । यथोक्तम्—

**इन्द्रश्चन्द्र॒काशकृत्स्नाऽऽपिशली शाकटायनः ।**
**पाणिन्यमरजैनेन्द्रा जयन्त्यष्टादिशाब्दिकाः ॥इति**[2]॥

एतेष्वष्टसु व्याकरणेषु पाणिनीय व्याकरणमन्यतमत्वेन गृहीत भवति । एतदेव पाणिनीय व्याकरण प्रामुख्येनाऽधिकृत्यानुसन्धित्से । अनुसन्धेयविषयश्च **पाणिनीयव्याकरणशास्त्रे वैशेषिकतत्त्वमीमांसेति** निर्धारितम् ।

अत्र पाणिनीय व्याकरण हि लौकिक वैदिकञ्च शब्द व्युत्पादयति । तत्र लौकिकाना शब्दाना व्युत्पादने स्वभावत एव लौकिका ये विषया वर्त्तन्ते, तेषां व्युत्पादन समायातम् । अत एव लौकिका ये द्रव्यगुणकर्मादय॒पदार्था, तेषा समुल्लेख॒पाणिनिनाऽष्टाध्याय्या कृत । तथा च सूत्रम्—**किमेत्तिङव्यय-**

---

१. अनादिनिधन ब्रह्म शब्दतत्त्व यदक्षरम् ।
विवर्त्ततेऽर्थभावेन प्रक्रिया जगतो यत ॥ वा० प० १ १॥

२. द्र०—सस्कृतव्याकरणशास्त्र का इतिहास प्र० भा० पृ० ४८ ।

**घादास्वद्रव्यप्रकर्षे** (पा० सू० ५।४।११) इति, **पूरणगुणसुहितार्थसदव्ययतव्य-समानाधिकरणेन** (पा० सू० २।२।११) इति, **कर्त्तरि कर्मव्यतिहारे** (पा० सू० १।३।१४) इति च । अत्रैतेषूपात्तानि द्रव्यगुणकर्माणि तान्येव गृहीतानि वर्त्तन्ते यानि वैशेषिकैस्स्वीकृतानि । तथा च द्रव्य गुण कर्म वा वैशेषिकशास्त्रेषु यस्मिन्नर्थे व्यवहृत वैशेषिकै तस्मिन्नेवार्थे वैयाकरणैरपि । तेनैतेन द्रव्यशब्देन पृथिव्यादीनि, गुणशब्देन रूपरसगन्धस्पर्शादय, कर्मशब्देन उत्क्षेपणाऽवक्षेपणा-दीनि कर्माणि च वैशेषिकशास्त्रे, शब्दशास्त्रे चाऽविशेषेणैव गृह्यन्ते ।

शब्दशास्त्रे वैशेषिकमतानुसारेण प्रायेण द्रव्यादीना विवेचना कृता इति दृश्यते । यथा—**गुणसंद्रावो द्रव्यम्** (म० भा० ५।१।११९) इति । **अत्र गुण-**सद्रावः—सद्रूयते-आश्रीयत इति सद्राव । एष सद्रावो द्रव्यमेव । अस्यार्थ·—गुणानामाश्रयो द्रव्यम् । यथोक्तं कैयटेनाऽपि **गुणानामाश्रयो द्रव्यम्** (प्र० पा० सू० ५।१।११९) इति । एतेन स्पष्टतया वैशेषिकमतानुरोधेन द्रव्यस्य लक्षण-मङ्गीकृत कैयटस्य व्याख्यानेन परिलक्ष्यते । अत एव नागेश **कैयटस्तु वैशेषिका-दिनयाऽनुसारेण भाष्य व्याचक्षाण** इत्यवोचत् ।

किञ्च पूर्वानुभूतस्यैव वस्तुन कालान्तरे पूर्वानुभूतस्य वस्तुनस्सान्निध्ये सति सोऽय चैत्रो यमह मथुरायामद्राक्षमित्यादौ **तत्ताया** उल्लेखात्स्मृतिर्भवति । तथा च स्मृतेर्बोधे तत्ताया उल्लेखोऽवश्यमेव भवतीति वैशेषिकाणा राद्धान्त. । यत्र तत्ताया उल्लेखो न भवति तत्र स्मृतिरपि न भवति । तत्ताया उल्लेख तस्यैव भवति, यस्य प्रागनुभवो जायते । अत एव गन्धर्वनगरादीनामनुभवाऽभावात्तत्ताया उल्लेखस्तत्र न सेत्स्यति । तेनैतेन गन्धर्वनगरादीना स्मृतिर्न भवति । यथोक्त कैयटेन—**नहि गन्धर्वनगरमन्तरिक्षे कदाचिदुपलब्धम्, न तत्र तत्सदृशवस्त्वन्तरस्य ग्रहणम्, येन गन्धर्वनगरं स्मर्य्येत** (प्र० पा० सू० ४।१।३) अत्राह नागेशभट्ट **प्रमोषाच्च न तत्तोल्लेखः** (उद्० पा० सू० ४।१।३) इति । एतेनाऽपि गम्यते यद् वैशेषिकमतानुरोधेनैव कैयटेन व्याख्यान कृतमिति । अत एव नागेश **इदञ्च वैशेषिकादिमतानुसारेण** (उद्० पा० सू० ४।२।३) इत्यवादीत् ।

किञ्च **नैयायिकानां तु मते पुरुषस्य कर्तृत्वात्स एवान्तरात्मा विवक्षितः** (प्र० पा० सू० १।३।६७ वा०) इति । अत्र नैयायिकानामिति कथनेन वैशेषिका अपि गृह्यन्ते, बहुत्र नैयायिकवैशेषिकयोर्मतैक्यात् । अनेनाऽपि पूर्वोक्त मतमेव सिध्यति ।

किञ्च **निमित्तात् कर्मयोगे** (पा० सू० २।३।३६ वा०) इति वार्त्तिके योगशब्देन सयोगस्समवायरूपश्च सम्बन्धो गृहीतो भवति । अयञ्च समवाय-

रूपस्सम्बन्धो वैशेषिकैस्स्वीकृत । तदनुरोधेनैवेह शब्दशास्त्रे व्याख्यान कृत दीक्षितेन । समर्थितञ्च रामाज्ञापाण्डेयेनाऽपि—**संयोगसमवायावित्युक्तिः कथं सङ्गच्छत इति चेन्न ? अत्र वैशेषिकमतेनैवैतयोरुपादानात्** (व्या० द० भू० पृ० १८३) इति ।

एवञ्च शब्दशास्त्रे बहुत्र वैशेषिकस्य मतमादाय शाब्दिकैर्व्याख्यान कृतमित्युपलभ्यते । तेनैतेन शब्दशास्त्र वैशेषिकदर्शनस्याऽतीव सान्निध्य समुपैतीति निर्धार्य्यते । अत एव **काणादं पाणिनीयञ्च सर्वशास्त्रोपकारकमि**त्यभियुक्तोक्तिः सङ्गच्छते ।

पाणिनीयकाणाददर्शनयोरीदृश सामञ्जस्य दृष्ट्वा एतयोर्मतस्य सम्यक् परीक्षणार्थमेष गवेषणात्मकः प्रबन्धः प्रस्तुत । मन्येऽस्मिन् कर्मणि प्रमादादज्ञानादनवधानाच्च काचन च्युतिरवश्य भाविनीति । एता च्युति निरस्यन्तो ममाऽज्ञानतामवदास्यन्ति वात्सल्यस्वभावा गुरुचरणा गुणैकपक्षपातिनो विपश्चितश्चेति कामये ।

## वैशेषिकदर्शनम्

**आरम्भवादमतमवलम्ब्य** प्रवृत्तमिद वैशेषिक नाम दर्शन विद्यते । दर्शनमिदमसत्कार्यवादीत्यपि कीर्त्यते ।

अस्य दर्शनस्य **वैशेषिक** इति नामकरणसम्बन्धे काश्चन युक्तयः प्रदर्श्यन्ते । तथा हि—(१) अस्मिन् दर्शने परमाणूना परस्पर भेदज्ञानाय विशेषो नाम पदार्थस्स्वीकृत । एष विशेषोऽन्त्येषु परमाणुषु व्यवतिष्ठमानोऽय परमाणुरस्मात् परमाणुतो भिन्न इति बुद्धि जनयति । यथोक्त कणादेन—**अन्यत्र अन्त्येभ्यो विशेषेभ्यः** (वै० सू० १।२।६) इति ।

एष पदार्थो नह्यन्यस्मिन् दर्शने समुपलभ्यते, प्रत्युताऽस्मिन्नेवाऽस्य स्वातन्त्र्येण समुल्लेखो दृश्यते । अतो विशेषरूपेणाऽस्मिन् दर्शने **विशेष** इति नामधेय पदार्थस्स्वीकृत । तेनाऽस्य **वैशेषिकदर्शनमिति** नाम कथ्यते ।

(२) न्यायादिदर्शने दुःखानामात्यन्तिकी निवृत्तिरेव मोक्ष इत्यभिधीयते । अस्मिन् दर्शने आत्मवृत्तयो ये विशेषगुणा वर्त्तन्ते, एतेषां साकल्येन विनाश एव **अपवर्ग** इति काणादैस्सिद्धान्तितम् । अतोऽस्य दर्शनस्य **वैशेषिक इति** नाम प्रसिद्धम् ।

(३) **विगतश्शेषो** यस्य तद् विशेषमिति व्युत्पत्त्या **निर्विशेष** एव प्रकृतविशेषशब्दस्याऽर्थ । विशेष एव वैशेषिकम् **विनयादिभ्यष्ठक्** (पा० सू० ५।४।३४) इति स्वार्थिकेन ठक्प्रत्ययेन निष्पन्नोऽय वैशेषिकश्शब्द. । तेनैतेन न्याय-

दर्शनस्य ये **प्रमाणप्रमेयसशय**[१]**प्रयोजनादय** षोडशसख्यका पदार्था, एतेषा वैशेषिकोक्तेषु सप्तसु पदार्थेष्वेवाऽन्तर्भावो भवति निरवशेषतया। अत एवाऽस्य दर्शनस्य **वैशेषिक इति** नाम प्रसिद्धम्।

(४) विशेषण विशेष इति व्युत्पत्त्या **भावे** (पा० सू० ३।१८) भावघञन्तोऽय इति लक्षणपरीक्षादिक्रमेण पदार्थाना प्रतिपादनमेव प्रकृतविशेषशब्दस्यार्थ। एष क्रमो यस्मिञ्शास्त्रे वर्त्तते, तदेव '**वैशेषिकदर्शनमि**'त्याख्यायते। ईदृश क्रमः साख्ययोगमीमासावेदान्तादिदर्शने न दृश्यते, प्रत्युताऽऽत्मनोऽन्त करणस्य, सृष्टितत्त्वप्रभृतीनामेव विशेषरूपेण विवेचना दृश्यते। अत एवाऽत्र लौकिका ये पृथिव्यादिपदार्था, तेषा यथावद् विवेचना न परिलक्ष्यते। आत्मतत्त्वस्य परिज्ञानाय आत्मनस्सजातीयविजातीयौ यौ पदार्थौ स्त, एतयोरपि ज्ञानमावश्यक भवति। यथा नीलो गौरित्यत्र ये नीलवन्तो गावो वर्त्तन्ते, तेषु नीलत्वेन सजातीयबुद्धि प्रवर्त्तते, नीलेतरेषु पीतादिषु विजातीयबुद्धिरपि।

एवञ्च कणादेन आत्मन एतस्य सजातीयगुणा विजातीया पृथिव्यादिपदार्थश्च विशेषरूपेणोपवर्णिता। तेनाऽस्य दर्शनस्य वैशेषिक इति नाम प्रसिद्धम्।

(५) विशेषस्य भेदविशेषगुणाविति द्वावर्थौ स्त। एतयोरर्थेन सम्बद्ध यद् दर्शनम्, तदेव वैशेषिक दर्शनमित्याख्यायते। वेदान्तदर्शनानुरोधेन आत्मनि **भेदविशेषगुणौ** न व्यवतिष्ठेते। अस्मिन् कणाददर्शने आत्मना परस्पर भेद, **ज्ञानेच्छासुखदुःखादिविशेषगुणाश्चे**त्युभौ वर्त्तेते। साख्यदर्शने यद्यप्यात्मना **परस्पर भेदोऽ**स्तीति स्वीकृतम्, तथापि आत्मनि विशेषगुणाना सत्ता नाऽस्तीति साख्या प्रतिजानते। अत आत्मनि तादृशो भेदः, विशेषगुणश्च वर्त्तत इति **प्रतिपादयन्** कणादस्साख्ययोगमीमासावेदान्तादिदर्शनेभ्योऽतिरिक्त वैशेषिकदर्शन**मस्तीति सूचयति**।

(६) विशेष इत्यस्य प्रयोग परमाणावपि भवति। तेनैतेन परमाणोस्सत्ता, **तन्मूलकसृष्टे क्रमश्च** यस्मिन् स्वीकृतो भवेत् तदेव **वैशेषिकदर्शनमि**त्याख्यायते। एतेनाऽपि **वैशेषिकदर्शनमिति** प्रसिध्यति।[२]

---

१. प्रमाण-प्रमेय-सशय-प्रयोजन-दृष्टान्त - सिद्धान्ताऽवयव-तर्क-निर्णय-वाद-जल्प-वितण्डा-हेत्वाभासच्छल-जाति-निग्रहस्थानाना तत्त्वज्ञानान्निश्श्रेयसाधिगम.। गौ० सू० १।१।१,

२. द्र०—प्र० पा० भा० भू० पृ० १-२।

## औलूक्यदर्शनम्

अस्य वैशेषिकदर्शनस्य द्वितीय नाम औलूक्यदर्शनमपि विद्यते। यतो हि महर्षिकणाद उलूकनाम्न ऋषेर्वंशे समुत्पन्न । एतेनोलूकस्य गोत्राऽपत्य पुमानिति व्युत्पत्त्या **औलूक्य** इति कणादस्य वशनाम । अतोऽस्य दर्शनस्य नाम **औलूक्यदर्शन**मिति प्रसिद्धिमगात् ।

## काणाददर्शनम्

अस्य दर्शनस्य कर्त्ता कणादो नाम ऋषि । तथा च कणादेन प्रोक्त शास्त्र काणादमित्युच्यते । अतोऽस्य तृतीय नाम **काणाददर्शन**मिति पप्रथे ।

## कृतज्ञताप्रदर्शनम्

अनुसन्धानकर्म कियत्कठिनमित्यनुसन्धातार एव विजानन्ति । अत्रापि च **पाणिनीयव्याकरणशास्त्रे वैशेषिकतत्त्वमीमासे**तिविषयो या दुरूहता भजते, ता विचक्षणा वैयाकरणा एव विज्ञातु पारयन्ति। एतस्याऽनुसन्धेयनिबन्धस्य सर्वात्मना पूर्त्तिश्चाऽस्माक निर्देशकमहाभागाना माननीयाना विविधविद्याजुषा डॉ० श्रीरामशङ्करभट्टाचार्याणा समुचितनिर्देशनेनैव सम्पन्नेत्येवाह प्रतिपद विभावयामि ।

मम प्राथमिकाऽनुसन्धानकर्मणि सूक्ष्मया सरलतया मार्गनिर्देशिकया च दृष्ट्या विविधविद्यापारङ्गतैर्गुरुचरणैश्श्रीभूपनारायणझामहाभागैर्निर्देशनकार्य्यमाचरितम्, स्वर्गगतास्तान् साम्प्रत स्मार स्मार निर्वेदमापन्नोऽनेकश प्रणतितर्ति समर्प्य कथञ्चित् सन्तोषमादधे ।

अन्यैश्च वाराणसेयसस्कृतविश्वविद्यालयीयैर्गुरुचरणैश्श्रीरघुनाथशर्ममहाभागै. (=वेदान्तविभागाध्यक्षै ), प० श्रीजगन्नाथोपाध्यायमहाभागै (=पालि-बौद्धदर्शनविभागाध्यक्षै ), श्रीबदरीनाथशुक्लमहाभागै (=न्यायवैशेषिकदर्शन-विभागाध्यक्षै ), श्रीहरिरामशुक्लमहाभागै (=साख्ययोगविभागाध्यक्षै ), डॉ० श्रीरामप्रसादत्रिपाठिमहाभागै ( =प्राचीनव्याकरणदर्शनागमविभागाध्यक्षै.), श्रीदुर्गाधरझामहाभागैश्च (=अनुसन्धानसहायकै ) समये-समये स्वकीय बहुमूल्य समय ददद्भिर्दुरूहविषयस्य स्फुट ज्ञान वात्सल्येन कारितम्, निर्देशाश्च प्रदत्ता । अतस्तान् प्रति कियती कृतज्ञता कियतश्चाऽऽभारान् प्रकटयामीत्यसमर्थतामनुभवामि ।

गुरुवराणा श्रीराजनारायणत्रिपाठिमहाभागानाम् (=गोयन्दकासस्कृतमहाविद्यालयस्य, वा० स० विश्वविद्यालयस्य च प्राचार्य्याणाम्) अन्तेवासिच्छात्रोऽहमशेष पाणिनीय व्याकरणमध्यैयि । अतस्तान् प्रति कमपि कृतज्ञताभर वहन् मुहुर्मुहुश्चिन्तयँश्च विरमामि ।

अशेषविद्याचुञ्चूनामभिनवपाणिनीना राष्ट्रपतिसम्भाविताना व्याकरणचन्द्रोदयवाग्व्यवहारादर्शशब्दाऽपशब्दविवेकवाक्यमुक्तावलिप्रस्तावतरङ्गिणी महात्मगान्धिचरितोपसर्गार्थचन्द्रिकादिग्रन्थनिर्मातृणा शब्दविद्याऽवारपारीणाना पितृपाददेश्याना[1] श्रीमताञ्चारुदेवशास्त्रिमहाभागानां कृतज्ञताज्ञापनाय तान् प्रति न मे वचसश्शक्ति', न च मे पार्श्वे शब्दराशि., यैः पूजितचरणैर्मे ग्रन्थगता भ्रान्तीर्निराकृत्य प्रबोधाय स्वबहुमूल्य समय प्रदत्तोऽथ चाऽस्मिन्ननुसन्धेयग्रन्थे समागतानामनुपयुक्तपदानामुद्वापनम्, तेषा स्थान उपयुक्तपदानामावापनमितिदिशाऽय ग्रन्थ. समशोधि, स्थाने स्थाने चाऽस्य ग्रन्थस्यौत्कर्ष्यख्यापनाय बहुमूल्य पद सन्न्यवेशि चैतदर्थमयञ्जनश्श्रीमता पूजितचरणानामौदार्य्यमाजीवन सस्मरिष्यतीत्येव वक्तु पारयामीति ।

अशेषविद्याचुञ्चूना शब्दविद्यापारावारीणाना बोधिसत्त्वचरितगुरुगोविन्दसिंहचरिताद्य[2]नेकग्रन्थप्रणेतॄणा साहित्याऽकादमीपुरस्कारेण सम्मानिताना देहलीविश्वविद्यालयदेहल्या. सस्कृतविभागस्याऽध्यक्षपादाना साम्प्रत कलासकायस्याऽधिष्ठातृपद आसीनाना गुरुवर्य्याणा डॉ० श्रीसत्यव्रतशास्त्रिमहाभागाना निष्कारणकृपयौदार्य्येण चाऽनुगृहीतोऽयञ्जनोऽस्याऽनुसन्धेयग्रन्थस्य प्रकाशनकर्मणि सामर्थ्यमलभत । किञ्चैषा गुरुवर्य्याणा कृपया मेऽधीता विद्या प्रतिभा चाऽनुदिनम् '**चतुर्भिश्च प्रकारैर्विद्योपयुक्ता भवति—आगमकालेन स्वाध्यायकालेन प्रवचनकालेन, व्यवहारकालेन चेति** पतञ्जलेर्वचसैधमाना विकसन्ती चाऽस्तीत्येतदर्थं तान् प्रति कृतज्ञताज्ञापनाय न मे वचस: सामर्थ्यम्, न च मे पार्श्वे शब्दराशि., यैश्शब्दै कृतज्ञता प्रकटयितु शक्नोमि । केवल **महात्मना स्वभाव एवैष** इत्येव प्रतिक्षणमहमनुभवामीति ।

परमश्रद्धेयाना श्रीमता[3] प० जगदीशचन्द्रशास्त्रिमहाभागानामहमतीवाऽनुग्रहभाजनमस्मि यदस्याऽनुसन्धेयग्रन्थस्य प्रकाशनकर्मणि तै. समुचितमार्ग-

---

१. सख्या वश्येन (पा० सू० २।१।१९) इति सूत्रे सिद्धान्तकौमुद्या वशो द्विधा विद्यया, जन्मना चेत्यनुरोधेनाऽत्र विद्यया पितृचरणत्वम्, न तु जन्मनेति ।

२. आदिना मैकडानलकृतवैदिकव्याकरणस्य राष्ट्रभाषायामनुवाद, षड्ऋतुवर्णनम्, बृहत्तर भारतम्, शर्मण्यदेश: सुतरा विभाति, The Rāmāyana A linguistic study, Essays on Indology.

३. Formerly Professor and Head, Department of Sanskrit, Mahakoshal Mahavidyalaya, Jabalpur.

निर्देश—कृत एतदर्थमहं तेषा पूजितचरणानामाजीवन कृतज्ञतामनुभविष्यामीति ।

पूज्यतमाया स्वर्गीयायाश्श्रीमत्या मरणीदेव्या मातुश्चरणयोस्सादर सस्नेह सभक्तिञ्च श्रद्धाञ्जलि समर्पयामि यस्या वात्सल्यस्नेहपीयूषैर्वधितोऽयञ्जनोऽस्य ग्रन्थस्य रचनाया सामर्थ्यमवापत् । अपि च पूज्यतमस्य स्वर्गीयश्रीहरिराम-शास्त्रिण (=कारुदेवशास्त्रिण.) पितृपादस्य, पूज्यतमस्य स्वर्गीयश्रीभमनदेव-शास्त्रिण—पितामहपादस्य, पूज्यतमस्य स्वर्गीयश्रीबलदेवशास्त्रिण—पितृव्यस्य च चरणयो सादर सस्नेह सभक्तिञ्च श्रद्धाञ्जलि समर्पयामि । स्वर्गङ्गताना-ञ्चैतेषा वात्सल्यस्नेह सस्मृत्य सस्मृत्याऽधुनापि प्रमोदमनल्पमनुभवामीति ।

अन्ते च श्रीश्यामलालमहोदयस्याऽथचाऽस्य महाभागस्य पत्न्याश्चाऽतीव साधुवाद प्रयच्छामि यन्मध्ये मध्येऽपेक्षिताना वक्तव्यशेषाणा सन्निवेशनकर्मणि स्वश्रममविगणय्य मुद्रणमकारि । अपिचास्य महोदयस्य कर्मकराणा प्रसन्न-चेतसा कुमाराणामपि साधुवाद प्रयच्छामि यतो ह्यस्मिन् मुद्रणकर्मणि साहाय्य ते कृतवन्त इति निवेदयति ।

विदुषा वशवद.

**रामशरणशास्त्री**

# विषयाऽनुक्रमणी

॥ इति विषयाऽनुक्रमणी ॥

नम पाणिनये कणादाय च

# पाणिनीयव्याकरणशास्त्रे वैशेषिकतत्त्वमीमांसा

## प्रथमः परिच्छेदः

### द्रव्यसामान्यम्

**अवतरणिका :—**

व्याकरण खलु लौकिकाना वैदिकानाञ्च शब्दानामन्वाख्यायकम् । तत्र लौकिकशब्दानामन्वाख्याने स्वभावतो द्रव्य-गुण-क्रियादीना पदार्थानामुल्लेखो भवति । इमे पदार्था वैशेषिकशास्त्रे विशेषतो वर्ण्यन्ते, न्यायशास्त्रे च । अत एव व्याकरणज्ञानाय वैशेषिकोक्तद्रव्यादिपदार्थाना ज्ञानमावश्यकमिति न सशय-लेशोऽपि । एतदर्थमेव **पाणिनीयव्याकरणशास्त्रे वैशेषिकतत्त्वमीमांसा** इति नामधेयोऽय ग्रन्थ· प्रारभ्यते । अत्र पदार्थ एव तत्त्वपदेनोच्यते ।

द्रव्यादिसप्तपदार्थ्याश् चिन्तन येन क्रमेण वैशेषिकशास्त्रे कृतमुपलभ्यते, तेनैव क्रमेणाऽस्मिन्ननुसन्धानप्रबन्धेऽपि विवेचना प्रस्तूयते ।

क्वचिच्च स्वमतवैशद्यायाऽन्येषामपि दर्शनाना मत समुद्धृतम् । यतो हि वैयाकरणै क्वचिद् दर्शनान्तरदृशाऽपि पदार्था विवेचिता, व्याकरणस्य सर्व-दर्शनपारिषदत्वात्[1] । यथा साख्ययोगयोर्दर्शनयोर् **गुणसमूहो द्रव्यम्, अयुतसिद्धा-वयवानुगत समूहो द्रव्यम्** इति च सिद्धान्तभूत मतमस्ति, तथैव शब्दशास्त्रे-ऽपि, **द्रव्ये च भवतः क. सम्प्रत्ययः ? यदि गुणसमुदायो द्रव्यम्, का गतिर्ये एते भावाः कृदभिहिताः, तद्धिताभिहिताश्च चिकीर्षा गोतेति । अथ मतमेतत्-कृदभिहितो भावो द्रव्यवद् भवतीति, स्त्रीत्वमपि स्त्रीत्वेनाऽभिहितं द्रव्यवद् भवि-ष्यतीति 'स्त्रियाम्'** (४।१।३) इति सूत्रभाष्येण पतञ्जलिना सिद्धान्तितम् ।

**द्रव्यादिपदार्थविषये वैशेषिक-नैयायिकयोर्मतैक्यम् :—**

भारतीयदार्शनिकचिन्तनसम्प्रदायेषु द्रव्यस्य मीमासा प्राधान्येन वैशेषिक-दर्शने बुद्धिपथमारोहति । यथा—**द्रव्यगुणयो सजातीयारम्भकत्वं साधर्म्यम्** (वै० सू० १।१।१६) । **द्रव्याणि द्रव्यान्तरमारभन्ते गुणाश्च गुणान्तरम्** (वै० सू० १।१।१०) इत्यादिसूत्रेषु द्रव्यमचिकीर्त्तत् कणाद । अमुमेवाऽऽशय-मादाय **एते च पदार्था वैशेषिके प्रसिद्धा** इत्याह विश्वनाथ. ।

---

१. सर्ववेदपारिषद हीद शास्त्रम् । तत्र नैक· पन्था शक्य आस्थातुम् ।
म० भा० २।१।५७

यद्यपि न्यायसूत्रेषु द्रव्य न दृश्यते, तथापि न्यायसूत्रभाष्ये द्रव्य प्रमेयेषु परिगणयति वात्स्यायन । तथाहि—**अस्त्यन्यदपि द्रव्य-गुण-कर्म सामान्य-विशेषसमवायाः प्रमेयम्** इति ।[1]

केशवमिश्र —**आत्मशरीरेन्द्रियाऽर्थबुद्धिमन·प्रवृत्तिदोषप्रेत्यभाव-फलदु.खा-पवर्गास्तु प्रमेयम् इति न्यायसूत्रस्थेन** अर्थ इति पदेन द्रव्यादिपट्पदार्था सगृह्यन्त इत्यसुसूचत् । यथा —**अर्थाः षट् पदार्था । ते च द्रव्य-गुण-कर्म-सामान्य विशेष-समवाया** इति ।

अक्षपाद —**शब्दस्पर्शरूपरसगन्धा** इत्येतेपु पञ्चमु **अर्थ** इति शब्द निरदिक्षत् । तथा च सूत्रम् —**गन्ध-रस-रूप-स्पर्श-शब्दा पृथिव्यादिगुणास्तदर्थाः** (न्याय० सू० १।१।४) इति । अस्मिन् सूत्रे तदर्था —इन्द्रियार्था, के च ते ? गन्ध-रस-रूप स्पर्श-शब्दा, एते च केषा गुणा, कुत्र चाऽऽश्रयन्ते ? पृथिव्यादीना द्रव्याणा गुणा, पृथिव्यादीनाश्रयन्ते । अत्र वात्स्यायनभाष्यम् —**भोक्तव्या इन्द्रियार्थाः** (गो० सू० वा० भा० १।१।९) इति । अत्रेन्द्रियार्था शब्दस्पर्शरूपरसगन्धा, एते खलु चक्षूरसनघ्राणत्वक्श्रोत्रैरिन्द्रियैर्भोक्तव्या —ग्रहीतु शक्या इति भाष्याऽऽशय ।

कणादस्तु **द्रव्यगुणकर्माणि 'अर्थ'** इत्यनेन प्रतिपेदे । तथाहि—पारमर्ष सूत्रम्—**'अर्थ इति द्रव्यगुणकर्मसु'** (वै० सू० ८।२।३) इति ।

एवञ्च केशवमिश्रस्य मत पूर्वाचार्यकृतव्याख्यानेन विरुद्ध वर्त्तते । एतन्मत किमर्थमाश्रित केशवमिश्रेणेति तावच्चिन्त्यते । अत्र कश्चिन्मन्यते केशवकृतिस्तर्कभाष ख्यो ग्रन्थो न्यायवैशेषिकयो प्रकरणग्रन्थ । अतस्तर्कभाषाया **'अर्थ'** इति पदेन द्रव्यादिषट्पदार्था सगृहीता भवन्ति । यतो हि न्यायसूत्र-भाष्यकारौ **'अर्थ'** इतिपद शब्दस्पर्शरूपरसगन्धेषु प्रायुक्षाताम् । कणादश्च **द्रव्यगुणकर्मसु** त्रिषु पदार्थेषु प्रायुङ्क्त । केशवमिश्रो न्यायदर्शनाऽभिमत-शब्दादिगुणपदार्थेषु पञ्चसु, वैशेषिकदर्शनाभिमतद्रव्यगुणकर्मसु त्रिषु पदार्थेषु च प्रयुक्तमर्थमङ्गीकृत्योभयोर्दर्शनयो सामञ्जस्य स्थापयन् द्रव्यादिषु षट्सु पदार्थेषु च प्रयोगेण स्वतन्त्रमपि मत प्रत्यतिष्ठिपत् । एतेन तर्कभाषाया प्रकरणग्रन्थत्व सिद्ध भवति ।

किञ्च **द्रव्य-गुण-कर्म-सामान्य-विशेष-समवाया** इति वात्स्यायनभाष्य-ग्रन्थेन द्रव्यादि-पदार्था अपि प्रमेयेष्वन्तर्भवन्तीति नैयायिकाना सम्मति । एतेन द्रव्यादिपदार्थविषये न्यायवैशेषिकदर्शनयोरैकमत्यमस्तीति निश्चीयते । यथाह विश्वनाथ —**नैयायिकानामप्यविरुद्धा.** इति ।[2]

१. न्या० सू० वा० भा० १।१।९

२. न्यायसि० मुक्तावली ।

**द्रव्यस्य लक्षणम् :—**

अथ न्यायवैशेषिकदर्शनदिशा द्रव्यस्य लक्षण प्ररतूयते । तथाहि द्रव्यलक्षण-सूत्रम्—**क्रियागुणवत्समवायिकारणमिति द्रव्यलक्षणम्** (वै० सू० १।१।१५) इति । अस्मिन् सूत्रे द्रव्यस्य त्रिविध लक्षणम्, तत्र क्रियावद् द्रव्यमिति प्रथमम्, गुणवद् द्रव्यमिति द्वितीयम्, समवायिकारणमिति तृतीयम् । अत्र क्रमशो लक्षणस्य स्वरूप विचार्यते । तथाहि—क्रियावद् द्रव्यमित्येतावत्याश्रीयमाणे लक्षणे यानि क्रियावन्ति द्रव्याणि, तान्येवोक्तलक्षणेन लक्ष्यन्ते । यथा पृथिव्यप्तेजोवायुमनासि मूर्त्तद्रव्याणि, क्रियावत्त्वमपकृष्टपरिमाणवत्त्वञ्च मूर्त्तत्वमिति सिद्धान्तात् । यानि पुन क्रियाशून्यानि विभूनि-आकाशकालदिगात्मद्रव्याणि, तानि पूर्वोक्तलक्षणेन न व्याप्येरन् सर्वमूर्तद्रव्यसयोगित्वेन तेषु क्रियाया असत्त्वात् । अव्याप्तिदोषप्रसक्तेर्नेद लक्षण शक्यमास्थातुम् क्रियावद् द्रव्यमितिलक्षण यावल्लक्ष्य न व्याप्नोति । किन्तु लक्ष्यैकदेशमात्रमेव । अस्या अव्याप्ते परिहाराय द्वितीय गुणवद्द्रव्यमिति लक्षण कृत कणादेन । अनेन लक्षणेनाऽऽकाशादिविभुद्रव्ये शब्दादिगुणाना सत्त्वाद् विभुद्रव्याण्यपि सगृहीतानि भवन्ति । अतो नाऽस्त्यत्राऽव्याप्ति ।

न च जायमान द्रव्य क्षण निर्गुण निष्क्रियञ्च तिष्ठतीति नियमेनौत्पत्तिके क्षणे घटादि-कार्य-द्रव्य गुणक्रियाभ्या शून्य भवति । तथा चौत्पत्तिकक्षणावच्छिन्ने कार्यद्रव्ये **क्रियावद् द्रव्यम्, गुणवद् द्रव्यमि**त्यनयोर्लक्षणयोरगमनात् पुनरपि अव्याप्तिस्तदवस्थैव । अत तृतीय द्रव्यलक्षण **समवायिकारणं द्रव्यमि**-त्युक्तम् ।[1] एतेन लक्षणेनौत्पत्तिके क्षणावच्छिन्ने घटादिकार्ये द्रव्ये प्रसक्तामव्याप्ति वारयति । यतो हि घटादिकार्यद्रव्य जायमाने गुणक्रिये प्रति समवायिकारण भवत्येव, अतो नास्त्यव्याप्ति ।

ननु जायमान द्रव्य गुणक्रियाभ्या सहैवोत्पद्यत इति कुतो नाभ्युपेयेत ? उच्यते—कारणभेदसामग्री हि कार्यभेद जनयति । यथा—तन्तुभि पट, मृद्भिर्घट । अत्र तन्तुमृदौ नैक कारणम्, प्रत्युताऽनयोर्भेद । यतो हि कारणसामग्रीभेदात्कार्यभेदोऽस्ति । तथा—औत्पत्तिके क्षणावच्छिन्ने जायमान द्रव्य युगपदेव गुणक्रियाभ्यामुत्पद्यत इति मन्यते चेद् द्रव्यस्य गुणक्रियाभ्या सह भेदो न स्यात् समानकारणसामग्रीकत्वात् । तथा च क्रिया प्रति, गुण प्रति समवायिकारण द्रव्य भवतीति वक्तु न शक्यते । यतो हि कार्यनियतपूर्ववर्त्ति हि

---

१ (क) समवायिकारणत्व द्रव्यस्यैवेति विज्ञेयम् । भा० परि २३ क ।
(ख) यत्समवेत कार्यमुत्पद्यते तत् समवायिकारणम्, यथा—तन्तव पटस्य, पटश्च स्वगतरूपादे । तर्कसग्रह ।

कारण भवति । समानकालोत्पत्तौ त्वय नियमो न प्रवर्त्तते । अस्ति च गुणाद् भिन्न गुणि द्रव्यम्, उत्पद्यते च कारणात्कार्यम् अतो जायमान द्रव्य क्षण निर्गुण निष्क्रियञ्च तिष्ठतीति सिद्धान्तोऽङ्गीकरणीयो भवति । एतत्सर्वमभिप्रेत्य केशवमिश्रो ब्रूते—**न गुणगुणिनो' समानकालीनं जन्म । किन्तु द्रव्य निर्गुणमेव प्रथम समुत्पद्यते, पश्चात् तत्समवेता गुणा उत्पद्यन्ते । समानकालोत्पत्तौ तु गुणगुणिनोः समान-सामग्रीकत्वाद् भेदो न स्यात् । कारणभेदनियतत्वात् कार्यभेदस्य इति ।**

ननु कार्यमात्र प्रति परमात्मा निमित्तकारणमस्ति, न तु समवायिकारण तेन परमात्मनि पुनरप्यव्याप्ति प्रसज्यते, परमात्मनो निमित्तकारणत्वस्य भावादिति चेद् ? उच्यते—क्रियागुणवत्समवायिकारणमितिद्रव्यलक्षणमितिसूत्रे '**इती**'ति पदमस्ति । तेन चतुर्थमपि द्रव्यलक्षण गम्यते । तच्च **द्रव्यत्वजातिमत्त्व द्रव्यत्वमिति द्रव्यलक्षणं निस्सरति ।**[1] एतेन परमात्मनि प्रसक्ताऽव्याप्तिर्निराकृता भवति, परमात्मन समवायिकारणत्वस्य असत्त्वेऽपि तस्मिन् द्रव्यत्वजाते सत्त्वात् ।

एव च क्रियागुणवत् समवायिकारणमिति द्रव्यलक्षणमनवद्य भवति ।

**द्रव्यत्वजातावनुमानप्रमाणस्योपन्यासः—**

ननु द्रव्यत्वजातिमङ्गीकृत्येश्वरेऽव्याप्तिमपाकार्षीत् कणाद, अत्र जिज्ञासा जागर्ति यद् द्रव्यत्वमपि मनुष्यत्वादिवदेका जातिरस्तीत्यत्र कि मानम् ? नह्यत्र प्रत्यक्षप्रमाणेन द्रव्यत्वस्य जातित्व साधयितुमर्हति । यतो हि यत्रानुगता प्रतीतिर्जायते तत्रैव जाते. प्रतीतिसाक्षिको व्यवहार प्रवर्त्तते । यथा—वृक्षोऽय वृक्षोऽयमित्यनुगतप्रतीत्या वृक्षत्वमिति जाति । एव मनुष्योऽय मनुष्योऽयमित्यनुगतप्रतीत्या मनुष्यत्वमिति जाति । अत एव **अनुवृत्तबुद्धिः सामान्यस्य** (उप० १।२।३) इत्युक्त शकरमिश्रेण । तथा नहि द्रव्यमिद द्रव्यमिदमित्यनुगतप्रतीतिर्घृतजतुप्रभृतिषु भवति, यया **द्रव्यत्वमिति** जातिर्निष्पद्येत, घृतादिष्वेकैकपदार्थेऽपि सर्वदा नैकाकृतिर्लक्ष्यते, कदाचित्कठिनत्वम्, कदाचिद् द्रवत्वमिति भेदेनाऽनियतत्वात् तस्मादनेकेष्वनुस्यूतबुद्धेर त्त्वाद् 'द्रव्यत्वमि'ति जातिव्यपदेशो न सेत्स्यति ।

---

१. इतिशब्दश्चेत्यादिपरस्तेन सख्यावत्त्व-परिमाणवत्त्व-पृथक्त्ववत्त्व—सयोगवत्त्व-विभागवत्त्वान्यपि द्रव्यलक्षणत्वेन सगृह्यन्ते । उप० १।१।१५

ख—अत्रेतिशब्दो गुणसूचक । तेन सख्यादीना पञ्चाना प्रत्येकस्यापि लक्षणत्व सूचितम् ।

ग—अनेकद्रव्यवत्त्वेन द्रव्यत्वमुक्तम् । वै. सू १।२।११

घ—नित्यमनेकद्रव्यमात्रसमवेत द्रव्यत्वम् । उप. १।२।११

यथा सङ्गिरते रामरुद्रीकार **अनुगताकृतिव्यङ्ग्या मनुष्यत्वादिजातिः, नहि नवसु द्रव्येष्वनुगताकृतिः काचित्सम्भवति घृतादिष्वेकैकपदार्थेऽपि सर्वदा नैकाकृतिरिति** । एतेन प्रत्यक्षप्रमाणेन **द्रव्यत्वमिति** जातिर्न सिध्यतीति चेद्, उच्यते—घृतादिषु **द्रव्यत्वमिति** जातिरस्तीत्यनुमित्या निश्चीयते । तथाहि—द्रव्यनिष्ठा कार्यसमवायिकारणता किञ्चिद्धर्मावच्छिन्ना कारणतात्वात्, घटनिष्ठकार्यतानिरूपितदण्डनिष्ठकारणतावत् । अत्र कार्यस्य सम्बन्धः समवायः, कारणस्य सम्बन्धः तादात्म्यम् । कार्यम्—पृथिवीजलतेजःपवनानां द्वयणुकादयो नित्यगुणाः कर्माणि च । एते सर्वे समवायसम्बन्धेन द्रव्येषूत्पद्यन्ते, द्रव्यं तान् प्रति तादात्म्यसम्बन्धेन कारणं भवति, समवायसम्बन्धेन कार्यं प्रति तादात्म्य-सम्बन्धेन यत्कारणं भवति तदेव समवायिकारणमित्युच्यते । तथा च गुणे गुणोत्पत्तिर्न स्यादिति समवायेन द्व्यणुकप्रभृतिकार्यं प्रति तादात्म्येन द्रव्यस्य कारणत्वमिति कार्यकारणभावस्यावश्यकताऽस्तीति ।

उपरिदर्शितप्रकारेण कार्यकारणभावः स्वीकर्त्तुं न शक्यते । यतो हि कार्यत्वं प्रागभावप्रतियोगित्वरूपम्, एतच्च यदा घटादिकार्याणि मृत्पिण्डादिकारणे कूर्मस्य अङ्गानीवाऽन्तर्लीनानि भवन्ति तदा घटादि-कार्याणां प्रागभावो भवति ।

यस्याभावः स प्रतियोगीति नियमेन घटादि-कार्याणि प्रतियोगीनि भवन्ति-यदा घटादिकार्याणि मृत्पिण्डादिकारणात्कूर्मस्याऽङ्गानीव बहिर्भूतानि भवन्ति तदा घटादिकार्याणां प्रागभावो विनश्यति । यतो हि विनाश्यभावत्वं प्रागभावत्वं भवति । पुनश्च स्व-स्वकारणादाविर्भूतानां कार्याणां ध्वंसो भवति[1] । अत्र **जातस्य ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य चेति** गीतावचनं प्रमाणम् । तथा च कार्यं भाववृत्त्यभाववृत्ति च । तत्र भाववृत्ति कार्यं प्रत्येव द्रव्यं तादात्म्येन कारणं भवति, नत्वभाववृत्तिकार्यं प्रति ।

किञ्च दृश्येते चाम्रादिफलादिषु विलक्षणतेजःसम्पर्काद्रूपरसगन्धस्पर्शानामुत्पादविनाशौ । अत्र रूपरसगन्धस्पर्शाः गुणाः, आम्रादीनां कदाचिद्धरितं रूपम्, कदाचिद्रक्तं पीतं वा, एवं कदाचित्कटुः रसः, कदाचिन्मधुरो रसः, एवमेव गन्धस्पर्शावपि परिवर्त्तेते । तथा च पूर्व-पूर्वरूपरसगन्धस्पर्शोपमर्दनेनोत्तरोत्तररूपादीनामुत्पत्तिः । एतेन गुणस्यापि ध्वंसो न केवलं द्रव्यस्यैव । गुणध्वंसकार्यं प्रति तादात्म्येन द्रव्यं कारणं न भवति ।

एवञ्च प्रागभावप्रतियोगित्वम् (=कार्यत्वम्) अवच्छेदकं न निष्पद्येत, यतो ह्यवच्छेदकः स एव भवितुमर्हति यो ह्यन्यूनातिरिक्तदेशवृत्तिर्भवति । कार्यत्वं

१. जन्याभावत्वं ध्वंसत्वम् । तेन ध्वंसरूपं कार्यं जायते ।

हि भावाऽभाव-कार्यं वृत्ति वर्त्तते । कार्यत्वस्याऽभाववृत्तित्वेनाऽतिरिक्तदेशवृत्तित्व निर्धार्यते । एतदेवाऽभिप्रेत्य ब्रूते रामरुद्रीकार — **द्रव्यकार्यत्वाभाववति ध्वंसेऽपि प्रागभावप्रतियोगित्वस्य सत्त्वेनाऽतिप्रसक्ततया द्रव्यकार्यतावच्छेदकत्वानुपपत्ति-**रिति ।

यद्यपि प्रागभावभिन्नत्वे सति ध्वंसाऽतिरिक्तकार्यत्वाऽवच्छिन्नकार्यं प्रति तादात्म्येन द्रव्य कारण भवितुमर्हति तथापि प्रागभावभिन्नत्वे सति ध्वंसातिरिक्तमिति सन्निवेशेनातिगौरवोऽवच्छेदको भवति ।[1] सभवति लघुधर्माऽवच्छेदके गुरुधर्माऽवच्छेदको नाश्रयणीय । अत **सयोगत्वमिति** लघुधर्मस्याऽवच्छेदकत्व-मङ्गीकृत्य द्रव्यत्व साधयति । अत्राऽनुमिते स्वरूपम्—समवायेन सयोग प्रति तादात्म्येन द्रव्य कारणम्, तत्किञ्चिद्धर्मावच्छिन्नम्, कारणतात्वात् घटगतकार्य-तानिरूपितकपालनिष्ठकारणतावत् ।। अत्र य कश्चिद्धर्म स एव द्रव्यत्व-जातिरूप इति ।

न च सयोगस्य नित्यानित्योभयवृत्तितया सयोगत्व न कार्यताऽवच्छेदकत्व-मर्हति । यतो हि—आकाशात्मनोर्विभुद्वयस्य नित्यसयोगेऽपि **सयोगत्वमिति** धर्मोऽस्ति । किन्तु नहि तत्र किञ्चित्कार्यमुत्पद्यते, क्रियते यत्तत्कार्यमिति व्युत्पत्ते । यच्च कार्यं भवति तदनित्यम्, यन्नित्य तत्कार्यं भवितु नार्हति । अतो विभुद्वयस्य सयोगे सयोगत्वावच्छिन्नसयोगनिष्ठकार्यतानिरूपितस्याऽसत्त्वात् तत्र तादात्म्येन द्रव्य कारण नोपतिष्ठते । यत्र समवायेन कार्यमुत्पद्यते तत्रैव तादा-त्म्येन द्रव्य कारण वर्त्तते । अत सयोगत्व कार्यतावच्छेदक नास्तीति गम्यते ।

एव सति समवायेन विभागत्वावच्छिन्नविभागनिष्ठकार्यतानिरूपिता या तादात्म्य-सम्बन्धावच्छिन्ना द्रव्यनिष्ठा कारणता सा किञ्चिद्धर्मावच्छिन्ना कारणतात्वात् घटवृत्तिकार्यतानिरूपितमृत्पिण्डनिष्ठकारणतावत् । अत्राऽनुमितौ य कश्चिद् धर्म स एव **द्रव्यत्वमिति** जातिरूप । अत्र नित्यविभागो नाम कश्चिन्नास्ति येन तस्याश्रयो नित्य कश्चित् कल्पनीयो भवेत् । विभागो हि सर्वदाऽनित्यवृत्तिरेव, न तु नित्यवृत्ति विभजन विभाग इति व्युत्पत्ते । एतेन घृतजतुप्रभृतिष्वपि **द्रव्यत्वमिति** जातिर्निष्पन्ना भवति ।

एतत्सर्वमभिप्रेत्य व्याचष्टे विश्वनाथः— **ननु द्रव्यत्वजातौ किं मानम् ? नहि तत्र प्रत्यक्षं प्रमाणं घृतजतुप्रभृतिषु द्रव्यत्वाग्रहादिति चेद् ? न कार्यसम-वायिकारणताऽवच्छेदकतया, संयोगस्य, विभागस्य, वा समवायिकारणताऽव-च्छेदकतया, द्रव्यत्वजातिसिद्धे**रिति ।

---

१. प्रागभावभिन्नत्वे सति ध्वंसातिरिक्तकार्यत्वमत्रच्छेदक भविष्यति ।

**द्रव्यशब्दस्य निष्पत्तिः—**

अथ व्याकरणदृशा द्रव्य विचार्य्यते। प्रथम तावद् द्रव्यशब्दस्य निष्पत्तिः प्रस्तूयते।—द्रव्य-शब्दस्य व्युत्पत्तिरित्थ प्रदर्शिता पूर्वाचार्यै—द्रवतीत्यर्थे द्रुधातो कर्त्तरि क्विपि प्रत्यये द्रुर्भवति। अत्र द्रु—वृक्ष, तस्याऽवयवो विकारो वेत्यर्थे **द्रोश्च** (पा० सू० ४।३।१६१) इति सूत्रेण यत्प्रत्यये द्रव्यम्। अत्र द्रव्य खलु फल शाखा वा। यथोक्तम्—**द्रुर्वृक्ष, तस्य विकारोऽवयवो वा द्रव्यम्** (सि० कौ० ४।३।६१) इति। अत्रैतद् व्याख्यानमपि—**फलितस्य वृक्षस्य फलमवयवो विकारश्च। तेनाऽन्यतरस्मिन् प्रत्ययः** (तत्त्व० बो० ४।१।६१) इति। अपि च **शते च** (उ० सू० १।३५) इति **शतधा द्रवतीति शतद्रुर्बाहुलकात् केवलादपि, द्रवत्यूर्ध्वमिति द्रुर्वृक्षः शाखा च।**

किञ्च। द्रव्यञ्च भव्ये (पा० सू० ५।३।१०४) सूत्रेण भव्ये सौम्यादिगुण-युक्तेऽर्थे द्रुशब्दादेव यत्प्रत्यये द्रव्यशब्दो निपातित।

किञ्च। द्रोतु गुणकर्मादिभिराश्रयत्वेन प्राप्तु योग्यमित्यर्थे **अचो यत्** (पा० सू० ३।१।६१) इति सूत्रेण कृता यत्प्रत्ययेन निष्पन्नोऽय द्रव्यशब्द पृथिव्यादिद्रव्यसामान्यस्य वाचको भवति। आह च तत्त्वबोधिनीकार—**द्रव्य-गुण-कर्म इत्यादिषु प्रयुज्यमान-द्रव्यशब्दस्तु गुणैर्द्रूयते** आश्रीयते—इति द्रुधातो. **अचो यत्** (पा० सू० ३।१।६१) इति **यत्प्रत्ययान्त** इति।

किञ्च द्रवणमित्यर्थे **ऋदोरप्** (पा० सू० ३।३।५७) इति सूत्रेण भावेऽप् प्रत्यये सति **द्रव** इति सिद्धो भवति। ततश्च द्रवमर्हतीति विग्रहे **तदर्हति** (पा० सू० ५।१।६६) इति सूत्रेण यत्प्रत्यये द्रव्यशब्दो व्युत्पादितो भवति।

किञ्च द्रवतीति द्रव्यम्। **कृत्यल्युटो बहुलम्** (पा० सू० ३। ३।११३) इति सूत्रस्थबहुलग्रहणाद् **अचो यत्** (पा० सू० ६।१।६१) इति कर्तरि यत्। तच्च द्रव्य क्रियादियोग्यपृथिव्यादिद्रव्यसामान्यरूपमित्यर्थ। अस्य द्रव्यस्य पाणिने-र्बहुषु सूत्रेषु नाम्ना व्यवहारो दृश्यते। यथा—

१ **किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे** ५।४।११
२ **द्रव्यञ्च भव्ये** ५।४।१०४
३ **वस्नद्रव्याभ्या ठन्कनौ** ५।१।५१

**द्रव्यस्य भेद—**

अथ व्याकरणदृशा द्रव्यस्य भेद प्रदर्श्यते। अत्र शास्त्रे द्रव्य द्विविधम्, पारमार्थिक-साव्यवहारिकभेदात्। तत्र पारमार्थिकम्—लौकिकद्रव्यमित्यर्थ। साव्यवहारिकम्—शब्दशास्त्रे व्यवहारोपयोगिमात्रम्। एतादृशो द्रव्यस्य व्यवहार शब्दशास्त्र एव[1], न तु ततोऽन्यस्मिञ्छास्त्रे। यथोक्त हेलाराजेन—**द्रव्यञ्च**

---

१. इदञ्चैतच्छास्त्रमात्रोपयोगि द्रव्यलक्षणम् उद्० ४।१।३।

**द्विविधम्, पारमार्थिकम्, सांव्यवहारिकञ्च** (हेला० वा० प० ३।२।१) इति।

**पारमार्थिकद्रव्यस्य स्वरूपम् :—**

क्रमश एतयोर्विवेचना प्रस्तूयते। तथाहि—प्रथम तावत् पारमार्थिक द्रव्य विचार्यते। अत्र गुणसमुदायो द्रव्यमिति प्रथम. पक्ष—पारमार्थिकद्रव्यस्य लक्षण यदुक्त वैशेषिकै क्रियागुणवद् द्रव्यम्, समवायिकारण द्रव्यमिति तन्न शाब्दिकैरभ्युपगम्यते। यतो हि तेषा नये गुणसमूहात्मकमेव द्रव्य भवति। नहि द्रव्य गुणादिभ्यो बहिर्भूत दृश्यते, अपितु तदात्मकमेव द्रव्यम्। यथा—स्थल-कमलपुष्पे (=गुलाब का पुष्प) प्रत्यक्षतोऽनुभूयते यदत्र सुरभिर्गन्ध, सप्त-विधेषु रूपेषु मध्येऽन्यतम शुक्लम्, रक्तम्, नील पीत वा रूपमस्ति। मृदु स्पर्शस्तत्र, पुष्पस्य कस्यचिदवयवस्य जिह्वाग्रे स्थापने चर्वणे च क्रियमाण ईषत् कषायो रस. प्रतीयते, अङ्गुष्ठाऽङ्गुलिभ्यामाघाते सति पुष्पे ततश्चटचटात्मको ध्वनिरूप शब्द श्रूयते। एतेभ्यो बहिर्भूत किञ्चिदपि नानुभूयते येनाऽतिरिक्त द्रव्य नाम स्वीकरणीय स्यात्। तथा च यतो रूपादिभ्योऽतिरिक्त न किञ्चि-दुपलभ्यते, प्रत्युत रूपादीनेवाऽनुभवामो वयम्, अतो रूपादिगुणसमुदितमेव द्रव्यमस्तीति निश्चीयते। यथाह पतञ्जलि—**अनन्यच्छब्दादिभ्यो द्रव्यम्, न हि शब्दादिभ्योऽन्यदुपलभ्यते। पशोः खल्वपि विशसितस्य पर्णशते न्यस्तस्य नान्यच्छब्दादिभ्य उपलभ्यते।** (म० भा० ५।१।११९) इति। अत एव **स्त्रियाम्** (पा० सू० ४।१।४।१।३) इति सूत्रस्थभाष्येऽपि पतञ्जलिराशङ्कामुद्भाव्य उत्तरयति। **द्रव्ये च भवतः कः सम्प्रत्यय. ? गुणसमुदायो द्रव्यमिति'**। अयमेव वैयाकरणकृतान्त, अवयवानुगत तत्समूहो द्रव्यम् इति च।

वैशेषिकाणामय राद्धान्तोऽस्ति यद्—रूप-रस-गन्ध-स्पर्शादयो गुणा, एते समवायेन द्रव्यमाश्रयन्ते। अत एव गुणोऽस्त्यस्मिन्निति गुणि द्रव्यम्। तथा—हस्तपाद-चक्षु-श्रोत्र-घ्राण-जिह्वा-त्वक्-प्रभृतयोऽवयवा, एते च कस्मिंश्चित्तनुसि समवयन्ति। अत एव समवायी पुमान्, अवयवो-ऽस्त्यस्मिन्नित्यवयवीति च व्यवहार। यत्समवायि, यच्चाऽवयवि, तद् द्रव्य भवति। एतेन गुणादतिरिक्त गुणि द्रव्यम्, एवमवयवादतिरिक्तमवयवि द्रव्यम्। वैशेषिकस्येद मत शाब्दिकैर्नाऽङ्गीक्रियते। शाब्दिका ब्रुवन्ति यद् यथा शब्दादिगुणादतिरिक्त द्रव्य नाऽस्ति, प्रत्युत शब्दादिगुणसमुदायस्य द्रव्य-त्वम्, तथैवाऽवयवाद् भिन्नमवयवि द्रव्य न वर्त्तते प्रतीतिविरोधात्। किन्तु अवयवसमुदायस्यैव द्रव्यत्वम्, न त्ववयवादतिरिक्तमवयवि द्रव्यम्, अवयवाऽवय-विनोरपृथक्त्वसिद्धत्वात्। अत एव **सख्याया अवयवे तयप्** (पा० सू० ५।२।४२) इति सूत्रस्थे भाष्ये समुदायस्याऽवयवो गुणो भवति, नत्ववयविन इति पतञ्ज-लिना सिद्धान्तितम्। यथोक्तम्—**कञ्च प्रत्यवयवो गुणः ? समुदायम**

(म० भा० ५।२।४२) इति। अत्र गुण—अप्रधानम्, न तु शब्दस्पर्शादि। एतेनाऽवयवसमुदायस्य द्रव्यत्व सिध्यति। इदमेव मत कैयटोऽपि विशदीकरोति। तथाहि—**रूपादिसमुदायात्मकद्रव्यस्य गन्धलक्षणो गुण एकान्तो भवतीति**। अत्रैकान्त [1]—अवयव, एकदेश इति। **गन्धस्येदुत्पूतिसुसुरभिभ्यः** (पा० सू० ५।४।१३५) इति सूत्रे आह। नागेशोऽपि सगिरते यदपृथक्सिद्धाऽवयवाना तदनुगतसामान्य-विशेषरूपगुणसमुदायस्य द्रव्यत्वम्। तथाहि तस्य वचनम् **अयुतसिद्धाऽवयवविशेषानुगतसामान्यविशेषरूपगुणसमूहस्यैव द्रव्यत्वम्** (वै० सि० लघु म० पृ० ३४७) इति। अत्राऽयुतसिद्ध—अपृथक्सिद्ध इति। एतेनाऽपि गुणसमूहस्यैव द्रव्यत्वम्, अवयवानुगतसमुदायस्य वा द्रव्यत्वमास्थित शाब्दिकैरिति निश्चप्रचम्।

**गुणसमुदायस्य द्रव्यत्वे केचन दोषाः—**

गुणसमुदायस्याऽवयवसमुदायस्य च द्रव्यत्वे केचन दोषा प्रादुर्भवन्ति, ते समनुक्रम्य समाधीयन्ते। गुणसमुदायस्य, अवयवसमुदायस्य वा द्रव्यत्व स्वीक्रियते चेद् गोरिद कृष्ण रूपम्, घटस्येद रूप रक्तम्, वृक्षस्येय शाखा, इत्यादौ भेदे षष्ठी न भवितुमर्हति, गुणसमुदायस्य द्रव्यत्वात्, अयुतत्वाच्च, अयुतसिद्धावयवाऽनुगतसमुदायस्य च द्रव्यत्वाच्च। वैशेषिकनये तु द्रव्याद् भिन्नो गुणो भवति, अवयवाद् भिन्नोऽवयवीति च। अत एव तन्मते भेदे षष्ठ्युपपद्यत एव। शाब्दिकनये तु यतो गुणसमुदायस्य द्रव्यत्वम्, अयुतसिद्धाऽवयवाऽनुगतस्य वा द्रव्यत्वम्, अतोऽत्र भेदस्याऽसत्त्वान्न षष्ठी समुत्पत्स्यत इति। यथोक्तम्—**गुणस्याऽय भावाद् द्रव्ये शब्दनिवेश कुर्वन् ख्यापयत्यन्यच्छब्दादिभ्यो द्रव्यम्** (म० भा० ५।१।११९) इति।

अतोऽपि शाब्दिकमत न साधु—समानोच्छ्राययोर्लोहकार्पासयो. तुलया गुरुत्व मिमीते चेत् कार्पासस्य तुलाग्रमन्यद्भवति, लोहस्य च तुलाग्रमन्यद्। अत्रैतयो तुलाग्रस्योच्चावचत्वस्य ज्ञान यतो भवति, अतो गुणाद् भिन्न द्रव्यम्, द्रव्याद् भिन्नो गुण इति गम्यते। यथोक्तम्—**इह समाने वर्ष्मणि परिणाहे चाऽन्यत्तुलाग्र भवति लोहस्यान्यत्कार्पासानाम्। यत्कृतो विशेषस्तद्द्रव्यम्** (म० भा० ५।१।११९) इति। अस्मिन् भाष्ये यत्कृत—गुरुत्वकृत इत्यनर्थान्तरम्। तथा च कैयट—**गुरुत्वस्य समवायिकारण द्रव्यमिति रूपादिव्यतिरिक्तद्रव्यसिद्धिः** (प्र० ५।१।११२) इति।

इयमपरा युक्तिर्वैशेषिकमताङ्गीकारे—खड्ग किञ्चिद्वस्तु स्पृशन्नेव द्विधा

---

[1] द्र० एकान्ता अनुबन्धा, अनेकान्ता अनुबन्धा 'अस्यार्थो अवयवा., अनवयवा इति।

करोति, कार्पासो जवेन पोथितोऽपि तस्य वस्तुनो विभाग कर्त्तुं न शक्नोति। किञ्चित्काष्ठादिक कश्चित् पुरुष एकेनैव प्रहारेण च्छिनत्ति, कश्चिद् द्वाभ्यामपि प्रहाराभ्या न च्छिनत्ति। अत्र यतश्छिदिक्रिया जायते, अतो गुणाद् भिन्न द्रव्यम्, द्रव्याद् भिन्नो गुणोऽस्तीति प्रतीयते। यथोक्तम्—**कश्चिदेकेनैव प्रहारेण व्यपवर्गं करोति, कश्चिद् द्वाभ्यामपि न करोति। तत्र यत्कृतो विशेषस्तद् द्रव्यम्** (म० भा० ५।१।११९) इति। अत्र भाष्ये यत्कृत—सामर्थ्यकृत इत्यनर्थान्तरम्।

अतश्चाऽपि वैशेषिकमत द्रढीयो भाति—बदरामलकादीना गुणा विलक्षण-तेजस्सन्निकर्षान्निवर्त्तमाना निविशमानाश्च दृश्यन्ते। तेषु निवर्त्तमानेषु निवि-शमानेषु च सत्स्वपि यस्य तत्त्व न विहन्यते, तद् द्रव्य भवति। अत्र बदरामल-कादे रूपादिषु प्रादुर्भवत्सु विनश्यत्सु च **तदेवेद बदरामलकमिति** प्रत्यभिज्ञा-बुद्धिर्यतो बदरामलकादीनि न जहाति, अतो बदरामलकाम्रादीनि गुणाद् बहि-र्भूतान्येव द्रव्याणि न तु गुणसमुदायरूपाणि गुणसमुदायस्य द्रव्यत्वस्वीकारे विलक्षणतेजसन्निकर्षात् तस्य द्रव्यस्य नाशा**त्तदेवेदमिति** प्रत्यभिज्ञा न स्यात्, तस्य विनाशेनाऽसत्त्वात्। भवति च तदेवेद बदरामलकमिति प्रत्यभिज्ञा। अतो गुणसमुदायस्य द्रव्यत्व नाऽस्तीति सलक्ष्यते। यथोक्तम्—यस्य **गुणान्तरेष्वपि प्रादुर्भवत्सु तत्त्व न विहन्यते, तद् द्रव्यम्, तद्यथा—बदरामलकादीनां रक्तादयः पीतादयश्च गुणाः प्रादुर्भवन्ति, आमलकम् बदरमित्येव भवति** (म० भा० ५।१।११९) इति।

इद चेत्थ व्याख्याति कैयट—**यदि रूपाद्यालम्बनैवामलकादिबुद्धिः स्यात् तदा पूर्वरूपादिविनाशादपूर्वरूपादिप्रादुर्भावाच्च तदेवेदमामलकमिति प्रत्यभिज्ञा-प्रत्ययो न स्यात्, अस्ति च भिन्नाऽऽकारबुद्ध्युत्पत्तिस्तस्मादस्ति रूपाश्रयो द्रव्यम्। भगवद्भाष्यकारकृता द्रव्यशब्दनिरुक्तिरपि वैशेषिकमतमनुसरति।** यथोक्त भगवता **अन्वर्थं खल्वपि निर्वचनम्—द्रव्यम्** (म० भा० ५।१।११९) इति। अत्र गुणसद्रावो द्रव्यमित्यनेन गुणाश्रयो द्रव्यम् इत्युक्त भवति।

इम च भाष्यग्रन्थमित्थ विशदीकरोति कैयट.—**अर्थान्विताद्द्रव्यव्यपदेशा-देव रूपादिव्यतिरिक्त द्रव्य सिद्ध भवति। सद्रूयते—सङ्क्रम्यते—आश्रीयत इति संद्रावः। गुणानामाश्रयो द्रव्यम्** (प्र० ५।१।११९) इति।

**पूर्वोक्तदोषाणामुद्धारः—**

इह पूर्वपक्षितानामेतेषा दोषाणामुद्धारोऽनया दिशा क्रियते। यदुच्यते गुणा-नामाश्रयो द्रव्यमिति, तन्न गुणसमुदायो द्रव्यमित्येव युक्तम्।

गुणसमुदायस्य द्रव्यत्वमिति स्वीकारे ये दोषा उद्भाविता, ते दोषा युक्त्या परिह्रियन्ते। तथाहि—यदुक्त **गुणसमूहो द्रव्यमिति** स्वीकारे घटस्य रूप-

मित्यादौ षष्ठी न स्यात्, गुणसमुदायस्य द्रव्यत्वेन भेदाऽभावात्। तन्न समीचीनम्, अभेदेऽपि भेदबुद्धिं कृत्वा षष्ठ्या उपपत्ते। अत एव पुरुषस्य चैतन्यम्, राहो. शिर, ममेद शरीरमित्यादौ भेदस्याऽसत्त्वेऽपि भेदमादाय षष्ठी भवति। एवमेव गुणसमुदायस्य द्रव्यत्वस्वीकारे वास्तवभेदस्याऽसत्त्वेऽपि तत्र भेद प्रकल्प्य घटस्य रूपमित्यत्र षष्ठी भविष्यतीति। **मृद्घटयोर्वास्तवभेदाऽभावेऽपि लोके मृदो घट इति भेदव्यवहार** इति च तत्र नागेशो ब्रूते।[1]

किञ्च यथा वैशेषिका शुक्लो घट इत्यादौ गुण-गुणिनोर्वास्तव-भेदस्य सत्त्वेऽपि अभेद प्रकल्प्य प्रथमाया साधुत्वमवगच्छन्ति। अन्यथा तन्मते घटस्य शुक्लइत्येव स्यात्, न तु शुक्लो घट इति। तथैव गुणसमुदायस्य द्रव्यत्वे, अवयवाऽनुगतसमुदायस्य च द्रव्यत्वे भेदस्याभावेऽपि भेद प्रकल्प्य षष्ठी साध्वीति वयम्। तथा च यथा भवन्मते भेदेऽभेदस्य शक्ति प्रवर्तिता भवति, तथा मम मतेऽपि अभेदे भेदस्य कल्पनाया तव मा प्रति कथ द्वेषात्मिका मति प्रवर्त्तते, यत सा, अत ज्ञानलवदुर्विदग्ध स्वदोष न पश्यतीतिवत् तव कथन प्रतिभाति। तेनोक्तरीत्या दोषोऽयमुद्भावयितु न शक्यते।

**ययोरेव समो दोषः परिहारोऽपि तादृशः।**
**नैकस्तत्रानुयोक्तव्य· सम्यगर्थविचारणे॥**

किञ्च। यदुक्तम् **इह समाने वर्ष्मणि परिणाहे** इत्यादिभाष्येण तत्रोच्यते —लोहकार्पासयोर्नैकविध गुरुत्वम्, प्रत्युत पृथगेव। यतो हि लोह-कार्पासयोर्गुरुत्वम्, तुलाग्रस्योच्चावचतया प्रतीयते। एतयोर्गुरुत्वस्यैकविधत्वे तुलाग्रस्योच्चावचत्व न स्यात्। दृश्यते च लोहकार्पासयो तुलाग्रमुच्चावचम्। तथा च यतो लोहकार्पासयो तुलाग्रमन्यद्दृश्यते, अतो लोहवृत्ति यद् गुरुत्वम्, ततो भिन्नमेव कार्पासस्य गुरुत्वम्। एतेन गुरुत्वाश्रयो द्रव्यमिति गम्यते। परन्तु नैतदपि मत युक्तम्, गुणसमुदायो द्रव्यमिति मतस्यैव युक्तत्वात् कार्पासापेक्षया लोहस्य गुरुत्वसमुदायस्याऽऽधिक्यादेवाऽस्य तुलाग्रमुन्नतञ्च भवति। एतयो तुलाग्रस्योच्चावचत्वे गुरुत्वसमुदायाऽल्पत्वाऽधिकत्वे एव कारणे भवत। यथाऽल्पगुञ्जापेक्षयाऽधिकगुञ्जाया गुरुत्वसमुदायस्याधिक्यम्, अल्पगुञ्जाया गुरुत्वसमुदायस्य न्यूनत्वञ्च दृश्यते। अतो गुरुत्वाऽनतिरिक्तमेव द्रव्यत्वमेतयो, न तु गुरुत्वाद् भिन्न द्रव्यम्, द्रव्याद्भिन्न गुरुत्वञ्च भवति। यथोक्तम्— **अतिरिक्तस्यैकगुरुत्वाश्रयस्याऽभावेऽपि दशगुञ्जाभिरल्पगुञ्जाभ्योऽधिकगुञ्जाभ्यश्च नामोन्नामोऽनेकगुरुत्वैरेव दृष्ट·, तद्वदत्राऽपि तैरेव द्रव्याऽनतिरिक्तैस्त-**

[1] उद्० ५।१।११९ इति।

**दुत्पत्तौ न तदतिरिक्तद्रव्यसिद्धाविद मानम्**' (उद्० म० भा० ५।१।११६) इति।

किच। अवयवादतिरिक्तमवयवि द्रव्यमङ्गीक्रियते चेत् तन्तुभ्य पटस्य गुरुत्वाधिक्य स्यात्, अवयवावयविनोर्भिन्नपरिमाणत्वादतिरिक्तत्वाच्च। परन्तु नैव दृश्यते, अतोऽवयवानुगत समूह एव द्रव्यम्, न तु ततो भिन्नमवयवि द्रव्यमस्तीति। तथा च यत्कृतो विशेष इति भाष्यस्य कार्पासाल्लोहस्याऽधिक-गुरुत्वसमूहकृतो विशेष इत्यर्थ। एतेन गुरुत्वसमुदायस्यैव यथा द्रव्यत्वम्, तथैव रूपादिसमुदायस्यैव द्रव्यत्वमस्तीत्यवधेयम्। यथाह नागेश—**किञ्चैव पटादौ सूत्रादिभ्योऽधिकगुरुत्वाद्युपलम्भापत्ति। तस्माद्यत्कृतो विशेष इति भाष्यस्य कार्पासादधिकगुरुत्वसमूहकृतो विशेष, तत्समूहो द्रव्यमित्यक्षरार्थः। एवञ्च तुल्यन्यायाद्रूपादिसमूह एव द्रव्यम्** (उद्० म० भा० ५।१।११६) इति।

किञ्च। यदुक्त गुणसमुदायस्य द्रव्यत्वमिति स्वीकारे पूर्वरूपस्य विनाशेन सह द्रव्यस्य विनाशात्तदेवेद बदरामलकमि'ति प्रत्यभिज्ञाया उपपत्तिर्न स्यादिति तदपि न समीचीनम्। गुणसमूहेषु यस्य कस्यापि गुणस्य विनाशेऽपि बहुगुण-समुदायस्याऽक्षतत्वेन भूयसा व्यपदेशवत् प्रत्यभिज्ञाया उपपत्ते। अत एव यस्य कस्यचिदवयवस्याऽपगमेऽपि भूयसामवयवाना सत्त्वात्तदेवेदमिति व्यवहारो भवति न ततोऽन्यद् इति व्यवहार इति। यथा—छिन्ने पुच्छे श्वैवायम्, नाश्वो, नापि गर्दभ इति। एतन्मूलिकैवेयम् **एकदेशविकृतमनन्यवदि**ति परिभाषा स्मर्यते। तथा च यदुक्त कैयटे **तस्य भावस्त्वतलाविति** सूत्रे **गुण-सन्द्रावो द्रव्यमिति** भाष्य व्याचक्षाणेन गुणानामाश्रयो द्रव्यमिति तत्राश्रयशब्देन समूहो ग्राह्य। अस्य भेद प्रकल्प्यैवाऽऽश्रयत्वमिति व्याख्यायि कैयटेन। तथा चाह नागेश—**समूहस्य भेदकल्पनयैव चाश्रयत्वव्यवहारोऽपि** (उद्० ५।१।११६) इति। अत एव **शिलापुत्रकस्येद शरीरम् राहो शिरः** इति सगच्छते।

किञ्च। समवायस्य सम्बन्धत्व वैयाकरणा न स्वीकुर्वन्ति। किन्तु शब्द-शास्त्रे योग्यतारूप, कार्यकारणभावरूपश्च सम्बन्धोऽस्तीति शाब्दिकाना निश्चप्रच मतम्। अनयोर्यदाऽध्यासो भवति तदा तादात्म्यमेवास्तीति। शब्द-शास्त्रे यत्र यत्र समवायस्य सम्बन्धत्वेन व्यवहारो दृष्टिपथमायाति तत्र तत्र तादात्म्यमेव सम्बन्ध इति शाब्दिकाना राद्धान्त। तथा च ब्रूते भर्तृहरि—

**आत्मान्तरस्य येनात्मा तदात्मैवाऽवधार्यते। ३।३।६**

अपि चाह हेलाराज—**द्विविधः सम्बन्ध-पदार्थो व्यवतिष्ठते, योग्यता कार्यकारणभावश्च। अध्यासस्तु द्वयोरपि परमार्थ एव, न पृथग्रूपः** (हेला० ३।३।१)। एतेनाऽपि गुणसमुदायस्य, अवयवसमुदायस्य च द्रव्यत्वम्, तादात्म्या-दिति गम्यते। अस्य विशदीकरण समवायपरिच्छेदे भविष्यति।

एवञ्च गुणसमुदायस्य द्रव्यत्वस्वीकारादेव **द्रव्ये च भवतः कः सम्प्रत्ययः ? गुणसमुदायो द्रव्यमिति स्त्रियाम्** (म० भा० ४।१।३) इति सूत्रस्थभाष्यम्, एवमवयवसमुदायस्यैव द्रव्यत्वमस्तीति स्वीकारादेव **क च प्रत्ययवयवो गुणः? समुदायम्** इति **सख्याया अवयवे तयप्** (५।२।४२) इति सूत्रस्थभाष्य च सङ्गच्छते ।[1]

**साख्ययोगादिदर्शनदिशा शाब्दिकमतस्य समर्थनम् :—**

अथ प्रसक्तानुप्रसक्त साख्या योगाश्चाऽपि द्रव्य-विषये शाब्दिकमतमनुप्रविष्टा इत्युच्यते ।

अमी खल्वपि गुणसमुदायस्य द्रव्यत्वम्, अवयवानुगतस्य तत्समूहस्य च द्रव्यत्व प्रतिपद्यन्ते । त एवमाहु—शब्दस्पर्शरूपरसगन्धाना तन्मात्राणा कार्याणि पञ्च स्थूलभूतानि । अत एव तानि स्थूलभूतानि शब्दस्पर्शाद्यात्मकान्येवोपलभ्यन्ते । नहि पृथिव्यादौ शब्दस्पर्शाद्यतिरिक्त किञ्चिदुपलभ्यते । **सत्त्वरजस्तमसा साम्यावस्था प्रकृतिः, प्रकृतेर्महान्, महतोऽहङ्कारः, अहङ्कारात् पञ्चतन्मात्राण्युभयमिन्द्रियम्, तन्मात्रेभ्यः स्थूलभूतानि, पुरुष इति, पञ्चविंशतिर्गणः** (सा० सू० १।६१) इति सूत्रे व्याचक्षाण आह—**अयञ्च पञ्चविंशतिको गणो द्रव्यरूप एव** (सा० प्र० भा० १।६१) इति । अपि च **किमेषा सूक्ष्मरूपम् ? तन्मात्रमिति भूतकारणम् । तस्यैकोऽवयव. परमाणु सामान्य-विशेषात्माऽयुतसिद्धावयवभेदानुगतः समुदाय इत्येवं सर्वं तन्मात्राण्येतत्तु** (व्या० भा० ३।४) इति योगसूत्रभाष्यकारोप्यत्रानुकूल ।

किञ्च । यथा गुणादतिरिक्त न द्रव्यमस्ति । तथाऽवयवादतिरिक्तमवयव्यपि नास्त्येव । किन्त्ववयवाऽनुगतस्य तत्समुदायस्यैव द्रव्यत्वम् । भूयश्च स एवाह—**अयुतसिद्धावयवाऽनुगतः समूहो द्रव्यमिति पतञ्जलिः** (व्या० भा० ३।४४) इति । इदमेव मत पञ्चीकरणप्रक्रियया वेदान्तिनोऽप्यनुमन्यन्ते ।[1]

किञ्च व्रीहिषु प्रोक्षणादिना सस्काराख्योऽशो जायते । स चाश समुदायस्य व्रीहेरवयवो भवति । एतेनाऽवयवानुगत समूहो द्रव्यमिति सिद्ध भवति । यथोक्त वाचस्पतिमिश्रेण—**व्रीहीणां खलु प्रोक्षणेन संस्कारजन्योऽशो यथा जन्यते, नैव ब्रह्मणि कश्चिदशः क्रियाधेयोऽस्ति, अनवयवत्वाद् अनशत्वाच्च** (भामती ब्र० सू० १।१।४४) इति । अत्र सस्कारजन्योऽश—अवयव , तत्समूहस्य व्रीहेर्द्रव्यत्वम् ।

---

१ अपि च कि यत्तत्सास्नालाङ्गूल-ककुद-खुर-विषाण्यर्थं रूप स शब्द ? द्रव्य नाम तद् (म भा पस्पशा०)

१ पञ्चदशी १।२७, वेदान्तपरिभाषा, पृ० १०५, वेदान्तसार, पृ० ४६-५०

**साव्यवहारिकद्रव्यस्योपन्यासः—**

अथ शाब्दिकदिशा साव्यवहारिक द्रव्य व्याख्यायते—अत्र साव्यवहारिक-द्रव्यमिति पदेन शब्दशास्त्रमात्रोपयोगि द्रव्य गृह्यते-इत्युक्तचरम् । तच्च लिङ्ग-सख्याकारकाऽन्वितमिति शाब्दिकैरुच्यते ।[1] अत एव कृदभिहितो भावश्च द्रव्य भवति । यथा—**भावे** (पा० सू० ३।३।१८) इति सिद्धावस्थापन्ने धात्वर्थे वाच्ये धातोर्घञ् स्यात् । पाक, पाकौ, पाका. । **तस्य भावस्त्वतलौ** (पा० सू० ५।१।११९) इति प्रकृतिजन्यबोधे प्रकारीभूतो (=विशेषणीभूत) भाव । गोर्भावो गोत्व गोतेत्यादि । अन्यथा कृदभिहितभावस्य, तद्धिताभिहित-भावस्य च गुणसमुदायत्वाऽभावाद् द्रव्यत्व न स्यात् । द्रव्यत्वाभावे पाक पाकौ पाका इत्यादौ लिङ्गसख्याकारकाणामन्वय कुत्र स्यात् , न हि लिङ्गादि द्रव्यभिन्ने कुत्रचिदन्वेतुमर्हति, गुणाना परार्थत्वादसम्बन्धः समत्वाच्च । अत कृदभिहित-भावाना तद्धिताभिहितभावानाञ्च द्रव्यत्वमातिदेशिकमस्ति । यथोक्त पतञ्ज-लिना—**यदि गुणसमुदायो द्रव्यम्, का गतिर्ये एते भावा कृदभिहिता, तद्धिता-भिहिताश्च—चिकीर्षा, गोतेति । अथ मतमे तु—कृदभिहितो भावो द्रव्यवद् भवतीति । स्त्रीत्वमपि स्त्रीत्वेनाऽभिहित द्रव्यवद् भविष्यतीति,** (म० भा० ४।१,३) इति । अपि चाह कैयट —**यथा घटादिद्रव्य घटादिभि. शब्दैर्लिङ्ग-सख्या कर्मादिशक्तियुक्तमभिधीयते,** तथा **पाकादिभि शब्दै पाकादिको भावः** (प्र० ६।२।१३९) इति । अपि च यथा—**द्रव्य लिङ्गसंख्यासाधनैः सम्बध्यते, तथा घञाद्यभिहितो भाव । अव्यय[2] कृदभिहितस्तु भावो लिङ्ग-संख्यासाधन सम्बन्धाऽभावात्साध्यस्वभाव एव प्रतीयते, न तु सिद्धस्वभाव इति क्रियावदेवासौ भवतीति, न तु द्रव्यवदिति** (प्र० ५।४।१९) इति ।

गुणकर्मसामान्यानामपि साव्यवहारिक द्रव्यत्व प्रतिपन्नाः शाब्दिका । एव हि ते प्राहु—सर्वनाम्ना यत्परामृश्यते तद् द्रव्य भवति । तथा च गुणक्रियासामान्या-

---

१ लिङ्ग-सख्या कारकान्वित हि द्रव्य भवति । उद्० १।२।५३ अपि च म० भा० २।२।१९, ३।१।६७, ५।४।१०,

२ अव्ययकृदभिहितो भावः—"समानकर्तृकयो पूर्वकाले" (पा० सू० ३।४।२१) इति । समानकर्तृकयोर्धात्वर्थयो पूर्वकाले विद्यमानाद्धातो. क्त्वा स्यात् । क्त्वा तु अव्ययकृतो भाव इत्यस्योदाहरणम्—भुक्त्वा व्रजति, द्वित्वम-तन्त्रम्, तेन स्नात्वा भुक्त्वा पीत्वा व्रजति । २ "अलखल्वो प्रतिषेधयोः प्राचा क्त्वा" (पा० सू० ३।४।२८) इति । प्रतिषेधार्थयोरलखल्वोरुपपदयो क्त्वा स्यात् । यथा —अल दत्त्वा, पीत्वा खलु इति । ३ "आभीक्ष्ण्ये णमुल् च" (पा० सू० ३।४।२२) इति । पौन पुन्ये द्योत्ये पूर्वविषये णमुल् स्यात् क्त्वा च । यथा—स्मार स्मारम् स्मृत्वा-स्मृत्वा, पाय पायम्, पीत्वा पीत्वा, भोज

न्यपि द्रव्याण्येव । यतो हि अस्येद रूपम्, मधुरोऽय रस , चैत्रस्येय गतिक्रिया, गोरिद गोत्वमित्यादय सर्वनाम्ना परामृश्यन्ते । प्रदीपकारोप्याह—'**यत्किञ्चिदिद तदिति सर्वनाम्ना परामर्शयोग्य वस्तु तद् द्रव्यत्वेन विवक्षितम् । तेन जातिगुणक्रिया अपि गृह्यन्ते** (पा० सू० प्र० ५।३।५४) इति[१] ।

इममेवार्थं भर्तृहरि कारिकया निबध्नाति—

**वस्तूपलक्षण यत्र सर्वनाम प्रयुज्यते ।**
**द्रव्यमित्युच्यते सोऽर्थो भेद्यत्वेन विवक्षित ॥** वा० प० ३।४।३

**शब्दस्य द्रव्यत्वम् :—**

किञ्च । येन यत्कार्य भवति, तत्कार्य द्रव्यमेव, यथा घटः पट , रुचकादि । यस्य कार्यस्य यत्कारण भवति, तदपि कारण द्रव्यमेव । यथा—कपाल , तन्तु सुवर्णादि । अत उपादानोपादेययोर्द्रव्यत्वेन ग्रहणात् । अत एव मृदादेरुपादानकारणस्य, घटादेरुपादेयस्य च द्रव्यत्वमिति लोकव्यवहार. । एवमेव शास्त्रमपि कार्य भवति, अस्योपादान कारण वर्णा', वर्णसघातस्य शास्त्रत्वात् । एतेन शब्दस्याऽपि द्रव्यत्व सिध्यति । यथोक्त तैत्तिरीये प्रातिशाख्ये—"**तत्र शब्दद्रव्यमुदाहरिष्याम.** (१०।३) इति । **तेषां वर्णाना सघातप्रयोगः शास्त्रमित्युच्यते । तस्मिञ्छास्त्रे यानि कार्याणि भवन्ति तान्युदाहरिष्याम इति सूत्रार्थः । तत्र यद्यत् कार्यं येन-येन क्रियते तत्तस्य द्रव्यमित्युच्यते । यथा घटस्य मृदिति । तथा शास्त्रस्य वर्णा इति ।** अत्रैव नागेशोऽप्याचष्टे—**वर्णस्तु गुणरूपत्वाद् द्रव्यरूपत्वाद्वेति तपरस्तत्कालस्य** (पा० सू० १।१।७०) इति सूत्रस्य महाभाष्योद्द्योते ।

---

भोजम्, भुक्त्वा-भुक्त्वा, श्राव श्रावम्, श्रुत्वा-श्रुत्वेत्यादि । ४ "अव्ययेऽयथाभिप्रेताख्याने कृञ क्त्वाणमुलौ (पा० सू० ३।४।५९) इति । अयथाभिप्रेताख्यान नाम अप्रियस्योच्चै प्रियस्य च नीचै कथनम् । यथा—उच्चै कृत्य उच्चै कारमप्रियमाचष्टे । नीचै कृत्य नीचै कार प्रिय ब्रूते । ५ "स्वादुमि णमुल्" (पा० सू० ३।४।२६) इति । स्वाद्वर्थेषु कृञो णमुल्स्यादेककर्तृकयो पूर्वकाले । पूर्वपदस्य मान्तत्व निपात्यते । यथा—स्वादुकार भुङ्क्ते । ६ "ड्वित क्त्रि" (पा० सू० ३।३।८८) इति । अय भाव एव स्वभावात् । यथा—पाकेन निर्वृत्त पक्त्रिमम्, वापेन निर्वृत्त—उप्त्रिमम् इति । ७ "तुमुण्ण्वुलौ क्रियाया क्रियार्थायाम्" (पा० सू० ३।३।१०) इति क्रियार्थाया क्रियायामुपपदे भविष्यत्यर्थे धातोरेतौ स्त' । मान्तत्वादव्ययत्वम् । यथा—कृष्ण द्रष्टु याति । अत्र द्रष्टुमव्ययकृत्साध्यमिति । एवमेवाऽन्यान्यप्युदाहरणानि बोद्धव्यानि ।

१ इद कैयटस्य वचन बहुत्र दृश्यते—द्र० प्र० ५।३।७४, १।१।३८, स्वोप० टी० १।६४, प्रकीर्ण प्र० टी० ३।१।२, ३।१।१३, ३।१।५१, ३।४।३, ३।५।३, ३।११।१, ३।१४।३४७,

किञ्च। **उच्चैरुदात्त** (पा० सू० १।२।२६), **नीचैरनुदात्त.** (पा० सू० १।२।३०), **समाहारः स्वरित** (पा० सू० १।२।३१), इत्येतै सूत्रै पाणिनिरुदात्तत्वाऽनुदात्तत्वस्वरितत्वानि धर्मान् आचष्टे । एते च धर्मा केषामिति चेदुच्यते—वर्णानामिति । वर्णा कण्ठताल्वादिस्थानेभ्य निस्सरन्त उदात्तत्वादीन् धर्मानभिव्यञ्जयन्ति । तथा च वर्णा उदात्तत्वानुदात्तत्वस्वरितत्वानामधिकरणम् । यदधिकरण भवति, तद् द्रव्य भवति । नहि द्रव्यमन्तरा किमप्यन्यदधिकरण भवितुमर्हति । एतेषामधिकरण वर्णसघात शब्द । न चोदात्तत्वानुदात्तत्वस्वरितत्वादयो धर्मा वर्णसघात शब्द वर्ण वा विहाय कुत्रचित् स्थातुमीशा । एतेनोदात्तत्वाऽनुदात्तत्वस्वरितत्वानामधिकरणत्वाच्छब्दस्य वर्णस्य वा द्रव्यत्व सिध्यति । यथाह पतञ्जलि—**द्रव्य हि लोकेऽधिकरणमित्युपचर्यते** (म० भा० २।३।५०) । अत्र नागेशोऽपि सगिरते—**तारत्वादयो गुणाः शब्दनिष्ठा॰, तदाश्रयत्वाच्छब्दस्य द्रव्यत्वम्**" (वै० सि० म० पृ० २१८) इति ।

किञ्च । शब्दशास्त्रे स्फोटात्मकशब्द एव ब्रह्म । ब्रह्म च निखिलजगतो विवर्त्तरूपस्य कारणम् । तथा च यतो जगतो द्रव्यत्वम्, अतो ब्रह्मणोऽपि द्रव्येण भाव्यम् कार्यकारणयोरभेदात् । नहि कारण कार्याद् भिन्न तत्त्व भवति, प्रत्युत कार्यस्य यत्तत्त्व भवति, तदेव कारणस्यापि । यथोक्त भर्तृहरिणा—

> **अनादिनिधन ब्रह्म शब्दतत्त्वं यदक्षरम् ।**
> **विवर्त्ततेऽ[1]र्थभावेन प्रक्रिया जगतो यत.** ।। (वा० प० १।१) इति ।

किञ्च । द्रव्यरूपस्याऽस्य शब्दब्रह्मणो गुणो ध्वनि. । तथा च ध्वनिगुणात्मकत्वेनाऽपि शब्दब्रह्मणो द्रव्यत्वमवगम्यते । यथोक्त पतञ्जलिना **स्फोटः शब्दः । ध्वनि. शब्दगुणः** (म० भा० १।१।७०) इति ।

किञ्च । यथा चैत्रमैत्रादि-सज्ञा कस्यचिद्द्रव्यस्यैव भवति, तथा टिघुभादि-

---

१. क—तदैक्षत बहु स्या प्रजायेय-छा० ६।२।३ ।

ख—यदैकस्य बहुत्व सकल्पयति, तदैतद् जगद् विवर्त्तते । अत्रैकस्य तत्त्वादप्रच्युतस्य भेदानुकारेणाऽसत्यविभक्ताऽन्यरूपोपग्राहिता विवर्त्त । स्वप्नविषयप्रतिभासवत् । वा० प० स्वोपज्ञटी० १।१

ग—सतत्त्वतोऽन्यथा प्रथा विकार इत्युदीरित॰ ।
अतत्त्वतोऽन्यथा प्रथा विवर्त्त इत्युदाहृतः ।।

उत्तररामचरिते द्वितीयस्मिन्नङ्के ब्रह्मणस्तादृश विवर्त्तमितिहास रामायण प्रणिनाय विधुभूषणगोस्वामिना उद्धृत पृ. ९७ ।

सञ्ज्ञा अपि कस्याश्चिद् वर्णात्मिकाया शब्दव्यक्तेरेव । अत एव **कः पुनः प्रातिपदिकार्थः ? द्रव्यम्** (म० भा० ५।३।५५) इति भाष्यम् । एतेन यथा प्रातिपदिकसञ्ज्ञाया प्रातिपदिकार्थो द्रव्यम्, तथा टि-घु-भादिसञ्ज्ञाया अप्यर्थो द्रव्यमेवेति निश्चीयते । अत एव तत्त्वबोधिनीकृता—

**यावद्द्रव्यभाविन्यः सञ्ज्ञाः** (तत्त्व० बो० ३।२।१७९) इति सञ्ज्ञाया द्रव्यमर्थं, अर्थस्य च सञ्ज्ञा भवतीति तात्पर्यं प्रादर्शि ।

किञ्च । यथा शब्देन किमपि द्रव्यमभिधीयते, तथा शब्देन शब्दोऽप्यभिधीयते । यथा घटेन कम्बुग्रीवादिमद्व्यक्तिरभिधीयते तथा शब्देन शब्दोऽपि । यथा—शब्दं कुरु, स एव प्राह, शब्दकार्यं माणवक । एतेनाऽपि शब्दस्य द्रव्यत्वमवगम्यते । यथोक्तम्—"यो य शब्देनोच्यते स सर्वोऽपि द्रव्यधर्मयुक्त , कश्चिन्मुख्यतद्धर्मयुक्त, कश्चिदुपचरिततद्धर्मयुक्त इति' (वै० सि० म०, पृ० ११०९) इति ।

**द्रव्यस्य पर्यायाः शब्दाः—**

अथ शब्दशास्त्रे व्यवहृता द्रव्यस्य पर्यायाः प्रस्तूयन्ते । तथाहि—शब्दशास्त्रे द्रव्यस्य बहूनि पर्यायवचनानि दृश्यन्ते । तेषामर्थो विचार्यते । तत्र प्रथम विशेष्यम्—विशिष्यते पृथक् क्रियते गुणादिभिर्यत्तद् विशेष्यम् । शब्दोऽयं विपूर्वात् **शिष्लृ** विशेषणे इति धातो **ऋहलोर्ण्यत्** (पा० सू० ३।१।१२४) इति सूत्रेण ण्यति प्रत्यये सति सिध्यति । अस्यार्थो द्रव्यमस्ति । यथोक्त नागेशेन **विशेष्यमेव च द्रव्यम्** (उद्० पस्पशा०) इति, **द्रव्यशब्देन विशेष्यभूत एव सत्त्वभावापन्नोऽर्थ उच्यते** इति । **तस्य भावस्त्वतलौ** (पा० सू० ५।१।११९) इति सूत्रे कैयटोऽपि ब्रूते—

सत्त्वम्—सीदन्त्यस्मिञ्जातिगुणक्रिया इति व्युत्पत्ते. सदेरौणादिके त्वप्रत्यये सति सत्त्वम् ।[1] एवञ्च सत्त्वम्=द्रव्यमर्थ । यथोक्तम्—**अयं सत्त्वशब्दोऽस्त्येव द्रव्यपदार्थक. । तद्यथा—सत्त्वमय ब्राह्मणः, सत्त्वमिय ब्राह्मणी**'ति (म० भा० १।४।५७) इति । प्रयुङ्क्ते चाऽऽचार्योऽत्रार्थे—**चादयोऽसत्त्वे** (पा० सू० १।४।५७) इति ।

वस्तु[2]—वसन्ति गुणादयो विशेपणत्वेनाऽऽश्रय प्राप्नुवन्ति यस्मिन्निति

---

१ नागेशस्तु सदेरौणादिको 'व' प्रत्यय इत्याह । तन्मतेन 'सद्+व' सत्त्व न भवति । किन्तु 'सद्व' इति भवति । अत सत्त्वमित्यस्य सिद्ध्यर्थं सदेरौणादिक 'त्व' इति भाव्यम् । तेन सद्+त्व=सत्त्वमिति । द्र० उद्० ४।१।४४ ।

२ "वसे· तुन्" (उ० सू० १।७५) इत्यनेन तुनि प्रत्यये (वस्+तुन्) वस्तुशब्दो निष्पद्यते ।

व्युत्पत्तेर्द्रव्य वस्तु ।

कारकम्—करोति कर्तृत्वादिव्यपदेशात्क्रिया निर्वर्त्तयतीति । अस्य द्रव्यमर्थः । यथोक्तम्—**कारकशब्देन शक्त्याधारो द्रव्यमित्युच्यते** (प्र० २।१।१) इति । अपि च **शक्तिशक्तिमतोश्चाऽभेदात् कारक द्रव्य भवति ।**[1]

आधार.[2]—आध्रियन्ते गुणाऽऽदयोऽस्मिन्नित्याधार स च द्रव्यम् । यथोक्तम्—**कर्मशक्त्याधारो द्रव्यम्** (प्र० ३।१।६७) इति ।

अधिकरणम्[3]—अधिक्रियन्ते समवायेन गुणादय आश्रयन्ते यस्मिन्निति व्युत्पत्तेर्द्रव्यमर्थ । यथोक्तम् **द्रव्य हि लोकेऽधिकरणमित्युपचर्यते** (म० भा० २।३।५०) इति ।[4] पाणिनीयाष्टके खल्वपि द्रव्यार्थे प्रयोग —**विप्रतिषिद्धञ्चानधिकरणवाचि** (पा० सू० २।४।१३) इति । **अधिकरणैतावत्त्वे** (पा० सू० २।४।१५) इति च ।

सख्येयम्—सख्यातु योग्य सङ्ख्याधर्मि तदपि द्रव्यम् । यथोक्तम्—**संख्येयं द्रव्यं प्रातिपदिकार्थोऽनया संख्यया विशेष्य परिच्छेद्यतया बोधनीयम् सख्ययाऽव्ययासन्नादूराधिकसंख्याः सख्येये** (पा० सू० २।२।२५) इति सूत्रस्य व्याख्यायाम् (उद्० २।२।२४) इति ।

आत्मा—अततीत्यात्मा । अस्यार्थो द्रव्यम् । यथोक्तम्—

**आत्मा वस्तु स्वभावश्च शरीर तत्त्वमित्यपि ।**
**द्रव्यमित्यस्य पर्यायास्तच्च नित्यमिति स्मृतम् ॥** वा० प० ३।२।१

यथाह पतञ्जलिरपि—**एको ह्ययमात्मा उदक नाम** (म० भा० २।१।१) इति । अत्र यथैकस्यैवोदकात्मनो द्रव्यस्य शीतोष्णस्पर्शगुणभेदादन्यदिद शीतमन्यदिदमुष्णमिति नानात्व-व्यवहार प्रवर्त्तते, तथैवैकस्य विभोरात्मनो नानाविधोपाधिभेदाद् गौरयम्, मनुष्योऽयमित्यादयोऽपि व्यपदेशा जायन्त एवेति निष्कर्ष ।

**तत्त्वम्**—तनोति सर्वमित्यर्थे (तन्+क्विप्+तुक् च) तदिति । **सर्व खल्विदं ब्रह्म ब्रह्मैवेदं सर्वमिति** श्रुतेस्तदो=ब्रह्मणो भाव इति व्युत्पत्तौ

१. वाचस्पत्यम् ।

२. अध्यायन्यायोद्यावसहाराश्च (पा० सू० ३।३।१२२) इति सूत्रस्थेन अवहाराऽऽधारावायानामुपसख्यानम् इति वार्त्तिकेन घञ् प्रत्यये सति "आधार" इति पद निष्पन्न भवति ।

३ करणाऽधिकरणयोश्च (पा० सू० ३, ३।११८) इति सूत्रेण अधिकरणे ल्युट् ।

४. अपि च द्र० म० भा० २।१।१, प्र०२।४।१,

**तस्य भावस्त्वतलौ** (पा० सू० ५।१।११९) इति सूत्रेण **त्व** प्रत्यये (तत्+त्व) तत्त्व[1]मिति । अस्यार्थो द्रव्यमेव परमात्मा ।

साधनम्[2]—साध्यतेऽनेनेति व्युत्पत्तौ तदिति । अस्यार्थो द्रव्यम् । यथोक्तम्—**गुणसमुदाय साधनम्** (म० भा० ३।२।११५) इति, **साधन वै द्रव्यमेव** (म० भा० ५।३।५५) इति च । इदमेव मत पुष्णाति कैयट—**शक्तिशक्तिमतोरभेदविवक्षया साधनशब्देन शक्तिमन्ति द्रव्याण्युच्यन्ते** (प्र० ३।२।११५) इति । अत्र साधनम्=कारकम् । तच्च कर्तृकर्मादिरूपम् । कर्तृकर्मादीनामन्वयो द्रव्य एव भवति । एतेनैतेषा पराश्रयत्व सिध्यति । यस्य यत् पारतन्त्र्यम्, तस्य तच्छक्तिरूप भवति । शक्तिश्च नहि द्रव्य विहायान्यत्र कुत्रचिद् व्यवतिष्ठते । किन्तु द्रव्य एव । अत शक्तिशक्तिमतोरभेदसम्बन्ध इत्युक्त कैयटेन । अस्य मतस्य पोषण हेलाराजस्य वाक्येनाऽपि भवति । तथाहि—**पारतन्त्र्यञ्च शक्तिलक्षणमिति क्रियाऽपि द्रव्यपरतन्त्रा शक्तिरिति व्यपदिश्यते** (हेला० ३।६।१) इति । इदमेव मत भर्तृहरिकारिकयाऽपि सिद्ध भवति—

**स्वाश्रये समवेतानां तद्वदेवाश्रयान्तरे ।**
**क्रियाणामभिनिष्पत्तौ सामर्थ्यं साधनं विदुः ॥** (वा० प० ३।७।१)

अत्र सामर्थ्यम्=शक्ति । साधनम्=कारकशक्ति । तथा च साधन सामर्थ्य विदुरित्यन्वयेन स्पष्टीभवति । एतेन साधनम्=सामर्थ्यम्—साधनरूपा या शक्ति तदभिन्न सामर्थ्यमिति बोध ।

व्यक्ति[3]—व्यज्यतेऽनया जातिरिति व्युत्पत्तेर्व्यक्तिर्द्रव्यम् ।

शरीरम्[4]—शृणाति हिनस्ति स्वोपभोगाय परान् पीडयतीत्यर्थे शीर्यत इत्यर्थे वा ।

अयमत्र सार—वैशेषिको द्रव्य गुणाश्च पृथक् पदार्थ मन्यते । अत्र द्रव्य समवायिकारण भवति । गुणकर्मसामान्यानि द्रव्ये समवयन्ति । एवमवयवादतिरिक्तमवयविद्रव्यमस्तीति स गिरते । अवयवा अप्यवयविनि द्रव्ये समवयन्ति । अत एव समवायि द्रव्यमित्युच्यते । एव वैशेषिक शब्दस्य गुणत्वमेव ब्रूते । अपि च शाब्दिकाभिमत द्रव्य वैशेषिको नाङ्गीकरोति ।

---

१ वा० प० ३।२।१ ।

२ करणाऽधिकरणयोश्च (पा० सू० ३।३।११७) इति सूत्रेण करणे ल्युटि (साध्+—ल्युट्) साधनमिति शब्दो निष्पन्नो भवति ।

३. व्यक्त्याकृतिजातयस्तु पदार्थ. न्या० सू० २।२।६ । एतेन पदार्थत्वव्याप्य व्यक्तेर्द्रव्यत्वन् ।

४ कॄ-शॄ-पॄ-कटि-पटि-शौटिभ्य ईरन् (उ० सू० ४।७०) इति शर्त्तेरीरन् ।

वैयाकरणो गुणादतिरिक्त गुणि द्रव्यम्, अवयवाद् भिन्नमवयवि द्रव्य च न स्वीकुरुते। परन्तु गुणसमुदायो द्रव्यम्, अवयवसमुदायो द्रव्यमित्येवातिष्ठते। अत्र योग्यतारूप, कार्यकारणभावरूपश्च सम्बन्ध । अनयोराध्यासे तादात्म्यमेव सम्बन्धोऽस्ति ।

**स्फोटः शब्दः, ध्वनिः शब्दगुणः** इति भाष्यम्। तेन शब्दस्य द्रव्यत्व ध्वनेर्गुणत्वञ्च गम्यते। ध्वनिश्च प्राकृतवैकृतभेदेन द्विविध. । द्विविधध्वनिसमुदित द्रव्य मन्यते। किञ्च शब्दशास्त्रे सव्यवहारायाद्रव्यस्यापि द्रव्यत्वमूरीकृतम्। तच्च साव्यवहारिक द्रव्यमुच्यते। इदञ्च वैशेषिकादीनामनभिमतम् ॥

इति द्रव्यसामान्यविषय

**प्रथमः परिच्छेद.।**

# द्वितीयः परिच्छेदः

## द्रव्य-विशेष.

### (१) पृथिवी

**पृथिवीलक्षणम्—**

अत्रादौ वैशेषिकमतमुपन्यस्यते। तथाहि—यद्यपि पृथिव्या रूपरसगन्धादिगुणाश्चतुर्दश[1] समवायेनाऽधिशेरते, तथापि गन्ध एवाऽस्या विशेषगुण । स च गन्ध पृथिवीतरेषु द्रव्येषु न तिष्ठति। जलादौ यो गन्ध प्रतीयते, स पृथिवीसम्बन्धेनैव। अत एव गन्धवती या सा पृथिवीति कथ्यते[2]। यथोक्तम्—**व्यवस्थितः पृथिव्यां गन्धः** (वै० सू० २।२।२) इति। इदमेवाह व्याख्याकार—**भवति हि पृथिवी गन्धवत्येव, पृथिव्येव गन्धवतीति** (उप० २।२।२) इति। विशदीकृतमिदमेव विश्वनाथेनाऽपि—

> **तत्र क्षितिर्गन्धहेतुर्नानारूपवती मता।**
> **षड्विधस्तु रसस्तत्र गन्धस्तु द्विविधो मतः॥**
>
> (भा० परि० ३५) इति

**पृथिवीभेदः—**

सा च पृथिवी द्विविधा, नित्याऽनित्यभेदात्। तत्र नित्या परमाणुरूपा, अनित्या द्व्यणुकादिकार्यरूपा। पुन. कार्यरूपा या पृथिवी, सा त्रिविधा, शरीरेन्द्रियविषयभेदात्। तत्र शरीर द्विविध योनिजाऽयोनिजभेदात्। अत्र योनिजमपि द्विविधम्, जरायुजाऽण्डजभेदात्। तत्र मानुषपशुमृगाणा[3] शरीर जरायुजम्,

---

१—स्नेहहीना गन्धयुता क्षितावेते चतुर्दश। भा परि. ३२ क

२—(क) तत्र गन्धवती पृथिवी। तर्कसग्रह.

(ख) रूपरसगन्धस्पर्शवती पृथिवी॥ वै सू २।१।१

३—अस्ति च पशुमृगयोर्भेद । उक्त साख्यतत्त्वकौमुदीटीकाया गुणमय्या रमेशचन्द्रकृतायाम्—पशुपद विजातीयलोमवल्लाङ्गूलाऽवच्छिन्नजीवपरम्, नातो मृगवैयर्थ्यम्, मृगपदमपि चतुष्पादादिसकलपरम्, नातो मूषिकादेरपरिग्रह-निबन्धनशून्यता-इति। अस्मिन्विषये साख्यतत्त्वकौमुद्या ज्योतिष्मती व्याख्या (पृ० ३४१) आलोच्या। अत एवाऽष्टाध्याय्या विभाषा वृक्ष-मृग-पशु-इति सूत्रे पशुमृगयो पार्थक्येन निर्देश कृत। द्र०—पा सू २।४।१२

पक्षिसर्पादीनामण्डजम् । एवमयोनिजमपि स्वेदजोद्भिज्जभेदाद् द्विविधम् । अत्र स्वेदजा कृमिदशाद्या, उद्भिज्जा तरुगुल्माद्या । इन्द्रिय गन्धाऽभिव्यञ्जक घ्राणम् ।

विषयस्तु द्व्यणुकादिक्रमेणाऽऽरब्धस्त्रिविधो मृत्पाषाणस्थावरभेदात् । तत्र भूप्रदेशा =प्रकारेष्टकादयो मृत्प्रकारा । पाषाणा =उपलमणिवज्रादय । स्थावरास्तृणौषधिवृक्ष-लताऽवतान-वनस्पतय इति ।

अथ व्याकरणदृशा पृथिवी विचार्यते । इमानि पृथिवीपदघटितानि तत्सम्बद्धानि च सूत्राणि । तथाहि—

१—**सर्वभूमिपृथिवीभ्यामणञौ**[1] पा० सू० ५।१।४१
२—**दिवसश्च पृथिव्याम्** पा० सू० ६।३।२९
३—**अम्बाऽम्बगोभूमि** पा० सू० ८।३।९७
४—**मृदस्तिकन्** पा० सू० ५।४।३९

**व्याकरणदृशा पृथिवीलक्षणम्—**

**गन्धस्येदुत्पूतिसुसुरभिभ्यः** (पा० सू० ५।४।१३५) इति सूत्रे गन्धो दृश्यते । स च गन्धो गुण । गुणो हि कस्मिंश्चिद्[2] द्रव्ये तिष्ठति । नहि पृथिवीभ्यो भिन्नेषु गन्ध उपलभ्यते । किन्तु पृथिव्यामेव गन्ध । अतो गन्धाश्रयो यद् द्रव्य तत् पृथिवीति मन्तव्यम् । इदञ्च पृथिवीलक्षणमभेदे भेदबुद्धि प्रकल्प्यैव सम्भवति, रूपरसगन्धस्पर्शादिचतुर्दशगुणसमुदायस्यैव द्रव्यत्वमिति पूर्वमुपपादितत्वात्[2] ।

**गन्धस्यावयवत्वसाधनम्—**

**गन्धस्येत्वे तदेकान्तग्रहणम्**[3] (का० वा० ५।४।१३५) इति । अत्र तदेव विशेष्यभूत द्रव्य यस्यैकान्त.=एकदेशोऽवयवो गन्धो भवति । स चाऽवयवो भवितु नार्हति, गन्धस्य गुणत्वात् । नहि कस्यचिद् द्रव्यस्याऽवयवो गुणो भवति, किन्तु द्रव्यस्याऽवयवो द्रव्यमेव । यथा पटस्याऽवयविन तन्तवोऽवयवा इति एव घटस्याऽवयविनः कपालोऽवयव । अत एव गन्धस्यौपचारिकाऽवयवत्वमादायेत्वविधि । **तेनोद्गन्धिः, पूतिगन्धिरित्यादि** प्रयोगा जायन्ते । यथोक्तम्—**अत्र गन्धस्य गुणस्य द्रव्यैकदेशत्वं न युज्यते । अत एकान्तशब्द एकदेशवदविभक्ते**

---

१. प्रथनात्'पृथिवी'त्याहु नि० १।४ पाद ।
२. द्र० अस्य ग्रन्थस्य प्र० परि० पृ० ८-९ ।
३: एकान्त एकदेश इवाऽविभागेन लक्ष्यमाण (सि० कौ० ५।४।१३५) इति ।

**लाक्षणिकः। गन्धस्य पुष्पात् सलिलाच्च द्रव्यात्पृथगलक्ष्यमाणत्वात्।**
(बालमनोरमा ५।४।१३५) इति।

वस्तुतस्तु गन्धोऽपि द्रव्यस्याऽवयवोऽस्त्येव, गुणसमुदायस्य द्रव्यत्वात्। यथा तन्तुरूपाऽवयवसमुदायस्य पटस्य द्रव्यत्वम्, तथा गन्धादिगुणसमुदायस्यैव द्रव्यत्वम्। एतदेव पृथिवीति कथ्यते। अत एव तत्त्वबोधिनीकृता **अस्ति च गन्धशब्दो द्रव्यवचन** (तत्त्वबो० ५।४।१३५] इत्युक्तम्।

**पृथिव्या एव लोष्टादि —**

किञ्च **मृदस्तिकन्** (पा. सू ५।४।३९) इति सूत्रेण मृत्तिका=पृथिव्या विकारो द्रव्यम्। अस्या मृदो लोष्टादीनाञ्च पृथिवीत्वमुक्त हेलाराजेन **लोष्टोऽपि पृथिवीरूपेण प्रतीयते, मृत्समूहोऽपि, घटोऽपि, पर्वतोऽपि** (हेला० ३।१।४१) इति। इदमेव मत विशदीकरोति पतञ्जलिरपि **लोष्टः प्रक्षिप्तो बाहुवेग गत्वा नैव तिर्यग्गच्छति, नोर्ध्वमारोहति, पृथिवीविकारः पृथिवीमेव गच्छत्यान्तर्य्यतः** (म० भा० १।१।५०) इति। एतेन बाहुवेगात्प्रक्षिप्तो लोष्ट पृथिव्या आकर्षणशक्तेर्महिम्ना स लोष्ट पृथिव्यामेव पतति। तथा च शक्तिमद् द्रव्य भवतीति सिद्धम्। यथोक्तम्—**शक्तिव्यतिरिक्तं शक्तिमद्द्रव्यम्** (प्र० ३।२।११५) इति। पृथिव्यामाकर्षणशक्तिरस्तीति शास्त्रान्तरेऽपि दृश्यते—

**आकृष्टशक्तिश्च मही तया यत्खस्थं गुरुत्वाऽभिमुख स्वशक्त्या।**
**आकृष्यते तत्पततीव भाति समे समन्तात्क्व पतत्वियं खे॥**
(सि० शि०, गो० भु०, श्लो० ६) इति।

एवञ्च पृथिव्या यादृश लक्षण तद्भेदाश्च वैशेषिकैरास्थीयन्ते, तादृशमेव-अभेदे भेद प्रकल्प्य पृथिवीलक्षणम्, अस्या भेदाश्च वैयाकरणैरप्यनुमन्यन्ते। अभेदविवक्षायान्तु गन्धादिगुणसमुदायस्य पृथिवीत्वमिति स्वीकारे गन्धादिगुणसमुदितमेव पृथिवीलक्षणमित्यलम्।

इति पृथिवी

## (२) आपः

**वैशेषिकदृशा अब्लक्षणम्—**

आदौ वैशेषिकस्य मतमुपन्यस्यते। तथाहि—यथा पृथिव्या गन्ध एव विशेषगुण, तथाऽपा शीतस्पर्शोऽपि। यथोक्तम्—**अप्सु शीतता** (वै० सू० २।२।५) इति। एतेन शीतस्पर्शवत्य आपो भवन्तीति सिद्धम्।

किञ्च यद्यप्याप उष्णस्पर्शवत्योऽपि भवन्ति, तथाप्यपा न स्वाभाविक उष्णस्पर्श, किन्त्वौपाधिक एव। अपा स्वाभाविकः शीतस्पर्श एव। यथोक्तम्-'**स्वाभाविकशीतताऽपां लक्षणम्**' (उप० २।२।५) इति। इदमेव मतमन्नम्भट्टेनाऽपि समर्थितम्—'**शीतस्पर्शवत्य आपः**' इति[1]। विशदीकृतञ्चैतद् विश्वनाथेनापि—

**वर्णः शुक्लो रसस्पर्शौ जले मधुरशीतलौ।**
**स्नेहस्तत्र द्रवत्वन्तु सासिद्धिकमुदाहृतम्॥**
(भा० परि० ३६) इति।

किञ्च यथा पृथिव्या गन्धादन्येऽपि रूपादयो गुणा वर्तन्ते, तथाऽपामपि शीतस्पर्शादन्येऽपि गुणाः[2]। तत्र शुक्लमेव रूपम्, मधुर एव रस, सासिद्धिकमेव द्रवत्वमित्यपा लक्षणान्तराण्यप्यवधेयानि। यथोक्तम्—**रूप-रस-स्पर्शवत्य आपो द्रवाः स्निग्धाः** (वै० सू० २।१।२) इति। इदमेवाह व्याख्याकार—**शुक्लमधुरशीतता एव रूपरसस्पर्शाः, द्रवत्वञ्च सासिद्धिकम्, स्नेहस्तु स्वरूपत** (उप० २।१।२) इति। इदमेव मत पुष्णाति प्रशस्तपादाचार्योऽपि—**रूपरसस्पर्शद्रवत्वस्नेहसंख्यापरिमाणपृथक्त्वसयोगविभागपरत्वाऽपरत्वगुरुत्वसंस्कारवत्य** (प्र० पा० भा० पृ० ६१) इति।

**अब्भेदः—**

आपो द्विधा, नित्याऽनित्यभेदात्। तत्र नित्या परमाणुरूपा, अनित्या

१ तर्कसंग्रह, न्या० सि० मुक्तावली भा० परि० ३६।

२. स्पर्शादयोऽष्टौ वेगश्च गुरुत्वञ्च द्रवत्वकम्।
रूप रसस्तथा स्नेहो वारिण्येते चतुर्दश॥ भा. परि. ३१

३. नित्यतादि प्रथमवत् किन्तु देहमयोनिजम्।
इन्द्रिय रसन सिन्धुहिमादिर्विषयो मत.॥ भा० परि० ४०

कार्यरूपा । कार्यरूपा आपस्त्रिधा, शरीरेन्द्रियविषयभेदात् । तत्र शरीर वरुण-लोके प्रसिद्धम् । इन्द्रिय रसग्राहक रसनम् । विषय सरित्समुद्रादिरूपः ।

अथ व्याकरणशास्त्रोक्तदृशा आपो विचार्यन्ते । इमानि अब्घटितानि तत्सम्बद्धानि च सूत्राणि । तथाहि—

१. **अद्‌भिः संस्कृतम्** पा० सू० ४।४।१३४
२. **अपो भि** पा० सू० ७।४।४८
३ **उदकेऽकेवले** पा० सू० ६।२।८६
४ **उदकस्योद सञ्ज्ञायाम्** पा. सू ६।३।५७
५ **तस्मिस्तस्मादिति—दध्युदकम्**—पा० सू० १।१।६७, का. वा० स० १
६. **अधिश्रयणोदकाऽऽसेचन०** पा० सू० १।४।२३, का वा० स० ८

**व्याकरणदृशा अब्लक्षणम्—**

निदाघे निशि निरावरणे प्रासादोपरि शयानो जन शैत्यमनुभवति । तच्च शैत्यञ्जलस्यैव । यतो हि तस्यैव शैत्यस्य सूर्यस्य रश्मिभि सम्पर्को यदा भवति, तदा तदेव शैत्य मेघरूपेण परिणमति, स एव मेघो वायुयोगाद् वृष्टिरूपेणाऽपि। यथोक्तम्—**निदाघे निशि निरावरणे शयानानां शैत्योपलम्भ· तस्यैव च रविकिरणसम्पर्केण मेघरूपतया वायुयोगाद् वृष्टि.** (उद् १।१।५०) इति। एतेनाऽपा शीतस्पर्शवत्त्व लक्षणमस्तीति गम्यते ।

किञ्च **उदकेऽकेवले** (पा० सू० ६।२।९६) इति सूत्रेऽकेवलम्=मिश्रम् । तच्च कस्यचिद् द्रव्यस्य केनचिद् द्रव्येणैव भवति । यथा—दध्युदकयो, दधि-पयसो., पयउदकयोरित्यादिषु स्थलेषूभयोर्द्रव्यत्वेन परस्पर मिश्रीकरण सभवति । तेन दध्युदकम्, दधिपय, पयउदकमिति स्यात् । अत एव तस्योदाहरणम्—**गुडोदकम्, तिलोदकम्, तण्डुलोदकमिति** सम्भवति, गुडोदकादीना द्रव्यत्वात् । नहि तादृश मिश्र गुणगुणिनो सम्भवति, गुणस्य द्रव्याऽपृथक्त्वेनैव ग्रहणात् । अत एवाऽकेवलस्य **शीतोदकमिति, उष्णोदकमिति** च प्रत्युदाहरण दत्तम् । एतयो प्रत्युदाहरणयो प्रदानेन जलस्य शीतस्पर्शवत्त्व स्वाभाविकम्, उष्ण-स्पर्शवत्व नैमित्तिकञ्च लक्षण गम्यते ।

**अन्तरिक्षे सूक्ष्मस्य जलनिधेः कथनम्—**

किञ्च सरित्समुद्रादिरूपा या आप, तासामुपादान कारणमन्तरिक्षे सूक्ष्मोऽपा निधिरस्ति । तस्यैवाऽगा निधेर्विकृति. स्थूलरूपा आपो दृश्यन्ते । काष्ठादिस्थिताऽऽर्द्रताऽपि तस्या एव विकार । अत एव धूमोऽन्तरिक्षस्थितसूक्ष्म-समुद्राभिमुखमेव गच्छति । यतो हि सूक्ष्माणामपा निधेरेव विकारो धूम । यो यस्य विकार, स तस्मिन्नेव लीयते । यथा—मृदो विकारो घट, स मृदि लीनो

भवति। यथा वा सुवर्णस्य विकार कटककुण्डलादि, स सुवर्णे प्रलीयते। तथा-ऽन्तरिक्षस्थितसूक्ष्मस्यैव समुद्रस्य विकारो धूम, सोऽन्तरिक्षस्थिते सूक्ष्मसमुद्रे लय गच्छति। यथोक्त पतञ्जलिना—**या एता आन्तरिक्ष्याः सूक्ष्मा आपस्तासा विकारो धूम आकाशे निवाते नैव तिर्यग्गच्छति, नाऽर्वागवरोहति, अब्विकारोऽप्स्वेव गच्छ्यान्तर्यत.** (म० भा० १।१।५०) इति। इदमेव मत कैयटोऽपि समर्थयति—अन्तरिक्षे सूक्ष्म समुद्रोऽस्ति। तद्विकार सर्वा आप। काष्ठस्थितानामपामग्निसयोगाद्धूमो विकार (प्र० १।१।५०) इति। एतेनाऽपा प्रकृतिविकृतिभावो गम्यते। ततश्च तासा द्रव्यत्वम्। यतो हि प्रकृतिविकृतिभावो द्रव्यस्यैव भवति।

**अपामधिकरणत्वसाधनम्—**

किञ्च **अपो योनियन्मतुषु, जे चरे च वक्तव्यम्** इत्यनयोर्वार्त्तिकयोरप्सुयोनि, अप्सुज, अप्सुचर इत्येतान्युदाहरणानि प्रदत्तानि सन्ति। अत्राऽप्सुयोनि = अप्सूत्पत्तिर्यस्य सोऽप्सुयोनिर्मत्स्य-कूर्म-नक्र शिशुमार[1] सरीसृपादय। अप्सुजः = अप्सु जातो य. सोऽर्थो मीनशैवालप्रभृतय। अप्सु चरति गच्छति य सोऽप्सुचर =मत्स्यादि। एतेनाऽपामधिकरणत्व सिध्यति। यतो हि नह्यधिकरणमन्तरा तासा क्रियाणामुत्पत्ति सम्भवति। यदधिकरण तद्द्रव्यमेव।

किञ्च—**अनुविपर्यभिनिभ्यः स्यन्दतेरप्राणिषु** (पा० सू० ८।३।७२) इति सूत्रस्याऽनुस्यन्दते मत्स्य उदके प्रत्युदाहरण प्रदर्शितम्। अत्र स्यन्दनक्रियाया अधिकरणमुदक भवति। तथा च स्यन्दन-क्रियाया अधिकरणत्वादपि द्रव्यत्व-मपामस्तीति गम्यते।

एवञ्चाऽपा यादृश लक्षणम्, यादृशा ह्यपा भेदा वैशेषिकैरास्थिता तादृशमेव लक्षणम्, तादृशा एव भेदा अभेदे भेद प्रकल्प्य शाब्दिकैरप्युररीक्रियन्ते, रूप-रस स्पर्शादिगुणसमुदायस्य द्रव्यत्वात्। अत एवैकस्यैवोदकस्य शीतोष्ण-गुणभेदेनाऽपा नानात्वमभिहित पतञ्जलिना। तथाहि तस्य वचनम् **एकोयमात्मा उदकं नाम, तस्य गुणभेदादन्यत्व भवति-अन्यदिद शीतम्, अन्य-दिदमुष्णम्** (म० भा० १।१।१) इति। इदमेव मत कैयटेनाऽपि विशदीकृतम्-**उदकत्व-जातियोगादत्रैकत्वं न विवक्षितम्, किं तर्हि विशिष्टभाजनस्थमेक-मुदकद्रव्यम्। तदेव च गुणान्तरयोगादन्यत्वेन लोके व्यपदिश्यते** (प्र० १।१।१) इति। हेलाराजपुण्यराजावप्येवमेव मन्वाते। आहतुश्च—**समुद्रोऽपि, बिन्दुरपि चोदकत्वेन प्रतीयते** (हेला० ३।१।४१) इति। इदमेव मत पुण्यराजोऽपि प्राह—**एकाऽपि जलकणिकाऽऽपो बहुलमपि, सरित्स्रोतस्तथैवोच्यते** (पु० रा० २।१६०) इति।

इत्यापः

---

[1] सोस इत्यर्थ., द्र० वा० शि० आ० कोषः।

## (३) तेजः

**वैशेषिकदृशा तेजोलक्षणम्—**

आदौ वैशेषिक-मतमुपन्यस्यते। तथाहि—यथा पृथिव्या विशेषगुणो गन्ध, तथैव तेजस उष्णस्पर्श[1]। अस्य भास्वरमेव रूपम्। भास्वरत्वम्=परप्रकाशकत्वम्। यथोक्तम्—**तेजोरूपस्पर्शवत्** (वै० सू० २।१।३) इति। इदमेवैतद् व्याख्याकारोऽप्याह—**रूपं भास्वरम्, स्पर्शश्चोष्णः, तद्वत्तेजः।** (उप० २।१।३) इति। अपि च—**तेजस उष्णता** (वै० सू० २।२।४) इति। इदमेवैतद्व्याख्याकारोऽपि ब्रूते—**स्वाभाविक्युष्णता तेजसो लक्षणम्, रूपमपि शुक्लभास्वरमुपलक्ष्यते** (उप० २।२।४ इति। विशदीकृतमिदमेव विश्वनाथेनाऽपि—

**उष्णस्पर्शस्तेजसस्तु स्याद्रूपं शुक्लभास्वरम्** (भा० परि० ४१) इति। एतेनोष्णस्पर्शवत्त्व भास्वरशुक्लरूपवत्त्वञ्च तेजसो लक्षणमित्यवधार्यते।

**तेजोभदः—**

तेजो द्विविधम्, नित्याऽनित्यभेदात्। नित्य परमाणुरूपम्। अनित्य कार्यरूपम्। तच्च कार्य त्रिविधम्, शरीरेन्द्रियविषयभेदात्। तत्र शरीरमादित्यलोके प्रसिद्धम्। इन्द्रियञ्चक्षु। विषयश्चतुर्विध। भौमदिव्योदर्याकरजभेदात्। तत्र भौम काष्ठेन्धनप्रभवमूर्ध्वज्वलनस्वभावम्, पचन-दहन-स्वेदनादिसमर्थरूपम्। दिव्यमबिन्धनसौरविद्युदादिरूपम्। उदर्य भुक्तस्याऽऽहारस्य रसादिपरिणामार्थरूपम्। आकरजम्—सुवर्णरजतताम्रपित्तलौहादिद्रव्यम्।

अथ व्याकरणशास्त्रोक्तदृशा तेजो विचार्यते। इमानि तेज सम्बद्धानि सूत्राणि तथाहि—

१—**अग्नौ चे.** पा० सू० ३।२।९१
२—**अग्नेर्ढक्** पा० सू० ४।२।३३
३—**अग्नेः** स्तुत्स्तोमसोमाः पा० सू० ८।३।८२

**व्याकरणदृशा तेजोलक्षणम्—**

तेजसो यादृश लक्षण वैशेषिकैराम्नातम्, तादृशमेव अभेदे भेद प्रकल्प्य लक्षणं भेदाश्च वैयाकरणैरप्यनुमन्यन्ते। अत एव दावाऽग्नेर्मध्याह्नसूर्यस्य किरणसयोगात्तस्योष्णाधिक्य वर्द्धत इत्यभ्युपगत नागेशेन। उक्तञ्च **दावाग्नेर्मध्याह्नादौ सूर्यकरसम्पर्कात् क्रौर्यातिशयो दृश्यते** (उद् १।१।५०) इति। एतेनोष्णस्पर्शवत्त्व तेजसो लक्षणमिति गम्यते।

---

१ क—एतेनोष्णता व्याख्याता। वै० सू० २।२।३।
ख—अष्टौ स्पर्शादयो रूप द्रवो वेगश्च तेजसि। भा० परि० ३० ख

**प्रधानभूतस्य तेजस. कथनम्—**

किञ्च सकलतेजसा प्रधानभूत तेज आदित्यरूपमस्तीत्युक्त हेलाराजेन । तथाहि तस्य वचनम्—**आदित्यलक्षणमपि सकलतेजसां प्रधानभूत दिव्य तेजः** (हेला० ३।७।४१) इति । एतस्यैव प्रधानभूतस्य सूर्यस्य विकारोऽग्नि । अत एवाऽग्नेः सुप्रज्वलितो ज्वालो वायुशून्यप्रदेशे न तिर्यग्गच्छति, नाधो गच्छति, अपि तूर्ध्वमेवाऽविरोहति । यथाह पतञ्जलि —**ज्योतिषो विकारोऽर्चिराकाशदेशे निवाते सुप्रज्वलित नैव तिर्यग्गच्छति नाऽर्वागधिरोहति । ज्योतिषो विकारोऽर्चिर्ज्योतिरेव गच्छत्याऽन्तर्यतः** (म० भा० १।१।५०) इति । अत्र ज्योतिष = सूर्यस्य । अर्चि = अग्नेर्ज्वाल । इदमेव मत पुष्णाति कैयट —**सूर्यविकारोऽर्चिः, सूर्यमेव गच्छति** (प्र० १।१।५०) इति ।

**प्रकृतिविकृतिभावेन तेजसो द्रव्यत्वसाधनम्—**

एतेन दिव्यतेजस आदित्यस्य विकृतिरग्नि, तस्य ज्वालादिरूपश्च[1] । प्रकृति-विकृतिभावेन तेजसो द्रव्यत्व सिद्धम् । यतो हि प्रकृतिविकृतिभावो द्रव्य एव भवति । यथा पृथिव्या विकारो मृद्, मृदः प्रकृति पृथिवीति । एव तन्तु पटस्य प्रकृति । तस्य तन्तोर्विकृति पट इति । तेनैतेषा द्रव्यत्वमस्तीति गम्यते, तथा तेजसोऽपि ।

**तेजसः शक्तिद्वयकथनम्—**

किञ्च तेजसो द्वे शक्ती स्त. । ते च ग्राह्यत्व-ग्राहकत्वरूपे । तद्यथा यदा सुप्रज्वलित प्रदीपो घटादीनि वस्तूनि प्रकाशयति, तदा तस्य ग्राहकत्वम्, परेषा घटादीना प्रकाशकत्वात् । यदा स्वप्रकाशेन स्वात्मानमपि बोधयति, तदा तस्य ग्राह्यत्वमपि । यथोक्त हरिणा—

**ग्राह्यत्वं ग्राहकत्वञ्च द्वे शक्ती तेजसो यथा ।** वा० प० १।५५ इति । एतेन शक्तिशक्तिमतोरभेदात् तेजसो द्रव्यत्व सिध्यतीति गम्यते । नहि शक्तिर्द्रव्यात् पार्थक्येन प्रतीयते, प्रत्युत द्रव्यादपृथग्रूपेणैव ।

**चक्षुषस्तैजसत्व प्राप्यकारित्वञ्च—**

चक्षुरिन्द्रिय हि विषयदेश गत्वा विषय प्राप्य तस्य ज्ञान जनयति । अत एव घनान्धकारे स्थितोऽपि पुरुष. प्रकाशस्थित वस्तु पश्यति । न च पश्यति प्रकाश-

---

१ यथा दिव्यतेजसो विकृतिरग्निर्ज्वालश्च । तथा शमीकाष्ठस्थित तेजो यज्ञाऽग्ने. कारणम् । यथाह हरि —

अरणिस्थ यथा ज्योति. प्रकाशान्तरकारणम् ।

वा० प० १।४७

स्थित पुरुषः तमसावृत वस्तु । यतो हि तमसावृत वस्तु, चक्षु. तद्वस्तु ग्रहीत न शक्नोति । तेन चक्षुष प्राप्यकारित्व सिध्यति । तस्याप्राप्यकारित्वे तु तमसावृतस्य वस्तुनो ग्रहणापत्ति स्यात् । न च तथा दृश्यते । अतोऽस्य प्राप्यकारित्वमेव, न तु अप्राप्यकारित्वमिति, यथोक्तम्—

**चक्षुरिन्द्रिय तेजोरूप प्राप्य विषयग्राहित्वात्प्रासाददेशादपक्रम्य विषयं गच्छति** (प्र० २।३।२८) इति । इदमेव मत पुष्णाति नागेशोऽपि—

**विषयग्राहिणो नयनरश्मय·, सूर्यरश्मिवत् प्रासाददेशस्थपुरुषनयनादपक्रम्य यावद् विषयदेशं गच्छन्ति** (उद्० २।३।२८) इति । भर्तृहरिणाप्युक्तमेव मत विशदीकृतमनया कारिकया—

**चक्षुष· प्राप्यकारित्वे तेजसा तु द्वयोरपि ।**
**विषयेन्द्रिययोरिष्ट· सस्कार स क्रमो ध्वनेः ॥**

वा० प० १।८०

॥ इति तेज ॥

## (४) वायुः

**वायुलक्षणम्—**

अथ वायुर्विचार्यते । अत्रादौ वैशेषिकमतमुपन्यस्यते । तथाहि—रूपरहितो योऽयं स्पर्शोऽनुभूयते, स कस्मिंश्चिद् द्रव्य आश्रितो भवेत्, तस्य गुणत्वात् । नचाऽयं स्पर्शः पृथिव्यादिषु त्रिषु वर्तते, रूपाऽसहकृतत्वात् । नहि पृथिवीवृत्तिस्पर्शः कदाचिदपि रूपरहितो दृश्यते, प्रत्युत पृथिव्यादित्रयाणां स्पर्शः रूपसहचरित एव । न चाऽत्राऽप्यनुद्भूतमेव रूपमस्तीति वक्तुं शक्यते । यतो हि प्रतीयमानस्य पृथिव्यादेः स्पर्शस्य नह्यनुद्भूतरूपेण सह कदाचिदपि प्रतीतिर्भवति, प्रत्युतोद्भूतरूपसहचरितेनैव । तथा च योऽयं स्पर्शः प्रतीयते, तस्यानुद्भूतरूपेण सह सम्बन्धो नास्ति, अस्य स्पर्शस्य कदाचिदप्युद्भूतरूपेण सह प्रतीतेरननुभवात् । यदनुद्भूतं भवति, तस्य कदाचिदुद्भवोऽपि दृश्यते, । यथा मृद्यनुद्भूतो घटः, कदाचिदुद्भूतो भवति ।

किञ्च पृथिव्यां यः स्पर्शः, स स्पर्शः पाकजः, विलक्षणतेजस्सन्निकर्षात् । अत एव कदाचित्कठिनः स्पर्शः, कदाचिन्मृदुः स्पर्शश्च तस्या भवति । यथाऽऽम्रादेः फलस्य, ओदनादेश्च । अयं स्पर्शो न तथा दृश्यते । अतोऽयं स्पर्शः पाकजः । अपां हि शीत एव स्पर्शः, तेजस उष्ण एव स्पर्शः । अत उदकतेजसोरयं स्पर्शो नाऽस्तीति, अनुष्णाऽशीतस्पर्शवत्त्वात् । न चाऽमूर्त्तानामाकाशकालदिगात्मनामयं स्पर्शोऽस्ति, स्पर्शस्य मूर्त्तद्रव्यमात्रविषयत्वात् । कदाचिदपि स्पर्शोऽयं मूर्त्तद्रव्याद् व्यभिचरितो न भवति । प्रत्युत मूर्त्तद्रव्यादव्यभिचरित एव । अतोऽमूर्त्तानामाकाशादीनामप्ययं स्पर्शो नास्तीति गम्यते । अतः स्पर्शस्यास्याऽवश्यमेवाऽऽश्रयभूतं द्रव्यं किञ्चिदस्तीति । यच्च तदाश्रयभूतं द्रव्यं तद् वायुरित्युच्यते । यथोक्तं कणादेन—**स्पर्शवान् वायुः** (वै० सू० २।१।४) इति । इदमेव मतं प्रशस्तपादाचार्योऽपि पुष्णाति—**स्पर्शोऽस्याऽनुष्णाऽशीतत्वे सत्यपाकजः** (प्र० पा० भा० पृ० १११-११२) इति । इदमेव मतं विशदीकरोति विश्वनाथोऽपि—**अपाकजोऽनुष्णाशीतस्पर्शस्तु पवने मतः** (भा० परि० ४२) इति । इदमेवानुमन्यतेऽन्नम्भट्टोऽपि—**रूपरहितः स्पर्शवान् वायुः** (तर्कसंग्रह) इति ।

**वायुसिद्धावनुमानस्योपन्यासः—**

योऽयं पर्णादिः शुकशुकात्मकः शब्दः श्रूयते, स शब्दः कस्यचित्स्पर्शवतो द्रव्यस्य संयोगाद् भवति । यतो हि नहि तत्र कस्यचिदवयवद्रव्यस्य विभागो दृश्यते, यतोऽस्य शब्दस्य कारणमवयवद्रव्यस्य विभागो भवेदित्यनुमीयेत । न च

किञ्चित्कारणमन्तरा एतादृशस्य शब्दस्य श्रवणं सम्भवति। नचाऽऽकाशादिविभु-द्रव्याणां कारणत्वम्, तत्र स्पर्शस्याऽभावात्। स्पर्शवतो द्रव्यस्यैव स्पर्शवद्द्रव्यान्तरेण सह संयोगोऽभिघातश्च भवति। तेन शब्द उत्पन्नः सन् श्रूयते। न वा पृथिव्यप्तेजसां रूपवतां कारणत्वमस्ति, तथा सति तेषां प्रत्यक्षत्वापत्तेः। तथा च यतो न पृथिव्यादीनां तादृशं शब्दं प्रति कारणत्वं दृश्यते, अतस्तेभ्यः पृथक्स्पर्शवद् द्रव्यमस्तीति गम्यते। तच्च द्रव्यं वायुः। यथोक्तं शङ्करमिश्रेण—**असति रूपवद्द्रव्याभिघाते योऽयं पर्णादिः शब्दसंतानः सः स्पर्शवेगवद्द्रव्याभिघातनिमित्तिकः, अविभज्यमानाऽवयवद्रव्यसंबन्धिशब्दसंतानत्वात्, दण्डाऽभिघातजभेरीशब्दसंतानवत्। रूपवद्द्रव्याभिघातव्यतिरेकस्तु योग्यानुपलब्धिगम्यः। तच्च स्पर्शवेगवद् द्रव्यमष्टद्रव्यातिरिक्तमेव** (उप० २।१।९) इति।

किञ्च अन्तरिक्षे तृणतूलस्तनयित्नुविमानादेर्या स्थितिः सा स्पर्शवेगवद् द्रव्यस्य संयोगजा भवति। यतो हि नहि तस्याः कारणं कश्चिच्चेतनो दृश्यते। दृश्यते च तृणादीनां निराधारगगने धृतिः। सा च किञ्चित्कारणमन्तराऽनुपपन्नैव भवति। तथा च यथा तृणकाष्ठनौकादेः स्थितेः कारणं जलप्रवाहो भवति, तथाकाशे तृणतूलादीनां धृतेः कारणमप्यवश्यमेवास्तीति गम्यते। तच्च कारणं वायुर्द्रव्यम्। यथोक्तम्—**तृणतूलस्तनयित्नुविमानानां नभसि धृतिः स्पर्शवद्द्रव्यसंयोगजा चेतनाऽनधिष्ठितद्रव्यधृतित्वात्, प्रवाहे तृणकाष्ठनौकादिधृतिवत्**" (उप० २।१।९) इति।

किञ्च—तृणपर्णादेः कम्पः, आमवातजडीकृतकलेवरस्य च तादृशं कर्म भवति। तच्च कर्म नहि कारणमन्तरा उत्पत्तुं प्रभवति। न च दृष्टं किञ्चित्कारणं दृश्यते। यथा नद्याः प्रवाहस्याघातेन तटस्थितस्य वेतसवनस्य कम्पो जायते तथा तृणपर्णादेः कम्पोऽपि केनचित्स्पर्शवद्द्रव्याऽभिघातेनैवोत्पद्यत इति गम्यते। तच्च स्पर्शवद्द्रव्यं वायुः। यथोक्तम्—**तृणादौ कर्मस्पर्शवेगवद्द्रव्याभिघातजं गुरुत्वप्रयत्नवदात्मसंयोगाऽजन्यकर्मत्वात् नदीपूराहतवेतसवनकर्मवद्** (उप० २।१।९) इति। उक्तञ्च कणादेनाऽपि—**तृणे कर्म वायुसंयोगात्** (वै० सू० ५।१।१४) इति अत्र तृणपदमुपलक्षणम्। तेनाऽन्येषामपि ग्रहणं भवति। यथाह शङ्करमिश्रः **तृणपदेन वृक्षगुल्मलताप्रतानादिकं सर्वमुपलक्षयति** (उप० ५।१।१४) इति। अपि च **स्पर्शश्च वायोः** (वै० सू० २।१।९) इति। सूत्रेऽस्मिन् 'चे'ति पदेन शब्दधृतिकम्पा अपि गृह्यन्ते। यथोक्तम्—**चकाराच्छब्दधृतिकम्पाः समुच्चीयन्ते** (उप० २।१।९) इति। इदमेव मतं पुष्णाति प्रशस्तपादाचार्योऽपि—**स्पर्शशब्दधृतिकम्पलिङ्गो वायुः** (प्र० पा० भा० पृ० १५५) इति। विशदीकृतमिदमेव विश्वनाथेनाऽपि **तिर्यग्गमनवानेष ज्ञेयः स्पर्शादिलिङ्गकः** (भा० परि० ४३ क) इति।

एवञ्च वायोर्यं स्पर्श , स पृथिव्यादेर्नास्ति । यतो हि स· स्पर्शो रूपसहकृतो न वर्तते । यतश्च तादृश स्पर्शोऽनुभूयते, अतोऽस्य स्पर्शस्याश्रयभूत किञ्चिद्द्रव्यमवश्यमेवेति सामान्यतो दृष्टबलाद् वायु सिध्यति । यथाह कणाद —**न च दृष्टाना स्पर्श इत्यदृष्टलिङ्गो वायुः** (वै० सू० २।१।१०) इति । इदमेव मतमेतद् व्याख्यातोऽपि निश्चीयते—**अथ स्पर्शो यः पक्ष. क्रियते, स दृष्टाना पृथिव्यप्तेजसा नास्ति, रूपाऽसहचरितत्वात् । तथा चास्य स्पर्श. क्वचिद् द्रव्य आश्रित. इत्यनुमेयमित्यदृष्टलिङ्ग सामान्यतोऽपि वायुः पक्षधर्मताबलादायात.** (उप० २।१।१०) इति ।

**वायोरप्रत्यक्षत्वसाधनम्—**

यस्य द्रव्यस्योद्भूत रूपमस्ति, तस्यैव द्रव्यस्य प्रत्यक्ष भवति, यथा घटादे । वायोरुद्भूतमनुद्भूत वा रूप नास्ति । अतो वायो प्रत्यक्ष न भवतीति । यथोक्तम्—**सत्यपि महत्त्वे द्रव्यत्वे रूपसस्काराभावाद् वायोरनुपलब्धि.** (वै० सू० ४।१।७) इति । इदमेवाह व्याख्याकार —**उद्भूतरूपवत्त्वमेवात्मेतरद्रव्यप्रत्यक्षतन्त्रम्, तच्च वायौ नाऽस्तीत्यप्रत्यक्षलिङ्गो वायु** (उप० ४।१।७) इति । इदमेवाह विश्वनाथ. **रूपाऽन्यच्चक्षुषो योग्य रूपमत्राऽपि कारणम्** (भा० परि० ५३) **अत्राऽपि = त्वगिन्द्रियजन्यद्रव्यप्रत्यक्षेऽपि रूप कारणम् । तथा च बहिरिन्द्रियजन्यप्रत्यक्षे** रूप कारणम् (न्या० सि० मु०) इति ।

एवञ्च यतो रूपाऽभावाद् वायो प्रत्यक्ष न भवति, अतोऽदृष्टलिङ्गो वायुरिति मत सिद्ध भवति । यथाह कणाद —**वायुसन्निकर्षे प्रत्यक्षाऽभावाद् दृष्ट लिङ्ग न विद्यते** (वै सू० २।१।१५) इति । इदमेवैतद् व्याख्यानादपि स्पष्टीभवति **दृष्टं हि लिङ्गं यत्र प्रत्यक्षेण व्याप्तिग्रहः तदुच्यते । यथा धूमोऽग्नेः । वायुसन्निकर्षे च वायुना सहाऽविनाभावे प्रत्यक्षं नास्ति । नहि भवति योऽयं स्पर्शकम्पादिमान्, स वायुरिति कस्यचित्प्रत्यक्षम्, वायोरेवाऽप्रत्यक्षत्वादत एव तादृश प्रत्यक्षगृहीतव्याप्तिक लिङ्गं नास्ति** (उप० २।१।१५) इति ।

नव्यास्तु—बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षमात्र प्रति न रूपस्य कारणत्वमस्ति न वा स्पर्शस्य । परन्तु चाक्षुषद्रव्यप्रत्यक्ष प्रत्येव रूपस्य कारणत्वमस्ति । एव स्पार्शनप्रत्यक्ष प्रति स्पर्शस्य कारणत्वम् । न च चाक्षुषप्रत्यक्ष प्रति स्पर्शस्य कारणत्वम्, न वा स्पार्शनप्रत्यक्ष प्रति रूपस्य । तथा च वायोश्चाक्षुषप्रत्यक्षत्वाभावेऽपि तस्य स्पार्शनप्रत्यक्षत्व भवत्येव । अत एव प्रभा पश्यामीतिवद्, वायु स्पृशामीति व्यवहार प्रवर्तते । यथोक्तम्—**बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षे न रूपम्, न वा स्पर्शः कारण प्रमाणाऽभावात् । किन्तु चाक्षुषप्रत्यक्षे रूपम्, स्पार्शनप्रत्यक्षे स्पर्शः, कारणमन्वयव्यतिरेकात् । तस्मात्प्रभा पश्यामीतिवद् वायुं स्पृशामीति प्रत्ययस्य सम्भवाद्वायोरपि प्रत्यक्ष भवत्येव** (न्या० सि० मु० भा० परि० ५३) इति ।

**वायोर्नानात्वसाधनम्—**

वायुरेकः सन्नुपाधितो नाना भवतीति केषाञ्चिन्मतम्। तन्मत न समीचीनम्, यतो हि यद्येक एव वायु स्यात्तर्हि तृणतूलयोः नदीप्रवाहस्य चोर्ध्वगमनमधोगमनञ्च न स्यात्। एतेषामूर्ध्वगमनमधोगमनञ्च वायो सम्मूर्च्छनाद् भवति। सम्मूर्च्छनञ्च वायोरेकत्वे न सम्भवति, विरुद्धदिक्क्रिययोर्वाय्वो परस्परमाघातप्रतिघातादेव तस्य जन्यत्वात्। न चैकस्य वायो सत्त्वे तादृशो व्यापार उत्पत्तु प्रभवति। तथा च यतो वायो सम्मूर्च्छनसयोगात्तृणादीनामूर्ध्वगमनमधोगमनञ्च भवति अतो वायोर्नानात्व सिध्यति। यथोक्त कणादेन—**वायोर्वायुसम्मूर्च्छनं नानात्वलिङ्गम्** (वै० सू० २।१।१४) इति। इदमेव प्रशस्तपादोऽपि ब्रूते—**तस्याऽप्रत्यक्षस्यापि ( =वायोरपि) नानात्व सम्मूर्च्छनेनाऽनुमीयते। सम्मूर्च्छनं पुन समानजवयोर्वाय्वोर्विरुद्धदिक्क्रिययो सन्निपातः, सोऽप्यवयविनोर्वाय्वोरूर्ध्वगमनेनाऽनुमीयते, तृणादिगमनेनेति** (प्र० पा० भा० पृ० ११८-११९) इति।

वायोर्नानात्वमस्ति। अत एवैकोऽपि प्राणवायु शरीरान्त सञ्चरन् नानाविधा सज्ञा लभते। यथोक्तम्—**प्राणोऽन्तःशरीरे रसमलधातूना प्रेरणादिहेतुक. सन् क्रियाभेदादपानादिसंज्ञा लभते** (प्र० पा० भा० पृ० ११८-११९) इति।

**वायुपरमाणोर्द्रव्यत्वसाधनम्—**

यद् विभु, अणु वा भवति, तदनाश्रित भवति। नहि विभु, अणु वा कस्मिश्चिदधिकरणे तिष्ठति, येनैतयोर्विभ्वण्वोराश्रितत्व सिध्येत्। द्वाभ्यामणुभ्यामेको द्व्यणुको भवति, त्रिभ्यो द्व्यणुकेभ्य एक त्र्यणुक इति। अत एतेषा द्व्यणुकादीनामाश्रितत्वम्, अणोरनाश्रितत्वम्। यदनाश्रितम्, तद्द्रव्यम्। यथोक्त कणादेन—**अद्रव्यवत्त्वेन द्रव्यम्** (वै० सू० २।१।११) इति। सूत्रेऽस्मिन् अद्रव्यवत्त्वेन=द्रव्याऽनाश्रितत्वेन। अर्थात्, आकाशादि विभु, अणु च नहि कुत्रचित्तिष्ठति, विभुत्वादणुत्वाच्च। अतस्ते आश्रितभिन्ने स्त.। एतेनैतयोर्द्रव्यत्व सिध्यतीत्यवधेयम्। इदमेव ब्रूते व्याख्याकार—**आकाशपरमाणुलक्षणो वायुर्द्रव्यम्। अन्येषां पदार्थाना द्रव्याश्रितत्वात्। आश्रितत्वञ्चाऽन्यत्र नित्यद्रव्येभ्य इत्यभिधानात्परमाणुभ्यां** द्व्यणुकाऽऽरम्भाद्, **द्व्यणुकाऽऽदिप्रक्रमेणाऽवयविनो महत आरम्भस्योपपादनीयत्वात्** (उप० २।१।११) इति। एतेन वायुपरमाणोर्द्रव्यत्वमवगम्यते।

किञ्चाऽवयविनोर्वायोरसमवायिकारण परमाणुसयोग, स च सयोग क्रियामन्तरा न सिध्यति। एतेन वायुपरमाणो क्रियावत्त्व सिध्यति। क्रियावत्त्वात्तस्य **द्रव्यत्वम्**। अवयविनि वायौ स्पर्शोऽनुभूयते, अवयविनो गुणो हि

कारणगुणपूर्वको दृश्यते । यथा शुक्लतन्तौ शुक्ल पटः । तथा च यतोऽवयविनि वायौ स्पर्शो वर्तते, अतस्तस्य कारणे वायुपरमाणौ स्पर्शो गुणोऽप्यस्तीति निश्चीयते । एतेन गुणवत्त्वादपि वायुपरमाणोर्द्रव्यत्वम् । अत एवोक्तम्—**क्रियावत्त्वाद् गुणवत्त्वाच्च** (वै० सू० ३।१।१२) इति । एतदेव स्पष्टीभवति व्याख्यानादपि उप**लभ्यमानस्पर्शाऽऽश्रयस्याऽवयविनो मूलभूतस्य परमाणोरसमवायिकारणसंयोगाऽन्यथाऽनुपपत्त्या क्रियावत्त्वम्, अवयविस्पर्शरूपादेः कारणगुणपूर्वकत्वनियमाद् गुणवत्त्वञ्च सिद्धम्, ताभ्याञ्च द्रव्यत्वम्** (उप० २।१।१२) इति ।

**वायुपरमाणोर्नित्यत्वसाधनम्—**

कार्यद्रव्य हि स्वसमवाय्यसमवायिकारणान्यतरनाशान्नश्यतीति । यथा पटस्य समवायिकारण तन्तु, तस्य नाशात्पटो नश्यतीति । एव तस्याऽसमवायिकारण तन्तुसयोगः, तस्य नाशादपि पटो नश्यतीति व्यवहार. । वायुपरमाणो ते कारणे न भवत । यतो हि सावयवद्रव्याणामेव कारणद्वयोपयोग, न तु निरवयवस्य वायुपरमाणो । एतेन वायुपरमाणो कारणद्वयस्य शून्यत्वात्तस्य नित्यत्वम् । यथोक्तम्—**अद्रव्यवत्त्वेन नित्यत्वमुक्तम्** (वै० सू० २।१।१४) इति । अत्राह व्याख्याकार —**द्रव्य हि समवायिकारणाऽसमवायिकारणाऽन्यतरनाशान्नश्यतीति, परमाणोस्तु निरवयवतया नैतदुभयमस्ति** (उप० २।६।१३) इति ।

अथ व्याकरणदृशा वायुर्विचार्यते । इमानि वायुपदघटितानि वायुसम्बद्धानि च सूत्रवार्त्तिकानि । तथाहि—

| | |
|---|---|
| १—**वाय्वृतुपित्रुषसो यत्** | पा० सू० ४।२।३१ |
| २—**वाताऽतिसाराभ्यां कुक् च** | पा० सू० ५।२।१२९ |
| ३—**शॄ वायुवर्णनिवृत्तेषु** | का० वा० पा० सू० ३।३।२१ |
| ४—**तप् पर्वमरुद्भ्याम्** | का० वा० पा० सू० ५।२।१२१ |

**व्याकरणदृशा स्पर्शात्मकत्वेन शब्दात्मकत्वेन च वायोर्द्रव्यत्वसाधनम्—**

वायु स्पर्शात्मको भवति । यथोक्तम्—**स्पर्शात्मकश्च वायुः** (प्र०४।१।३) इति । किञ्च शब्दात्मकोऽपि वायुरस्ति । यथाह—**चाच्छाब्दात्मकः** (उ०४।१।३) इति। एताभ्या कैयटनागेशग्रन्थाभ्या स्पर्शात्मकेन, शब्दात्मकेन च वायोर्द्रव्यत्व सिध्यति । वायोर्द्रव्यत्व हेलाराजोऽपि ब्रूते —**दृश्येषु किञ्चित्किल कार्य जात्याश्रयं निष्पन्नमप्यदृश्यम्—वायुर्द्रव्यम्** (वा० प० हेला० ३।१ २६) इति ।

**क्रियाऽऽश्रयत्वेन वायोर्द्रव्यत्वसाधनम्—**

किञ्च वातेर्वेतेरेतेर्वा गत्यर्थकाद् व्युत्पाद्यमानस्य वायुशब्दस्य क्रियाप्रवृत्ति-निमित्तकत्वेनाऽपि वायोर्द्रव्यत्व सिध्यति । यथाह निरुक्तकार —**वायुर्वातेर्वेतेर्वा स्याद् गतिकर्मणः, एतेरिति स्थौलाष्ठीवि., अनर्थको वकारः** (नि० अ० १० पा० १) इति ।

**वायोरेकत्वसाधनम्—**

अत्र यद्यपि वायुपरमाणवो हि बहवो वर्तन्ते तथापि वातसञ्ज्ञकस्याऽवयविभूतस्य वायोर्बहुत्व न दृश्यते । तथा च वायोरेकत्वमेव, न तु नानात्वम् । यथोक्तम्—**पृथग्वाताऽदर्शनादयुक्तोऽयं वातशब्दस्य सामूहिके पाठ । नहि पृथग् वाता दृश्यन्ते** (म० भा० ४।२।४९) इति। इदमेव मत कैयटस्य व्याख्यानादपि सिध्यति—**वातपरमाणूनामनेकत्वेऽपि वातसंज्ञकस्याऽवयविन एकत्वादनेकाश्रयरूपसमूहाऽनुपपत्तिः** (प्र० ४।२।४९) इति ।

**वायोर्नानात्वसाधनम्—**

वायोरेकत्वमेव स्वीक्रियते चेत् **पूर्वो वातः उत्तरो वात** इति व्यवहारो न सिध्यति, वायोरेकत्वात् । तस्माद् वायोरेकत्वेऽप्युपाधितो नानात्वमस्तीति गम्यते । यथोक्तम्—अथवा **पृथग् वाता अपि दृश्यन्ते । तद्यथा पूर्वो वातः, उत्तरो वातः, सर्वतो वातः, वाता वान्तु दिशो दश** (म० भा० ४।२।४९) इति । विशदीकृतमिदमेव कैयटेनापि—**एकस्याऽपि वातस्य दिग्भेदनिमित्तभेदप्रतिभासादनेकाश्रयसमूहोपपत्तिः । यथैकाऽपि दिक् सूर्योदयास्तमयाद्युपाधिभेदादनेका व्यपदिश्यते । तथा च दश दिश इति लोके व्यवहारः** (प्र० ४।२।४९) इति । एतेन वायोरेकत्व वास्तवम्, नानात्वन्तूपाधिवशाद् भवतीति निश्चीयते ।

वैशेषिका वायोर्नानात्व वास्तवमेव सङ्गिरन्ते[1] । अत एव वैशेषिकमतमादाय **यद्वेति** प्रतीकेन वायोर्नानात्वमेव, अवयविन पृथगुपलम्भादित्युक्त कैयटेन । तथाहि तस्य वचनम्—**यद्वा भिन्ना एव वाताः, अवयविनः पृथगुपलम्भात्** (प्र० ४।२।४९) इति ।

**वायुपरमाणो स्थूलवायोराविर्भावः—**

यथा घटादयो बहिर्भवन्ति स्वकारणात् । तथा वायुरपि स्वकारणादाविर्भवति। यथोक्तम्—**व्यजनाद्वायुरिव स स्वनिमित्तात्प्रतीयते** (वा० प० १। ११६) इति । इदमेवैतद् व्याख्यानादपि—**सर्वत्र परमाणुसम्भवे सहतत्वाद् व्यजनाद्यभिघातेन वायुराश्रयस्थानात् प्रविभज्यमान क्रियाभिराविश्यते** (स्वो० टी० १।११६) इति । इदमेवाह पुण्यराजोऽपि—**सूक्ष्मवायोर्व्यजनाद-**

१—द्र० वै० सू० २।१।१४ ।

**भिव्यक्तिः** (पु० रा० १।११७) इति । एतेन यतो वायुपरमाणवो वर्त्तन्ते । अतस्तेषां नित्यत्वमपि सुतरां सिध्यति । यतो ह्युपरि प्रदर्शितेन सन्दर्भेण वायोः परमाणुत्वमस्तीति गम्यते ।

**शरीरान्तर्वर्त्तिनो वायोर्विवेचनम्—**

शरीरान्तर्वर्त्तिवायुः प्राणिनां सर्वां क्रियां प्रति कारणं भवति । स च यद्यप्येकः, तथापि क्रियाया भेदाद् बह्वीः सञ्ज्ञा लभते । यथा—सर्वतः प्राग्वृत्ति-रुच्छ्वासादिकर्मणा प्राणः[1] । जलादेरधो नयनादपानः । भुक्तस्याऽन्नादेः परि-पाकाय जठरानलस्य समुन्नयनात्समानः । अन्नादेरूर्ध्वनयनादुदानः । स्नायु-सन्धिषु विततनाद्व्यान इति । यथोक्तम्—

> **हृदि प्राणो गुदेऽपानः समानो नाभिमण्डले ।**
> **उदानः कण्ठदेशे स्याद्, व्यानः सर्वशरीरगः ॥**
> (न्या० सि० मु० कि० टी०, उद्० भा० परि० ४३ ख) इति ।

इदमेव मतं हरिहेलाराजावपि स्पष्टीकुरुतः —

> **आविश्येवाऽनुसन्धत्ते यथा गतिमतां गतीः ।**
> **वायुस्तथैव कालात्मा विधत्ते क्रमरूपताम् ॥**
> (वा० प० ३।९।४२) इति ।

**प्राणाख्यो वायुः शरीरिणामन्तरवयवसन्धिष्ववस्थितो गमनाऽऽगमनादि-चेष्टाः साधयति** (हेला० ३।९।४२) इति ।

**वायुसम्बद्धाः केचन शब्दाः—**

अन्, श्वस्, जीव, बलित्येते प्राणार्थका धातुशब्दाः, वातकी, वातिकः, वातुलः, अतिसारः, अतिसारकीत्येते शब्दाः विकृतस्य वायोर्वाचकाः । यथोक्तम्—**वाताऽतिसाराभ्यां कुक् च** (पा० सू० ५।२।१२९), **रोगे चायमिष्यते** (का० वा०) इति । **वातपित्तश्लेष्मभ्यः शमनकोपनयोरुपसंख्यानम्** (का० वा०) इति । शारो वायुः[2], वातूलो वात्या वा झञ्झावायुः । वायव्यम्[3]=वायुदेवतोद्देश्य हविः त्यज्यमानद्रव्यस्य यदुद्देश्यं तस्य देवतात्वम् । यथोक्तम्=**त्यज्यमानद्रव्ये उद्देश्य-विशेषो देवता मन्त्रस्तुत्या च** (सि० कौ० ४।२।२४) इति ।

एतेन वायोर्विविधं स्वरूपमस्तीति गम्यते ।

॥ इति वायुः ॥

---

१—द्र०—शारीरक भा० २।४।१२, प्रश्नोपनिषद्भाष्यञ्चाऽपि ।

२—शॄवायुवर्णनिवृत्तेषु । का० वा० शॄ+घञ्=शारः ।

३—वाय्वृतुपित्रुषसो यत् वायु+यत्=वायव्यम् ।

## (५) आकाशम्

**आकाशस्य साधनम्—**

अत्रादौ वैशेषिकमतमुपन्यस्यते। तथाहि—पृथिव्यादीना रूपादयो गुणा कारण-गुणपूर्वका दृश्यन्ते, शुक्लेभ्य तन्तुभ्य. शुक्ल पट, कृष्णेभ्य तन्तुभ्य कृष्ण पट, लोहितेभ्य तन्तुभ्य लोहित पट इति। पर नह्येतादृश कार्य दृश्यते, यत्र शब्द कारणगुणपूर्वक स्यात्। शब्दरूपो यो विशेषगुण, स कारण-गुणपूर्वको नास्ति, प्रत्युत अकारणगुणपूर्वक। एव यथा रूपादयो विशेषगुणा, तथा शब्दोऽपि। यतो हि रूपादीना बहिरिन्द्रियैश्चक्षुरादिभिर्यथा ग्रहण भवति, तथा शब्दस्यापि बहिरिन्द्रियेण श्रोत्रेणैकेन्द्रियेण ग्रहणम्। यथा रूपादीना गुणत्वाद्रूपादय कस्मिश्चिद् द्रव्य एव तिष्ठन्ति, तथा शब्दस्याऽपि गुणत्वाच्छब्द. कस्मिश्चिद्द्रव्य एव तिष्ठति। न च पृथिव्यादिषु द्रव्येषु शब्दो व्यवतिष्ठते, तस्याऽकारणगुणपूर्वकत्वात्। अत पृथिव्यादिभ्यो भिन्नेष्वेव द्रव्येषु शब्द तिष्ठतीति गम्यते। यथोक्त कणादेन—**कारणगुणपूर्वकः कार्यगुणो दृष्टः** (वै० सू० २।१।२४) इति। इदमेव मतमेतद् व्याख्यानादपि स्पष्टीभवति—**पृथिव्यादिलक्षणे कार्ये ये विशेषगुणा रूपादयस्ते कारणगुणपूर्वकाः दृष्टाः, शब्दोऽपि विशेषगुणो जातिमत्त्वे सति बाह्यैकेन्द्रियमात्रग्राह्यत्वात्, रूपादिवत्। तथा च तादृश कार्यं नोपलभ्यते, यत्र कारणगुणपूर्वकः शब्दः स्यात्** (उप० २।२।२४) इति।

किञ्च यथा पटघटादौ शुक्लनीलादिगुणो दृश्यते, अत एतेषा कारणे तन्तु-कपालादावपि शुक्लनीलादिगुणा, कारणगुणपूर्वका एव कार्यगुणा दृष्टा। तथा वीणावेणुमृदङ्गादिषु कार्येषु शब्द उपलभ्यते यत, अत शब्दोऽपि कारण-गुणपूर्वक एव स्यादिति वक्तु न शक्यते। यतो हि वीणावेणुमृदङ्गाद्यारम्भकाऽवयवेषु य. शब्द (=ठन-ठनात्मक) श्रूयते, तत्सजातीयः शब्दो वीणावेणु-मृदङ्गाद्यवयविषु नोपलभ्यते, प्रत्युत विजातीय एव शब्द। नहि विजातीयेभ्यो नीलतन्तुभ्य शुक्ल पट, रक्तो वा पटो दृश्यते, अपि तु नीलतन्तुभ्यो नील पट शुक्लतन्तुभ्य शुक्लः पट एव।

किञ्च शब्द स्पर्शवता पृथिव्यादीना विशेषगुणो भवेच्चेत्तर्हि तस्य तार-तारतरादिभाव, मन्द-मन्दतरादिभावश्च न प्रतीयेत। यतो हि नह्येकाऽवय-व्याश्रिता गुणा वैचित्र्येण प्रतीयन्ते। प्रत्युत यो हि गुणोऽवयविनि द्रव्ये वर्तते

स एव गुणोऽनुभूयते । अत स्पर्शवता पृथिव्यादीना शब्दो विशेषगुणो नास्तीत्यवधेयम् । यथोक्तम्—**कार्यान्तराऽप्रादुर्भावाच्च शब्द. स्पर्शवतामगुण.** (वै०सू० २ । १ । २५) इति । इदमेव मत विशदीभवति एतद्व्याख्यानादपि—**भवेदेव यथा तन्तुकपालादिषु रूपरसाद्यनुभूयते तत्सजातीयञ्च रूपरसाद्यन्तर पटघटादावुपलभ्यते तथा वीणावेणुमृदङ्गाद्यवयवेषु यः शब्द उपलब्धस्स तत्सजातीयश्चेद् वीणावेणुमृदङ्गाद्यवयविन्युपलभ्येत । न चैवं दृश्यते, प्रत्युत निशब्दैरेवाऽवयवैर्वीणाद्यारम्भदर्शनात् । नीरूपैस्तु तन्तुकपालादिभि पटघटाद्यारम्भस्याऽदर्शनात् । किञ्च यदि शब्दः स्पर्शवता विशेषगुणः स्यात्तदा तत्र तार-तारतर-मन्द-मन्दतरादिभावो नानुभूयेत, नह्येकावयव्याश्रिता रूपादयो वैचित्र्येणाऽनुभूयन्ते । तस्मान्न स्पर्शवद्विशेषगुणः शब्दः (उप० २।१।२५) इति ।**

शब्द आत्मनोऽपि विशेषगुणो नास्ति । यतो हि तस्य श्रोत्रेण ग्रहण भवति । नह्यात्मनो गुणा सुखदु खेच्छादयो श्रोत्रेण गृह्यन्ते, प्रत्युत आत्मगुणा आत्ममनसो सन्निकर्षेणैव । शब्दस्य आत्मगुणत्वे तस्य श्रवणेन्द्रियेण ग्रहण न स्यात् । यथा सुखादीना न भवति । तथा च यत. शब्दस्य श्रोत्रेण ग्रहणम्, अतोऽस्य आत्मगुणत्व नेत्यवधार्यते ।

किञ्च शब्दस्य आत्मनो गुणत्व स्वीक्रियते चेद् यथाह सुखी, अह दु खीतिवदह वाद्ये, अह पूर्ये, अह शब्दवानित्यादिप्रतीतिरपि स्यात् । न च तथा प्रतीति शब्दस्य भवति । किन्तु शङ्ख पूर्यते, वीणा वाद्यते, शब्द श्रूयत इत्यादय एव प्रतीतिसाक्षिका व्यवहारा प्रवर्त्तन्ते ।

किञ्च शब्दस्य आत्मनो गुणत्व स्वीक्रियेत चेद् बधिरेणाऽपि शब्द उपलभ्येत । यथा सुखादीन्यनुभवति बधिर । न च बधिरो जन शृणोति शब्दम् । न च आत्मस्थत्वेन ज्ञान भवति, अपि तु बहिरिन्द्रियेणैव, अतो नास्ति आत्मगुणः शब्द. ।

किञ्च यत शब्दस्य श्रावण प्रत्यक्ष भवति, अतो मनसोऽपि शब्दो विशेषगुणो नास्तीति । तथा सति तस्य श्रावणप्रत्यक्ष न स्यात्, मनसोऽणुत्वात् । अत एव मनोवृत्तिवेगादे प्रत्यक्ष न भवति । यथोक्त कणादेन—**परत्र समवायात्प्रत्यक्षत्वाच्च नात्मगुणो न मनोगुणः** (वै० सू० २।१।२६) इति । इदमेव मत विशदीभवति प्रशस्तपादाचार्यस्य वचसाऽपि—**बाह्येन्द्रियप्रत्यक्षत्वादात्मान्तरग्राह्यत्वादात्मन्यसमवायादहङ्कारेण विभक्तग्रहणाच्च नात्मगुणः** (प्र० पा० भा० पृ० २४) इति ।

किञ्च यत शब्दस्य श्रावण प्रत्यक्ष भवति, अतो दिक्कालयोरपि शब्दो न

विशेषगुणोऽस्तीति । यथोक्तम्—**नाऽऽत्ममनसोर्गुण इति समासे कर्तव्ये यद-समासकरणं तेन तुल्यन्यायतया प्रत्यक्षत्वादित्यनेनैव हेतुना दिक्कालयोरपि गुणत्व शब्दस्य प्रतिषिद्धम्** (उप० २।१।२६) इति ।

एवञ्च यत शब्द श्रोत्रेण गृहीतो भवति, अत शब्दो विशेषगुण , स च क्वचिद्द्रव्य एव व्यवतिष्ठते । नहि द्रव्यमन्तरा गुणस्योपलब्धिर्भवति । यथोक्तम्—**परिशेषाल्लिङ्गमाकाशस्य** (वै० सू० २।१।२७) इति । इदमेवाह प्रशस्तपाद—**पारिशेष्याद् गुणो भूत्वा आकाशस्याऽधिगमे लिङ्गम्** (प्र० पा० भा० पृ० २४५) इति ।

इदमेवाह विश्वनाथोऽपि—**आकाशस्य तु विज्ञेयः शब्दो वैशेषिको गुणः**

(भा० परि० ४४) इति ।

इदमेव विशदीभवति अन्नम्भट्टस्य वचसा—**शब्दगुणकमाकाशम्** (तर्कसग्रह) इति ।

अत्र कश्चिद् ब्रूते—वायोरवयवेषु शब्दस्य यो हि सूक्ष्मसन्तानो वर्त्तते स च सूक्ष्मसन्तान स्थूलशब्दस्य कारण भवति । एतेन शब्दोऽपि घटपटादिरिव कारण-गुणपूर्वक एवेति मन्तव्यम्, तथा च शब्दोऽपि वायोर्विशेषगुण स्यात् । तन्न समीचीनम्, अयावद्द्रव्यभावित्वात् । नहि वायोर्विशेषगुण स्पर्शोऽयावद्द्रव्य-भावित्वेन गृहीतो भवति, प्रत्युत यावद्द्रव्यभावित्वेनैव । नह्येकाऽवयविन्याश्रितो गुण कस्यचिद् यावद्द्रव्यभावित्वेन गृहीतो भवेत्, कस्यचिदयावद्द्रव्यत्वेनेति । तस्माद्वायोर्विशेषगुण शब्दो नास्तीत्यवधेयम् । यथोक्तम्— **न च वाय्ववयवेषु सूक्ष्मशब्दक्रमेण कारणगुणपूर्वक एव वायौ शब्दः स्वीकार्य इति वाच्यम्, शब्दो न वायोर्विशेषगुणो यावद्द्रव्यभावित्वात् सुखादिवत्** (विवृ० २।१।२७) इति । इदमेवाह विश्वनाथोऽपि—**अयावद्द्रव्यभावित्वेन वायुविशेषगुणत्वाऽ-भावात्** (न्या० सि० मु० भा० परि० ४४) इति ।

**आकाशस्य विभुत्वसाधनम्—**

शब्दो हि प्रादुर्भूत सन् सर्वत्र प्रतीयते । अत एवैकत्रोच्चरित. शब्द. शब्दाऽऽकर्षकयन्त्रेण भिन्न-भिन्नदेशस्थितैर्जनै श्रूयते । एतेन शब्दस्य आश्रयभूत यद्द्रव्यम्, तद्विभुद्रव्यमस्तीत्यवधेयम् । यथोक्तम्—**परिशेषसिद्धस्य द्रव्यस्या-ऽवयवकल्पनायां प्रमाणाऽभावान्नित्यत्वम्, सर्वत्र शब्दोपलब्धेर्विभुत्वम्** (उप० २।१।२७ इति ।

**आकाशस्य नित्यत्वसाधनम्—**

यथा वायुपरमाणोर्निरवयवतया नित्यत्वम्, तथा आकाशस्याऽपि विभु-

त्वेनाऽवयवत्वाभावान्नित्यत्वम् । यथा गुणत्वाद् वायोर्द्रव्यत्वम्, तथाऽऽकाशस्याऽपि । अत एवोक्त कणादेन—**द्रव्यत्वनित्यत्वे वायुना व्याख्याते**

(वै० सू० २।१।२८) इति ।

इदमेव विशदीभवति शङ्करमिश्रस्य वचसाऽपि—**अद्रव्यवत्त्वाद्यथा वायोर्नित्यत्व तथाऽऽकाशस्यापि, गुणवत्त्वाद्यथा वायोर्द्रव्यत्वम्, तथाऽऽकाशस्यापि ।** अत्राऽद्रव्यवत्त्वम्=निरवयवत्वम् ।

**आकाशस्यैकत्वसाधनम्—**

यथा सत्ताया एकत्वम्, तथाऽऽकाशस्यापि । यथोक्त कणादेन—**तत्त्वं भावेन** (वै० सू० २।१।२९) इति । सूत्रेऽस्मिन् तत्त्वम्=एकत्वम् । भावेन=सत्तया । इदमेव विशदीकरोति शङ्करमिश्र —**भावः=सत्ता सा यथैका तथाऽऽकाशमप्येकमेव** (उप० २।१।२९) इति ।

किञ्च यदन्यदाकाश कल्पनीयम्, तस्यापि शब्द एव कारणम् । तच्च कारण नाऽपूर्वम्, प्रत्युतोक्तार्थमेवाऽभिदधाति । यथोक्तम्—**शब्दलिङ्गाऽविशेषाद्विशेषलिङ्गाऽभावाच्च** (वै० सू० २।१।३०) इति । इदमेवाह व्याख्याकार —**अन्यदपि यदाकाश कल्पनीयं तत्राऽपि शब्द एव लिङ्गम्, तच्चाऽविशिष्टमेव, न च विशेषसाधक भेदसाधकं लिङ्गान्तरमस्ति** (उप० २।१।३०) इति । एतेनाऽप्याकाशस्यैकत्वमेव, न तु नानात्वमित्यवधार्यते ।

अथ व्याकरणदृशाऽऽकाश विचार्यते । तथा चेदमाकाशस्य पर्यायशब्दघटित वार्त्तिकम् । तथाहि—

१—**नमोऽङ्गिरोमनुषा वेत्युपसंख्यानम्** (पा० सू० १।४।९ का० वा०) इति ।

**व्याकरणदृशा आकाशस्य साधनम्—**

वैशेषिकदर्शने यादृशमाकाशस्य लक्षण कृतमुपलभ्यते, तादृशमेव शब्दशास्त्रेऽपि तस्य लक्षणमस्तीति पूर्वाचार्यस्य व्याख्यानादवगम्यते । यतो हि यथा रूपादिगुणाश्चक्षुरादिभिर्द्रव्यैर्गृह्यन्ते, तथा शब्दोऽपि श्रोत्रेणेन्द्रियेण गृह्यते । न हि कस्यचिद् द्रव्यस्य गुणा अकरणका भवन्ति, प्रत्युत सकरणका एव, गुणत्वात् । अत एव पतञ्जलिना—**श्रोत्रोपलब्धिर्बुद्धिनिर्ग्राह्यः प्रयोगेणाऽभिज्वलित आकाशदेशः शब्द.** (म० भा० मा० सू० १) इत्यनेन ध्वनितम् । अत्र श्रोत्रोपलब्धि =श्रोत्रेणेन्द्रियेण गृह्यते शब्द । एतेन बहिरिन्द्रियग्राह्यविशेषगुण शब्द इति सिध्यति । तथा च शब्दस्य विशेषगुणकथनेन गन्धादिगुणा इव शब्दोऽपि कस्यचिद् द्रव्यस्यैवाऽस्तीति गम्यते । नहि गुणा द्रव्यात्पार्थक्येन प्रतीयन्ते । अत एव **आकाशदेशः शब्द** इत्युक्त पतञ्जलिना । एतेन शब्दाधिकरणमाकाशमस्तीति निश्चीयते । तथा च शब्दसमवायिकारणतया आकाशस्य

द्रव्यत्व सिध्यति । यथाह निरुक्तकारोऽपि—**आकाशगुण शब्द.** (नि० अ० १४ खण्ड ४) इति ।



**आकाशस्याऽधिकरणत्वम्**—

किञ्च सयोगेन समवायेन वा यस्य यदधिकरणम्, तस्य तदधिकरण द्रव्य भवति । अत्र सयोगेन द्रव्याणा द्रव्यमेवाऽधिकरणम् । तद्यथा—इह भूतले घटोऽस्ति । सयोगेन घटवद्भूतलमिति तस्यार्थ । समवायेन गुणक्रियासामान्यानामधिकरण द्रव्यम् । तद्यथा—घटस्य शुक्ल रूपम्, चैत्रस्येय गतिक्रिया, गवि गोत्वम् । अत एव **विप्रतिषिद्धञ्चाऽनधिकरणवाचि** (पा० सू० २।४।१३) इति । सूत्रेऽस्मिन् **शीतोष्णे उदके स्त, अद्रव्यवाचिनामित्यस्य** प्रत्युदाहरण दत्तम् । एतेन शीतोष्णयोरधिकरणमुदकद्रव्यमस्तीति सिद्धान्तितम् । यथोक्तम्—**विरुद्धार्थाना यदि भवति तर्ह्यद्रव्यवाचिनामेवेति नियमार्थमिदम् । तेन द्रव्यवाचिनामितरेतरयोग एव । शीतोष्णे उदके स्त** (सि० कौ० २।४।१३) इति ।

अधिकरण हि द्रव्य भवति । यथाह पतञ्जलि — **द्रव्य हि लोके अधिकरणमित्युपचर्यते । तद्यथा एकस्मिन् द्रव्ये व्युदितम्, एकस्मिन्नधिकरणे व्युदितम्** (म० मा० २।१।१) इति ।

एवञ्च यथा शीतोष्णयोरधिकरणमुदकद्रव्यमस्ति, तथा शब्दस्याऽधिकरणमाकाशद्रव्यमस्तीति गम्यते ।

किञ्च पक्षिण उड्डीयन्ते, ग्रहनक्षत्रमण्डल नभसि दृश्यते, ग्रहनक्षत्रविमानादय सञ्चरन्ति गगने । एतेषा पक्ष्यादीना या: सञ्चरणादिरूपा क्रिया भवन्ति, तासा क्रियाणामधिकरणमाकाशमेवाऽस्तीति । यतो हि नह्यत्र पृथिव्यादीन्यधिकरणानि भवितुमर्हन्ति । न च किमप्यधिकरणमन्तरा तेषा ताः क्रिया उत्पत्तु प्रभवन्ति । अधिकरणमन्तरा ता क्रिया भवेयुश्चेत् वयमपि तदन्तरा कुत्रचित्स्थिति कर्त्तु शक्नुयाम । परन्त्वेतन्न सम्भवति । तथा च यथाऽस्मदादीना कुत्रचित् स्थितये किञ्चिदधिकरणमपेक्षते, तथा पक्ष्यादीना ता क्रियाः प्रत्यपि । तथा च पृथिव्यादीना प्रतिषेधात्पारिशेष्यादाकाशमेवाऽधिकरण तासा क्रियाणाम् ।

किञ्च यस्य घटादेरधिकरण पृथिव्येकदेश, तस्यापि पृथिव्येकदेशस्य पारम्पर्येणाऽऽकाशमेवाऽधिकरणमस्ति । यथा घटपटादीनामवयविना तदवयवा कपालतन्तवोऽधिकरण भवन्ति । एतेषा चरमाऽवयवा. परमाणव । एतेषा परमाणूनामाकाशमेवाऽधिकरणम् । तथा च सर्वेषा भावपदार्थाना मुख्यमधिकरणमाकाशमेव । यथोक्तम्—

> **आकाशमेव केषाञ्चिद् देशभेदप्रकल्पनात् ।**
> **आधारशक्ति प्रथमा सर्वसंयोगिनां मता ॥** वा० प० ३।७।१५१॥

**ग्रहनक्षत्रविमानादीनां तावदाकाशमेवाऽधिकरण प्रसिद्धम् । येषामपि पृथिव्येकदेशो रथादीनामधिकरणम्, तेषामपि तस्य पृथिव्येकदेशस्याऽऽकाशाऽऽधारत्वात्पारम्पर्येणाऽऽकाशमेवाऽऽधार. । समवायिनान्तु स्वाऽवयवा आधारा. । तत्राऽपि पर्य्यन्ते परमाणव· । एतेषाञ्चाऽऽकाशमेव देशप्रविभागकारणमाधार इति मुख्याऽऽधारशक्तिराकाशाऽऽश्रयो भावानाम्** (हेला० ३।७।१५१) इति ।

किञ्चेद ग्रहनक्षत्रमण्डलमत्र तिष्टतीति वाक्यजन्यबोधे **अत्रे**ति पदेन यन्निर्दिष्ट भवति, तत्किमपि वस्त्वेव स्यात् । नहि वस्त्वन्तरा **अत्रे**त्यस्य निर्देष्टव्य स्यात् । यथा **अत्र घटोऽस्तीति** वाक्येऽत्रेति पदेन किञ्चिल्लक्ष्यते, यल्लक्ष्यते तद्वस्त्वेवाऽस्तीति गम्यते । तथाऽत्रेद ग्रहनक्षत्रमण्डलमस्ति । **अत्रे**ति पदेन किञ्चिद् वस्त्वेव स्यात् । यतो हि कस्यचिन्निरूपितस्यैव वस्तुन श।ब्दव्यवहारो जायते । निरूपणञ्च वस्तुनिबन्धन भवति । तथा च नहि तद्वाक्ये **अत्रे**ति पदेन पृथिव्यादेर्वस्तुनो ग्रहण भविष्यति, ग्रहनक्षत्रादीनामनधिकरणत्वात् । अत पारिशेष्यादाकाशमेवाऽधिकरण द्रव्यमस्तीति । यथोक्त हरिहेलाराजाभ्याम् ।

> **इदमत्रेति भावानामभावान्न प्रकल्पते ।**
> **व्यपदेशस्तमाकाशनिमित्त संप्रचक्षते ॥** वा० प० ३।७।१५२ ॥

**इद नक्षत्रमण्डलमत्र तिष्ठति । अत्रेति यन्निर्दिष्ट भवति तत्किञ्चन वस्तु भवत् पृथिव्यादेरन्यदाकाशाख्यामवलम्बते । न चाऽवस्त्वेतत्, निरूप्यो हि व्यपदेशो, निरूपणा च वस्तुनिबन्धना, शाब्दे व्यवहारे निरूपितस्यैव वस्तुत्वात्** (हेला० ३।७।१५२) इति ।

किञ्च सर्वेषा मूर्त्तानामधिकरणमाकाशमेव भवति सर्वमूर्त्तद्रव्यसयोगित्वात् । आकाश हि सर्वेषा मूर्त्ताना पदार्थाना स्थितयेऽवकाश प्रयच्छति । न कमपि प्रतिषेधति । अत एव तस्य आकाशत्वम्, अवकाशदानात् । यथोक्त हरिहेलाराजाभ्याम् ।

> **सयोगिधर्मभेदेन देशे च परिकल्पिते ।**
> **तेषु देशेषु सामान्यमाकाशस्यापि विद्यते ॥** वा० प० ३।१।१५ इति ।

**आकाशं हि सर्वेषां मूर्त्तानामधिकरणम् । अवकाशदानाद्धि तदाकाशम्** (हेला० ३।१।१५) इति ।

किञ्च आकाशस्य शब्दतन्मात्रमुपादान कारणमस्ति, तस्य शब्दतन्मात्रस्योपादेयमाकाशमस्ति । तथा च शब्दतन्मात्रस्य द्रव्यत्वादाकाशस्याऽपि द्रव्यत्व सिध्यति । यतो हि कारणमनतिरिक्तमेव कार्य भवतीति । अत एव **आकाशं**

**शब्दात्मकमेव** (प्र० ४।१।३) इति कैयटेनोक्तम् । इदमेव मत ग.ब्दिकाना सिद्धान्तभूतमस्ति, **गुणसमुदायो द्रव्यमि**त्यस्य स्वीकारात् । अमुमेव सिद्धान्त साख्या वेदान्तिनश्च पञ्चीकरणप्रक्रियया5भ्युपगच्छन्ति[1] । आकाशदेश शब्द इति भाष्यग्रन्थस्तु वैशेषिकाऽभिप्रायेण भाष्यकृता व्युदपादि ।

**आकाशस्यैकत्वसाधनम्—**

यद्यप्युपाधिवशेनाऽऽकाशस्य नानात्वव्यवहारो भवति । यथा—घटाकाश, मठाकाश इत्यादि । तथाप्युपाधौ विनष्टे त्वेकमेवाऽऽकाश परिशिष्यते । अत आकाशस्यैकत्व वास्तवम्, नानात्वन्तु अवास्तवमेवेत्यवधार्यते । यथोक्त पतञ्जलिना—**एकञ्च पुनराकाशम्, आकाशदेशा अपि बहव.** (म० भा० मा० सू० १) इति ।

किञ्च यथा पृथिव्या एकत्वेऽपि देशभेदेन सा नाना भवति । तथाऽऽकाशस्यैकत्वेऽपि मूर्त्तद्रव्यसयोगिभेदेनाऽऽकाशमपि नानाविध भवति । अत एव पूर्वदेशसयोगेन पूर्वमाकाशम्, परदेशसयोगेन परमाकाशमिति । यथोक्तम्—**यथा पृथिव्या एकत्वेऽपि स्रुघ्नमथुरादिदेशव्यवहार, एवमाकाशस्यापि सयोगिघटादिपदार्थाऽवच्छेदेन भेदव्यवहार** (प्र० मा० सू० १) इति ।

इदमेव हरिरप्याह—

> **आकाशस्य प्रदेशेन भागैश्चाऽन्यै पृथक् पृथक् ।**
> **सा सयोगविभागानामुपाधित्वाय कल्पते ॥**
>
> (वा० प० ३ । ६ । ५) इति ।

इदमेव हेलाराजोऽप्याह—**सयोगिधर्मभेदेनाऽऽकाशस्य देशविभागः । तथा च मूर्त्तद्रव्यसयोगेन प्रदेशवृत्तिना परिकल्पितो य. प्रदेश आकाशस्य, तेन सह मूर्त्तद्रव्यगतैर्भागैर्व्याप्यवृत्तित्वाद्यथायथं ये सयोगविभागास्तेषा दिगवच्छेदाय पूर्वापरादिभिन्ना प्रभवतीति । तदुपाधिप्रदेशानामाकाशस्य कल्पितानां पूर्वापरादिव्यवहारः । तथा च पूर्वाकाशसयुक्त पूर्व, पराकाशसयुक्तः पर** (हेला० ३।६।५) इति ।

**आकाशस्य जातित्वसाधनम्—**

आकाशस्यैकत्वेऽपि नानात्वमुपाधिबलेन तस्य.ऽस्ति । तथा चौपाधिकनानाविधाऽऽकाशद्रव्येषु इदमाकाशमिदमाकाशमित्यनुगतप्रतीते सत्त्वादाकाशत्वमिति जाति कल्पनीया । यथाऽनेकेषु घटेषु घटोऽय घटोऽयमित्यनुगतप्रतीते

---

१—तन्मात्रेभ्य स्थूलभूतानि । सा० सू० १।६० ॥

पञ्चतन्मात्राणि भूतानामाकाशादीना प्रकृतय । सा० तत्त्वकौ०, का० ३

अपि च द्र०—पञ्चदशी १।२७, वेदान्तपरि० पृ २५७, वेदान्तसार. पृ ४१

सत्त्वाद् घटत्वमिति जाति सिध्यति, तथाकाशत्वमपि । यथोक्तम्—

**सयोगिधर्मभेदेन देशे च परिकल्पते ।**
**तेषु देशेषु सामान्यमाकाशस्याऽपि विद्यते ॥** वा० म० ३।१।१५ ॥ इति ।

इदमेवाह हेलाराज—**इदमाकाशम्, इदमाकाशम्, इत्यभिन्नाऽभिधानप्रत्यक्षाऽनुवृत्तिलक्षणमाकाशसामान्यमाकाशशब्दगोचरोऽस्ति** (हेला० ३१।१५) इति ।

नैयायिका वैशेषिकाश्चाऽऽकाशस्य जातित्व न स्वीकुर्वन्ति, एकव्यक्तिवृत्तित्वात् । किन्त्वाकाशत्वमित्युपाधि । तच्चाऽखण्डोपाधिरूपम्[1] ।

**आकाशस्य द्रव्यान्तरै. सह विरोधाभाव —**

पृथिव्यादयो हि मूर्त्ता, एते परस्परस्थिति विरुन्धाना स्वाऽधिकरणेऽन्यस्य स्थिति न सहन्ते । अत एव कूपाज्जलमुद्धर्त्तु कूपे घटादिपात्रस्याऽवगाहने सति यावत्काल घटादिपात्राद् वायोर्निर्गमन न भवति, तावत्काल घटादिपात्र जलेन पूर्ण न भवति, अब्वाय्वो परस्परविरोधित्वात्, मूर्त्तत्वाच्च । अत एव निर्गमने तु वायोर्जलेन पूर्णो घटादिर्भवति । तेन मूर्त्ता परस्पर स्थितेर्विरोधिनो भवन्तीति निश्चीयते । आकाशन्तु सर्वमूर्त्तद्रव्यसयोगित्वेन स्वाधिकरणे स्वस्मिन्नवयवे च कस्यचिदपि द्रव्यस्य स्थिति न विरुन्धे, सर्वमूर्त्तद्रव्यसयोगित्वात् । यथोक्तम्—

**मूर्त्तास्तु भावा. परस्परं प्रतिबन्धका इति न तेऽवकाशदायिनः**
(हेला० ३।१।१५)

**आकाशस्य प्रवाहनित्यताया साधनम्—**

यद्यपि सृष्टे सत्तापर्यन्तमाकाशस्य सत्तास्तीति एतेनाऽस्य नित्यत्व सिध्यति तथाऽपि **तस्माद्वा एतस्मादात्मन आकाश. सम्भूतः** (तै० उप० ब्रह्मवल्ली ख० १) इति श्रुतिप्रामाण्येन आत्मन आकाश जायत इति । एतेनाऽस्य जन्यत्ववचनादनित्यत्वमपि गम्यते ।

एवञ्च श्रुतिप्रामाण्येनाऽस्याऽनित्यत्वेऽपि प्रवाहनित्यताऽऽकाशस्याऽस्त्येवेति विज्ञेयम् ।

इत्याकाशम्

---

१—आकाशकालदिशामेकैकव्यक्तित्वादाकाशत्वादिक न जाति, किन्तु आकाशत्वम्=शब्दाश्रयत्वम् । न्या० सि० मु० भा० परि० ४४ । इति ।

## (६) कालः

**कालस्याऽभ्युपगमे हेतूपन्यासः**

जगति विविधा क्रिया प्रवर्त्तमाना दृश्यन्ते। एता क्रियाश्चतुर्णा धर्मार्थ-काममोक्षाणा पुरुषार्थाना निष्पत्तये प्रवर्त्तन्ते। अत एव कश्चिज्जनो धर्मे प्रवृत्त, कश्चिज्जनोऽर्थोपार्जने, कश्चिज्जनो विविधेषु इच्छितेषु कर्मसु, कश्चिज्जनस्तत्त्वचिन्तने च। एतासा क्रियाणा या प्रवर्त्तना समुदेति, सा कस्मिश्चित्काल एव, कालमन्तरा क्रियाणामनुदयात्। तथा चाऽशेषपुरुषार्थनिर्वृत्तये कालज्ञानप्रयोगकौशलस्याऽत्यन्ताऽऽवश्यकत्वात् कालविमर्शोऽवश्यमेषणीय। यथा—धर्म्यक्रियासु कालस्य विचार कर्त्तव्य इति भगवतोपदिष्टम्—**देशे काले च पात्रे चे**ति गीतायाम्, यथा वा ज्योतिषादिषु जन्मादिविचारे, आयुर्वेदे औषध-प्रयोगविचारे च कालज्ञानस्य प्रयोजनवत्ताऽस्ति, यथा वा नौयानादिपर्यटनस्य ससिद्धयर्थ कालज्ञानमावश्यकम्, एव लोके वेदे च कालविचारस्याऽत्यन्ताऽऽवश्यकता वरीवृत्यत एव। अत प्रयोजनवत्त्वात् सफलत्वाच्च कालस्य विज्ञान यथान्याय कर्तव्यमिति प्राप्तम्।

किञ्च सूर्य समुदेति, एतेन दिवस समायाति रात्रिर्गच्छति, एव चन्द्र उदेति, एतेन रात्रिरागच्छति, दिवसो विगच्छति च। शरद्धेमन्त-शिशिरादय षड् ऋतव परिवर्त्तन्ते। सर्वे ग्रहा नक्षत्राणि च सर्वाणि अहर्निश गतिशीलानि सलक्ष्यन्ते। नहि कश्चित् स्वस्मिन्नात्मनि मुहूर्त्तमप्यवतिष्ठते वर्धते वा यावदनेन वर्धितव्यम्, अपायेन वा युज्यते। अत्र परिवर्त्तनस्य कासाञ्चिदवस्थाना परिबोधनाय अवस्थायाश्च पूर्वापरसम्बन्धज्ञानाय कश्चिदुपायोऽभ्युपैतव्य। स च क. ? इति जिज्ञासा जागर्ति। अस्या उपशान्तये काल एव बुद्धौ समायाति।

किञ्च सूर्यचन्द्रयो गतिक्रियया एको दिवसो जायते। सप्ताना दिवसानामेक सप्ताहो भवति। सप्ताहद्वयस्यैक पक्ष, पक्षद्वयस्यैको मास। द्वादश-मासानामेको वत्सरो भवति। अतएव द्वादशवर्षोऽय बाल इति लोकव्यवहार। वत्सरपरिवत्सरादय शब्दा, भूतभविष्यद्-वर्तमानादयश्च व्यवहारविद्भिर्व्य-वह्रियन्ते। एतेषा लोकव्यवहाराणा मूल कारण काल एवाऽस्ति।

किञ्च सर्वेषा भावपदार्थाना जन्मादिषड्विकारा भवन्ति। यथा—यदा चैत्रस्य मैत्रो नाम पुत्रोऽजनिष्ट, तदा मैत्रो जायत इति जनिक्रियाया व्यवहार। यदा उत्पन्न सन् मैत्र स्थिति करोति, तदा मैत्रोऽस्तीति सत्तात्मिकाया क्रियाया व्यवहार.। यदा मैत्रस्याऽवयवस्य कश्चिद् विकार, स्वभावविपर्ययो

वा भवति तदा मैत्रो परिणमत इति परिणतिक्रियाया व्यवहार । यदा मैत्र शैशवमतिक्रम्य यौवनमाप्नोति तदा मैत्रो वर्धत इति वर्धनक्रियाया व्यवहार । यदा मैत्रो ज्वरादिना समाक्रान्तो भवति, तदा मैत्रस्य शरीरेऽङ्गाना ह्रासो लक्ष्यते, एतेन मैत्रोऽपक्षीयत इति क्षयतिक्रियाया व्यवहार । यदा मैत्रो वार्धक्य प्राप्नोति **जातस्य हि ध्रुवो मृत्युर्ध्रुव जन्म मृतस्य च** इति गीतावचनस्य प्रामाण्यानुरोधेन मैत्रो म्रियते चेत् तदा विनश्यतिक्रियाया व्यवहार प्रवर्त्तते । एवमेव सर्वेष्वपि भावपदार्थेषु तत्तद्विकारनिर्देशाय सा सा क्रिया व्यवह्रियते । एतासा क्रियाणा व्यवहारस्याऽसाधारण कारण काल एव भवतीति निश्चीयते ।

**कालस्य पारिभाषिक स्वरूपम्—**

कालस्य स्वरूप नानाविधेषु दार्शनिकचिन्तनसम्प्रदायेषु नैकविध समुपलभ्यते । कालो नाम ब्रह्मण स्वातन्त्र्यशक्तिरिति भर्तृहरिर्ब्रूते । आत्मा पुरुषो जीव एव काल इति कश्चिदाह । विग्रहवती महाप्रभावा देवता एव काल । प्रजानामुत्पत्तिप्रभृतिहेतुत्वेन प्रजापतिरेव काल इति लगधो मुनिराचष्टे । येन मूर्तिनामुपचयाऽपचयाश्च लक्ष्यन्ते स काल इति पतञ्जलि । आदित्यग्रहतारादिपरिस्पन्दरूप एव काल इति लौकिका । चित्तपरिणामस्य ज्ञानमेव वास्तविक काल इति चिद्विलासो सङ्गिरते । एव सर्वाण्यपि कालस्य स्वरूपाणि सत्यान्येव सन्तीति निश्चीयते ।

**कालस्य साधनम्—**

अथ कालो विचार्यते । अत्रादौ वैशेषिकमतमुपन्यस्यते । तथाहि—चैत्रोऽय मैत्रात्पर, मैत्रोऽय चैत्रादपर इति व्यवहारो दृश्यते । अत्र पर =ज्येष्ठ, अपर =कनिष्ठ, न तु दूरत्वसमीपत्वे ताभ्या गृह्येते । एव युगपज्जात, चिरञ्जात क्षिप्र जात इत्यादिव्यवहारो भवति । एतेषामसाधारण कारण काल एव भवति । यथोक्त कणादेन—**अपरस्मिन्नपर युगपत् चिर क्षिप्रमिति काललिङ्गानि** (वै० सू० २।२।६) इति । इदमेवैतद्व्याख्यानादपि समायाति **बहुतरतपनपरिस्पन्दान्तरितजन्मनि स्थविरे युवानमवधि कृत्वा परत्वमुत्पद्यते एव स्थविरमवधि कृत्वा यून्यपरत्वोत्पत्तिरिति** (उप० २।२।६) ।

अत्र परत्वाऽपरत्वे प्रत्यसमवायिकारण यो भवति स एव काल इति कथ्यते । यथोक्तमुपस्कारकृता—**कालस्यैव मार्त्तण्डसयुक्तस्य पिण्डेन सयोगः परत्वाऽपरत्वयोरसमवायिकारणम्** (उप० २।२।६) इति ।

परत्वाऽपरत्वे प्रत्यसमवायिकारण रूपादि भवितु नार्हति । यतो हि वायौ त्रयाणा रूपरसगन्धानामभावादपि परोऽय वायु, अपरोऽय वायुरिति व्यवहारो भवत्येव । न च स्पर्श समवायिकारण भवितु शक्नोति । यतो हि शीतोष्णभेदेन भेदे सति जलादौ परत्ववति शीताद्येकैकस्पर्शस्यैव सत्त्वात्, तत्रोष्ण-

स्पर्शस्याऽभावाद् व्यभिचार, एवमग्नौ परत्ववत्युष्णस्पर्शस्यैकैकम्य सत्त्वात्, तत्र शीतस्पर्शस्याऽभावाद्व्यभिचार, अत स्पर्शोऽप्यसमवायिकारण परत्वाऽपरत्वे प्रति न भवितुमर्हति । यथोक्तम्—**न च रूपाद्यसमवायिकारण व्यभिचारात्, त्रयाणां गन्धादीना वायौ परत्वाऽनुत्पादकत्वात् । स्पर्शस्याऽप्युष्णादिभेदेन भिन्नस्य प्रत्येक व्यभिचारात्** । (उप० २।२।६) इति ।

न च परत्वाऽपरत्वे प्रत्यसमवायिकारणमवच्छिन्नपरिमाणम् (=**अपकृष्ट**-परिमाणम् ) भवितुमर्हति । यतो हि परिमाण खलु स्वोत्कृष्टसजातीयपरिमाणमेव जनयति । यथाऽणुपरिमाण द्व्यणुकपरिमाण प्रति, यथा वा द्व्यणुकपरिमाण त्र्यणुकपरिमाण प्रति भवति । अवच्छिन्नपरिमाणस्य परत्वाऽपरत्वे विजातीये स्त । अत ते प्रत्यवच्छिन्नपरिमाण कारण न भवत । यथोक्तम्—**न वाऽवच्छिन्नपरिमाण तथा, तस्य विजातीयाऽनारम्भकत्वात्** (उप० २।२।६) इति ।

एवञ्च सूर्यक्रियायाश्च व्यधिकरणत्वात्तदवच्छिन्नद्रव्यसयोग एवाऽसमवायिकारणमवशिष्यते । तच्च द्रव्य पिण्डमार्तण्डोभयसयुक्त विभु भवेत् । आकाशस्य तादृश स्वभाव स्वीक्रियेत चेत्तर्हि कुत्रचिद् भेर्यभिघाते सर्वभेरीषु शब्दोत्पत्तिप्रसङ्ग स्यात्, आकाशस्य विभुत्वात् । तस्मान्मार्त्तण्डसयुक्तस्य कालस्यैव पिण्डेन सयोग परत्वाऽसमवायिकारणमस्ति । तथा च काल एव मार्त्तण्डक्रियोपनायकोऽस्ति । स एव परत्वाऽपरत्वे प्रत्यसाधारण कारणमस्तीति गम्यते ।[1]

**कालस्य भेदविचार**—

स च काल क्षणलवादिभेदेन नानाविध । परन्तु क्षणादिभेदो न कालस्य वास्तव, प्रत्युत औपाधिक एव । यथैक एव स्फटिकमणिर्जपाकुसुमाद्युपाधिसम्पृक्तो नानाविधप्रतिबिम्बं गृह्णाति, तथैक एव काल सूर्यक्रियाद्यवच्छेदकभेदेन तत्तत्कार्यावच्छेदकभेदेन च भिन्न प्रत्यवभासते । तथा च यथोपाध्युपरमे सत्येक एव स्वच्छ स्फटिको मणि, तथा सूर्यक्रियाद्यवच्छेदकोपाधिविगमे सत्येक एव काल । यथोक्तम्—**एक एव स्फटिकमणिर्जैवातपिञ्जाद्युपाध्युपरागेण भिन्न इव भासते, तथैक एव काल सूर्यस्पन्दनाद्यवच्छेदकभेदेन तत्तत्कार्याऽवच्छेदकभेदेन च भिन्न इव भासते** (उप० २।२।८) इति ।

एवञ्च कालस्यैकत्वेऽपि औपाधिकभेदमादाय कालस्यैवाऽनीताऽनागतवर्त्तमाना इति त्रयो भेदा जायन्ते । अत्र येन वस्तुना य कालोऽवच्छिद्यते स तस्य वर्तमान, प्रागभावेन य कालोऽवच्छिद्यते स कालो भविष्यत्, प्रध्वसेन य कालोऽवच्छिद्यते स तस्याऽनीतकालो भवति । एवविध तत्तदवच्छेदकेनाऽवच्छिद्यमान कालो नानाविधाख्या लभते ।

1. द्र० उप० २।२।६ ।

**कालो जगत उपादानं कारणम्—**

यानि खलु विभूनि द्रव्याणि, तेषु युगज्जात, क्षिप्र जातः, इदानीं जात, दिवा जात, रात्रौ जात, मध्याह्ने जात, साय काले जात, प्रत्यूषे प्रादुर्भूत इत्यादि व्यवहारा न भवन्ति। किन्तु यानि खलु मूर्त्तानि द्रव्याणि, तेषु ते व्यवहारा भवन्ति। किञ्च पुष्पफलादिवस्तूनामिद हैमन्तिक वस्तु, इद वासन्तिक वस्तु, इद प्रावृषेण्यमित्यादिप्रत्ययात् काल एवैतेषामसाधारण कारणमिति निश्चीयते। यथोक्त कणादेन—**नित्येष्वभावादनित्येषु भावात्कारणे कालाख्येति** (वै० सू० २।२।६) इति। इदमेव विशदीकृत विश्वनाथेनाऽपि।

**जन्यानां जनकः कालो जगतामाश्रयो मत**. (भा० परि० ४५) इति। अथ व्याकरणदृशा कालो विचार्यते। इमानि कालपदघटितानि सूत्राणि तथाहि—

| | |
|---|---|
| १—**कालाः परिमाणिना** | पा० सू० २।२।५ |
| २—**कालाः** | पा० सू० २।१।२८ |
| ३—**कालाऽध्वनोरत्यन्तसंयोगे** | पा० सू० २।३।५ |
| ४—**कालविभागे चाऽनहोरात्राणाम्** | पा० सू० ३।३।१३७ |
| ५—**कालेभ्यो भववत्** | पा० सू० ४।२।३४ |

**कालशब्दस्य निष्पत्तिः—**

कालशब्दस्य निष्पत्तौ बहूनि मतानि दृश्यन्ते। तत्र प्रथम निरुक्तकारस्य यास्काचार्यस्य मत प्रस्तूयते। तथाहि—अय हि काल सर्वाण्यपि चराचरभूतानि स्वगत्या कालयति क्षय नयति। नहि किञ्चिदपि भूतमस्ति, यस्य क्षयो न भवति। अत एव **जातस्य हि ध्रुवो मृत्युर्ध्रुव जन्म मृतस्य चेति** गीतायामुक्तम्। एतेन यत्किञ्चिदपि भवति तस्य मूल कारण काल एव भवति। काल सर्वस्य कारणमिति प्रतीतिसाक्षिको व्यवहार। यथा ब्रूते यास्क.—**कालः कालयतेर्गतिकर्मण** इति[1]। अस्य निर्वचन **निघण्टु**भाष्ये इत्थ हि दृश्यते—**स हि सर्वाण्येव भूतानि कालयति क्षय नयतीति**। अत्र **स हि** इत्यस्य कालो हीत्यर्थो ग्राह्य।

क्षीरस्वामी तु—कलयत्यायु. काल इति ब्रूते[2]। एतेन आयुरुत्तरोत्तर कलयति=उन्नयति=उत्कर्ष प्रापयति य स काल इति गम्यते।

पाणिनीयधातुपाठे कल शब्दसख्यानयो, कल क्षेपे, कल गतौ सख्याने चेति कलधातो बहवोऽर्था समुपलभ्यन्ते। तथापि **कलयति जगदेष कालोऽतः कालोऽपि कल्यते येनेति** भोजराज। **कालोऽन्य. कलनात्मक** इति सूर्यसि-

१. निरुक्त २।२५।१।

२. अमरकोश १-१।५८।

द्धान्त [1]। **सः कलाः कालयन् सर्वा कालाख्या लभते विभुः**[2]। **कालः कलयतामहमिति** गीतावचनम्। एतेन गत्यर्थे सख्याने च कालशब्दस्य प्रयोगात्, गति सख्यानञ्च कालस्य व्युत्पत्तिलब्धौ धर्मौ स्त इति निश्चीयते।

**कालस्य लक्षणम्**—

अस्मदादीना शरीराऽवयवा कदाचिदुपचयधर्मारिग कदाचिदपचयधर्मारिगश्च यथा—बाल्याद्यवस्थाया आरभ्य यौवनाऽवस्थापर्यन्तमुपचयोऽवयवानाम्, यौवनाऽवस्थात आरभ्य वार्धक्याऽवस्थापर्यन्तमपचयोऽवयवानाम्। एवमेव लतातृणतरवोऽप्युपचय कदाचित्प्राप्नुवन्ति, अपचयञ्चाऽपि। किं बहुना पर्वतादयोऽपि कदाचित्क्षीयन्ते, कदाचिदेधमानाश्च दृश्यन्ते। अत एव भवनानि **निर्माणकाले** वर्द्धमानानि दृश्यन्ते, पुनश्च तान्येव कदाचिद्ध्वसयुक्तानि लक्ष्यन्ते। एषामुपचयाऽपचयादीना कारण काल एवेति ब्रूमहे वयम्। यथोक्तमाचार्यै—**येन मूर्त्तीनामुपचयाऽपचयाश्च लक्ष्यन्ते त कालमाहु** (म० भा० २।२।५) इति।

इदमेवाह कैयटोऽपि—**तरुतृणलताप्रभृतीना कदाचिदुपचयः, अन्यदा त्वपचयः। स प्रत्ययाऽन्तराऽविशेषेऽपि यत्कृत. स काल**· (प्र० २।२।५) इति। इदमेव भर्तृहरिरप्याह—

**मूर्त्तीना तेन भिन्नानामाचयाऽपचया पृथक्।**
**लक्ष्यन्ते परिणामेन सर्वासां भेदयोनिना॥** वा० प० ३।६।१३ **इति।**

इदमेव हेलाराजोऽप्याह—**प्राण्यप्राणिरूपाणां भावाना तेन कालेन परिणामकरणादानुपूर्व्या वृद्धिह्रासा विवेकेन लक्ष्यन्ते यौवनस्थविराऽवस्थासु** (हेला० ३।६।१३) इति।

**काल एव षड्भावभेदस्य कारणम्**—

किञ्च स्वोपादानादाविर्भवति कश्चित्पदार्थश्चेत्तर्ह्युत्पद्यत इति व्यवहार। उत्पन्ने सति तिष्ठतीति ततोऽस्तीति व्यपदेश। अवयवानामुपचये सति वर्द्धते पुनश्चाऽवयवानामपचये सति अपक्षीयत इति प्रतीतिसाक्षिको व्यवहार। एवमेवाऽऽक्षीयमाणे सति नश्यतीति व्यवहार। यथोक्तम्—

**अध्याहितकला यस्य कालशक्तिमुपाश्रिता.।**
**जन्मादयो विकाराः षड् भावभेदस्य योनयः॥** वा० प०—१।३। **इति।**
**उत्पत्तौ च स्थितौ चाऽपि विनाशे चाऽपि तद्वताम्।**
**निमित्त कालमेवाहुर्विभक्तेनात्मना स्थितम्॥** वा० प० ३।६।३ इति।

---

१ सूर्यसिद्धान्ते—१।६०।

२. वा० प० ३। कालसमुद्देश १४।

इदमेव कैयटोऽप्याह—**नित्यं काल पदार्थानामनुज्ञा[1] प्रतिबन्धार्थाभ्यां[2] स्थित्युत्पत्तिप्रलयहेतुमाचक्षते । तत्र ससर्गिसूर्यादिक्रियाभेदाश्रयो मासादिभेद-व्यवहारो भूतादिव्यपदेशश्च** (प्र० ३।२।८४) इति ।

**काल एव क्रियाया· परिच्छेदकः—**

किञ्च काल क्रियारूपेणैव भासते । क्रिया च सूर्यपरिस्पन्दनात्मिका । सा च प्रसिद्धा सर्वासा क्रियाणा परिच्छेदकत्वात् । क्रियाया परिच्छेदश्च मास-दिवसादिना भवति । अत एव मासमधीते, दिवसमधीत इत्यादिव्यवहार । एतेन सूर्यगति परिच्छिद्यते । यथोक्तम्—**कालो हि प्रसिद्ध-परिमाणा क्रिया, अप्रसिद्धपरिमाणस्य क्रियान्तरस्य परिच्छेदिका । यथा—दिवसमधीत इति । दिवसशब्देनोदयादिरस्तमयान्त आदित्यगतिप्रबन्ध उच्यते । स चाऽध्ययनस्य परिच्छेदकत्वात्काल** (प्र० १।१।७०) इति[3] ।

इदमेवाह हरिरपि—

> **क्रियान्तरपरिच्छेदे प्रवृत्ता या क्रियां प्रति ।**
> **निर्ज्ञातपरिमाणा सा काल इत्यभिधीयते ॥**
> **काल एव हि विश्वाऽऽत्मा व्यापार इति कथ्यते ।**
>
> (वा० प० ३।९।७७, ३।९।१२) इति ।

**कालस्यैव निमेषादिभेदाः—**

निमेष-काष्ठा-कला-क्षण-लव-पलादिक्रमेणैको मुहूर्त्तो जायते । सार्धद्वयमुहूर्त्तेन एको घण्टात्मक कालो जायते । घण्टात्रयेणैक प्रहर, प्रहरचतुष्टयात्मकेन दिवस, प्रहराऽष्टात्मक काल एकोऽहोरात्रो भवति । पञ्चदशाऽहोरात्रेणैक पक्ष·, पक्षद्वयात्मको मास इति । मासद्वादशात्मक सवत्सर, तस्याऽसकृदावृत्त्या युगमन्वन्तरादिव्यवहारो जायते । यथोक्त पतञ्जलिना—

**कालस्यैव हि कयाचित् क्रियया युक्तस्याऽहरिति[4] च भवति, रात्रिरिति च । तयैवाऽसकृदावृत्त्या मास इति भवति, सवत्सर इति च** (म०भा० २।२ ५) इति ।

---

१. अनुज्ञा=स्थित्युत्पत्तिहेतु ।

२. प्रतिबन्ध =प्रलयहेतु ।

३ अपि च द्र०—प्रदीप ३।२।८४, ३।२।१-३ ।

४ अत्राऽहर्न द्रव्यम्, सूर्योदयादारभ्य सूर्यास्तमयाऽवधिकस्यैव कालस्याऽहन् शब्दत्वात् । (बालमनोरमा) ५।४।११

अपि च—प्रसिद्धपरिमाणक्रिया सूर्यादिकर्त्तृका अप्रसिद्धपरिमाणाया क्रियाया परिच्छेदायोपात्ता अहरादिव्यपदेश्या काल । प्र० ३।२।८४

इदमेवाह हरिरपि

विशिष्टमवधि त तमुपादाय प्रकल्पते ।
काल कलावतामेक क्षणमासर्त्तुभेदभाक् ।। वा० प० ३।९।६८ इति ।

इदमेवाह हेलाराजोऽपि—**कालो नियतपदार्थोदयाद्यवधिपरिग्रहेण** [1]**लवमु**[2]**-हूर्त्तादि-विभागाद्यवस्थामासादयति** (हेला० ३ ९।६८) इति ।

**अपि चाह हरिः—**

**बुद्धचवग्रहभेदाच्च व्यवहारात्मनि स्थितः ।**
**तावानेव क्षणः कालो युगमन्वन्तराणि वा ।।** वा० प० ३।९।३९
**।। इति ।।**

**आदित्यग्रहनक्षत्रपरिस्पन्दमथापरे ।**
**भिन्नमावृत्तिभेदेन काल कालविदो विदुः ।।** वा०प० ३।९।७६।। इति ।

अत्र कालशब्देन कालसामान्य गृह्यते, तस्यैव क्षणलवादिभेदेन पक्ष, मास, सवत्सर[3] इति कालविशेषा भवन्ति । अथवा कालशब्देन क्षणादि-कालविशेषा एव सङ्गृह्यन्ते । यथोक्त कैयटेन—**कालशब्देन कालसामान्य-मुच्यते । यस्य जातादेः सम्बन्धिनः कालसामान्यस्य परिमाणं मासादिस्तेन स कालो मासादिर्गृह्यते । अथवा कालशब्देन मासादिः कालविशेष एवोच्यते, स कालः परिमाणं यस्य कालसामान्यस्य तद्यस्य सम्बन्धि । तेन स कालो मासादिः** (प्र० २।२।५) इति ।

**इदमेवाह भर्त्तृहरिः—**

**संसर्गिणां तु ये भेदा विशेषास्तस्य ते मताः ।**
**संभिन्नस्तैर्व्यवस्थानां कालो भेदाय कल्पते ।।** वा० प०

**कालस्यैकत्वं वास्तवं नानात्वन्त्वौपाधिकम्—**

एतै सन्दर्भै कालस्योपचयाऽपचययो, जन्मस्थितिलयेषु, क्रियान्तरपरिच्छेदे,

---

१. परमाणो स्वरूपोपलक्षित काल क्षण, क्षणद्वयञ्च लव ।
पु० रा० २।२८ ।

२ सकाष्ठ ज्योतिषमधीते । सकल समुहूर्त्तम् । म० भा० ६।३।७९

३ द्र०—सि० शि० ग्रहग० म० अ० का० मो० श्लो० ३०, मनु० १।६४-६५, सुश्रु० सू० ६।३-४, गी० ११।३२, न्या० सि० मु० कि० टी० पृ० १५४ ।

क्षणलवमुहूर्त्तादिव्यवहारे चाऽसाधारण कारण काल इत्युपतिष्ठते। स च काल एको नित्यो विभुश्च। तस्य क्षणलवादिभेदव्यवहारस्तु औपाधिक। यथैकस्यैवाऽऽकाशस्यौपाधिको नानाविधो व्यवहारो भवति। तथा कालोऽपि नानाविधक्रियोपाध्यवच्छेदकबलेन नानाविध स्वरूपमादत्ते[1]। तथा चोत्पत्तिकाल, स्थितिकाल, विनाशकालश्चेत्येवमादिभेदा तस्यैव महाकालसामान्यस्य सन्तीति, यथोक्त हरिहेलाराजाभ्याम्—

**नैको नचाऽप्यनेकोऽस्ति न शुक्लो नाऽपि चाऽसितः।**
**द्रव्यात्मा स च संसर्गादेवरूप प्रकाशते॥** वा० प० ३।६।७॥
इति।

**काल एवोत्पत्त्यादिक्रियासम्बन्धवशादुत्पत्तिकालः, स्थितिकाल, विनाशकाल.** [हेला० ३।६।७) इति।

अथाऽतीताऽनागतादिव्यवहारस्याऽसाधारण कारण कालो विचार्यते। तथाहि—

**अथ वर्त्तमानस्य विचारः—**

कस्याश्चित्क्रियायाः प्रारम्भे सति यावत्समाप्तिर्न दृश्यते, तावत्तस्या क्रियाया वर्त्तमानत्वमिति लक्षण स्वीक्रियते चेत् इहाऽधीमह इत्यादीना निष्पत्तिर्न स्यात्, मुख्यक्रियाया असमाप्तौ सत्यामपि मध्ये-मध्ये भोजनादिकाया अपि क्रियाया दर्शनेनाऽवर्त्तमानत्वात्। यथोक्त पतञ्जलिना—**प्रवृत्तस्याऽविरामे शासितव्या भवन्ती। इहाऽधीमहे, इह वसामः, इह पुष्यमित्रं याजयामः। किं पुनः कारणं न सिध्यति ? अवर्त्तमानत्वात्** (म० भा० ३।२।१२३) इति। इदमेवाह कैयटोऽपि—**इहाऽधीमह इत्यध्ययनं प्रवृत्तं प्रारब्धं न च विरतम्। यदा च भोजनादिकां क्रिया कुर्वन्तो नाऽधीयते तदाऽधीमह इति प्रयोगो न प्राप्नोति** (प्र० ३।२।१२३) इति।

यदि च क्रियाया सातत्यमिह वर्त्तमानत्व गृह्यते तर्हि **पर्वतास्तिष्ठन्ति, नद्यः स्रवन्ति, आत्मास्तीत्यादि** प्रयोगो न सेत्स्यतीति। यतो हि कालस्याऽविभागाद् भूत-भविष्यतो प्रतिद्वन्द्वी वर्त्तमान कालो नाऽस्तीति। यथोक्तम्—**नित्यप्रवृत्ते च शासितव्या भवन्ती। तिष्ठन्ति पर्वताः। स्रवन्ति नद्य इति। किं पुनः कारणं न सिध्यति ? कालाऽविभागात्। इह भूत-भविष्यत्प्रतिद्वन्द्वी वर्त्तमानः कालः, न चाऽत्र भूतभविष्यन्तौ कालौ स्त** (म० भा० ३।२।१२३) इति।
इदमेव कैयटोऽपि ब्रूते—**पर्वतास्तिष्ठन्तीत्यादौ स्थानादे सर्वदा सद्भावात्सा-**

---

१ नित्य एको विभु कालस्तदा तस्य भेदाऽभावात् परिच्छेदकत्वाऽसम्भव उपाधिभेदात्तस्य भेदव्यवहार इति। प्र० २।२।५०

**ध्यत्वाऽभावात्क्रियारूपत्वाऽभावात् तद्धर्मस्य वर्त्तमानत्वस्याऽप्यभाव इति भावः । साध्यस्यार्थस्याऽनित्यत्वादवश्यं भविष्यत्वेन भाव्यम् । उत्पन्नस्याऽपि नाशाद् भूतत्वेनेति भूतभविष्यत्प्रतिद्वन्द्वी वर्त्तमानो धात्वर्थो नित्यप्रवृत्तस्य भूतभविष्यत्वाऽभावाद् वर्त्तमानत्वाऽभावः, क्रियारूपत्वाऽभावश्च** (प्र० ३।२।१२३) इति ।

**क्रमेणैतयोः समाधानम्—**

यदुक्त प्रारब्धाऽपरिसमाप्त हि वर्त्तमानम्, तत्समीचीनमेव । यतो हि नह्यध्ययनक्रियाऽऽशु सिध्यति । प्रत्युत तस्या निष्पत्तौ पर्याप्तिकालस्याऽऽवश्यकता भवति । न च तावत्कालपर्यन्त भोजनादिक्रियामन्तराऽध्येतु शक्नोति कश्चित् तथा च भोजनादिक्रिया नाऽध्ययनक्रियाया बाधिका, अपितु साधिकैवाऽस्तीति । किञ्चाऽध्ययनक्रियाया भोजनादिक्रियाऽवयवभूतैव वर्त्तत इति । यथोक्तम्—**अध्ययनं यदा प्रवृत्त न चोपरत तदा तस्य भोजनादिक्रिया नान्तरीयकत्वादव्यवधायिका । अथवाऽध्ययनस्यैवाऽवयवक्रिया** (प्र० ३।२।१२३) इति ।

**इदमेव हरिरपि ब्रूते—**

**व्यवधानमिवोपैति निवृत्त इव दृश्यते ।**
**क्रियासमूहो भुज्यादिरन्तरालप्रवृत्तिभिः ।।**
**न च विच्छिन्नरूपोऽपि सोऽविरामान्निवर्त्तते ।**
**सर्वेव हि क्रियाऽन्येन संकीर्णेवोपलभ्यते ।।**
**तदन्तरालदृष्टा वा सर्वैवाऽवयवक्रिया ।**
**सादृश्यात् सति भेदे तु तदङ्गत्वेन गृह्यते ।।**

(वा० प० ३।९।८२-८४) इति ।

किञ्च यदुक्त कालाऽविभागात् **पर्वताः तिष्ठन्ति, नद्यः स्रवन्ति**, इत्यादिप्रयोगा न सिध्यन्ति तन्न समीचीनम् । यतो हि यथा प्रारब्धाऽपरिसमाप्त हीद वर्त्तमानमिति लक्षणमङ्गीकुर्वता त्वया भुङ्क्ते चैत्र इति तस्योदाहरण दीयते । अत्र न हि भोजनक्रियैव प्रवर्त्तते, प्रत्युताऽन्तरा हसन-जल्पन-पानादि क्रियाऽपि । तथा चैतासा क्रियाणा सत्त्वेऽपि भुङ्क्ते चैत्र इत्यस्य युक्ता वर्त्तमानकालता मन्यते चेत् **पर्वतास्तिष्ठन्ति, नद्यः स्रवन्ति** प्रभृतेरपि युक्तत्वमक्षतमेव । यतो हि भुङ्क्ते चैत्र इत्यस्येव पर्वता तिष्ठन्तीत्यादेरपि समानमेव युक्तत्वम् । यथोक्तम्—**यं खल्वपि भवान् मुक्तसशयं वर्त्तमानकाल न्याय्यं मन्यते भुङ्क्ते चैत्र इति तेनैतत्तुल्यम् । सोऽपि ह्यवश्यं भुञ्जानो हसति वा, जल्पति वा, पानीयं पिबति वा । यद्यत्र युक्ता वर्तमानकालता दृश्यते, इहापि युक्ता दृश्यताम्** (म० भा० ३।२।१२३) इति । यदुक्त कालस्याऽविभागान्नास्ति

वर्त्तमान. काल इति तन्न समीचीनम् । यतो हि भवति कालस्य विभाग । स च भूतभविष्यद्वर्त्तमानकालस्थिताना राज्ञा या क्रिया, ताभि क्रियाभि भवति । नहि तेषा राज्ञा क्रिया कालात् पृथगुत्पद्यन्ते । प्रत्युत कस्मिश्चित् काल एव । अत तासा क्रियाणामधिकरण काल एवाऽस्ति । यथाह पतञ्जलि.—**इह भूतभविष्यद्वर्त्तमानाना राज्ञां या क्रियाः तास्तिष्ठतेरधिकरणम्** (म० भा० ३।२।१२३) इति ।

इदमेव कैयटोऽपि ब्रूते—**तत्र राज्ञां स्थितिर्मतादिभेदेन भिन्ना पर्वतादिस्थित्यादेर्भेदिकेति क्रियारूपत्वं कालत्रययोगश्चोपपन्नः** (प्र० ३।२।१२३) इति ।

इदमेवाह हरिरपि—

**परतो भिद्यते सर्वमात्मा तु न विकल्पते ।**
**पर्वतादिस्थितिस्तस्मात्पररूपेण विद्यते ॥**
**प्रसिद्धभेदा व्यापारा विरूपावयवक्रिया ।**
**साहचर्येण भिद्यन्ते सरूपाऽवयवक्रियाः ॥**

(वा०प० ३।९।८०-८१) इति ।

एवञ्च तिष्ठन्ति पर्वता = सम्प्रति ये राजानस्तेषा या क्रियास्तासु क्रियासु वर्त्तमानासु । स्थास्यन्ति पर्वता = इत उत्तर ये राजानो भविष्यन्ति तेषा या क्रियास्तासु भविष्यन्तीषु । तस्थु पर्वता इति=इह हि ये राजानो बभूवुस्तेषा या क्रियास्तासु भूतासु, इत्येतेषा प्रयोगाणामर्थव्युत्पादनेन कालस्य विभागा लक्ष्यन्ते ।

**वर्तमानकालस्याऽस्तित्वसाधनम्**—

प्रारब्ध कार्य यदा निष्पद्यते तदा तस्य समायाति भूतत्वम् । यदा तत्कार्यं न निष्पद्यते तदा तस्य भावित्वेन भविष्यत्वमेव । ताभ्या व्यतिरिक्त कश्चन कालो नास्ति । तथा च यतो निष्पन्नाऽनिष्पन्नरूपार्थस्याऽस्तित्व न विद्यते, अत स नास्ति[1] । यथोक्तम्—**नास्ति वर्त्तमान कालः** (म० भा० ३।२।१२३) इति । इदमेवाह कैयट—**निष्पन्नस्याऽर्थस्य भूतत्वादनिष्पन्नस्यार्थस्य भावित्वान्निष्पन्नाऽनिष्पन्नव्यतिरेकेण रूपान्तरस्याऽभावः** (प्र० ३।२।१२३) इति । इदमेव हरिरपि ब्रूते—

**सदसद्वाऽपि वस्तु स्याद् तृतीयं नाऽस्ति किञ्चन ।**
**तेन भूतभविष्यन्तौ मुक्त्वा मध्यं न विद्यते ॥**

(वा० प० ३।९।८५) इति ।

---

१. द्र० म० भा० ३।२।१२३ श्लोकवार्त्तिकमपि ।

निष्पन्नाऽनिष्पन्नाभ्यामपि तृतीयोऽर्थोऽस्ति । स चाऽऽदित्यगतिवन्नोपलभ्यते । यथा सत्योऽप्यादित्यस्य गतयो न प्रतीयन्ते, देशान्तरप्राप्त्याऽनुमीयन्ते तथा सन्नपि वर्त्तमान काल, तस्याऽतिसूक्ष्मत्वादनेकक्षणसमूहात्मक कालो नोपलभ्यते । स चाऽनुमानेन प्रतीयते । यथोक्तम्—**अस्ति वर्त्तमान. कालः आदित्यगतिवन्नोपलभ्यते** (म० भा० ३।२।१२३) इति ।

इदमेव कैयटोऽपि ब्रूते—**अनेकक्षणसमूहात्मकस्य धातुवाच्यस्यार्थस्य क्रियारूपस्य युगपदसन्निधानादनुमीयते** (प्र० ३।२।१२३) इति ।

एवञ्च प्रारब्धस्य कार्यस्य यावन्निष्पत्तिर्न दृश्यते तावत्पर्यन्तमपेक्षितो यो हि काल स वर्तमानत्वेनैव गृह्यते । यथोक्तम्—**यावदभिमतफलप्रयोजनसकलक्रियापरिसमाप्तिर्न भवति, तावद् वर्त्तमानमेव क्रियायाः** (प्र० ३।२।१०२) इति ।

इदमेव नागेशोऽपि ब्रूते—**क्रिया चैकफलोद्देश्यप्रवृत्तसमूहरूपा** (उद्० ३।२।१०२) इति ।

भर्तृहरिरप्याह—

**कार्योत्पत्तौ समर्थं वा स्वेन धर्मेण तत्तथा ।**
**आत्मतत्त्वेन गृह्येत सा चाऽस्मिन् वर्त्तमानता ॥**
**क्रियाप्रबन्धरूप यदध्यात्म विनिगृह्यते ।**
**सङ्क्रान्तबिम्बमेकत्र तामाहुर्वर्त्तमानताम् ॥**

(वा० प० ३।९।८९-९०) इति ।

**वर्त्तमानस्य भेदाः—**

पाकार्थं प्रवृत्त कश्चन पाचक पाकस्यैकापि क्रिया यावदवशिष्यते, तावत्कालपर्यन्त त कश्चनाऽन्य किं करोषि इति पृच्छति । स चाऽऽह पचामीति तस्मै प्रत्युत्तर ददाति । पाकस्य सर्वा क्रिया परिसमाप्यन्ते चेत्तर्हि अहमपाक्षमिति ब्रूते ।

यत्र पाकार्थं काऽपि क्रिया नाऽवलोक्यते केवल पक्ता चिन्तयति यन्मम पाकवेला समायाता, अत पक्तव्यम् । अत्र बुद्धौ पाकाय सङ्कल्पमात्रमेव, न तु तदर्थं कायपरिस्पन्दो दृश्यते । ईदृशस्थलेषु भविष्यत्समीपकालिको वर्त्तमान कालो लक्ष्यते । तथा चाऽत्र **वर्त्तमानसामीप्ये वर्त्तमानवद्वा** (पा० सू० ३।३।१३१) इति सूत्रेण वर्त्तमानसमीपे भूते, भविष्यद्वेत्यस्मिन्नर्थे विवक्षिते सति लकारोऽनुशिष्यते । तेन—कदा आगतोऽसि ? इति पृष्टे एष आगच्छामि, एषोऽहमागमम्—इति वा । कदा गमिष्यसि ? इति पृष्टे एष गमिष्यामि गच्छामीति वा ब्रूते ।

---

१ द्र०—म० भा० ३।२।१२३ श्लोकवार्त्तिकम् ।

यथोक्त हरिणा—

**अध्वनो वर्त्तमानस्य यः शेषो य उपक्रमः ।**

**तद्वर्त्तमानसामीप्यं शास्त्रे भेदेन दर्शितम् ।।** वा० प० ३।९।१०२ इति ।

इदमेव हेलाराजोऽपि विशदीकरोति—**आफलसमाप्ते. क्रियाप्रबन्धो व्युपरतो वर्त्तमानः कालः । तस्य च य. शेषः समाप्तत्वेऽपि संस्कारानुवृत्तिलक्षणः तद्भूतविषयं वर्त्तमानसामीप्यम् । यश्चाऽऽरम्भो मानसः सङ्कल्पो वर्त्तमानस्य तद् द्वितीयं भविष्यद्विषय वर्त्तमानसामीप्यम् । अत्र कार्यव्यापाराऽदर्शनाद् वर्त्तमानताऽनवसाये भूतभविष्यत्स्वभावे वर्त्तमानप्रत्यया अतिदिश्यन्ते** (हेला० ३।९।१०२) इति ।

**कालस्याऽद्यतनाऽनद्यतने विचार्येते—**

तत्र भूतकालो द्विविध, अद्यतनाऽनद्यतनभेदात् । अत्राऽद्यतनलक्षणान्याचार्यभेदेन भिद्यन्ते । यथा—**एकस्यारात्रेश्चतुर्थो यामो, दिवसश्च सर्वो द्वितीयायाश्च रात्रेः प्रथमो भागः** (प्र० ३।२।११०) इति । एतेन लक्षणेनाऽष्टादशघण्टापर्यन्त यावदद्यतन कालो भवति । इत ऊर्ध्वन्तु अनद्यतन काल इति गम्यते ।

अपि च—**अतीताया रात्रेः पश्चार्धेनाऽऽगामिन्या· पूर्वाऽर्धेन च सहितो दिवसोऽद्यतनः** (सि० कौ० १।२।५७) इति ।

एतेन लक्षणेन चतुर्विंशतिघण्टापर्यन्त यावदद्यतन काल इति । इत ऊर्ध्व त्वनद्यतन काल इति गम्यते ।

**भूतकालस्य भेदा.—**

अथ भूतकालस्य पञ्चविधो भेद प्रदर्श्यते । तथा हि क्रमेणोदाह्रियते—

१—चैत्रो गृह गतवान् किम् ? इति पृष्टे, अद्य प्रातरेव स गृहमगमदिति ब्रूते । अत्र **अद्ये**ति कथनेनाऽद्यतनकालिको भूतो लक्ष्यते । अत तस्मिन् काले लुङेव, नतु तद् व्यतिरिक्त कश्चनाऽन्यो लकार इति ।

२—चैत्र प्रयाग कदा गतवान् इति पृष्टे, ह्य पूर्वेद्युर्वा स प्रयागमगच्छदिति प्रतिब्रूते । अत्र ह्य पूर्वेद्युरिति पदाभ्यामनद्यतनकाल प्रतीयते । अत तस्मिन् काले लङेव, न तु तद्भिन्न कश्चनाऽन्यो लकार इति । अत एव पाणिनिना तयोर्भेदोपपत्तये **अनद्यतने लङ्** (पा०सू० ३।२।१११) इति सूत्र व्यलेखि ।

३—कदा भुक्तवानिति पृष्टे, अद्य ह्यो वाऽभुक्ष्महीति ब्रूते । अत्र **अद्य ह्य** इत्याभ्यामद्यतनाऽनद्यतनसमुदायो गृह्यते । यत्रैतयो समुदाय काल, तत्र

लुङेव, न तु लङ्, अद्यतनकालेन व्यामिश्रत्वात् । यथाह पतञ्जलि — **अद्य ह्यश्चाऽभुक्ष्महीति व्यामिश्रे लुङेव** (म० भा० ३।२।१११) इति ।

४—चैत्रो गतवान् किम् ? इति पृष्टे **सो**ऽगमदिति प्रष्ट्रे प्रत्युत्तर ददाति । अत्राऽऽसन्नभूतकाल प्रतीयते । अत स कालोऽद्यतन एव, नत्वनद्यतन । तथा चाऽत्र लुङ् लकार एव, न तु लङ् ।

५—यत्र भविष्यत्कालस्तत्र **आशसायां भूतवच्च** (पा० सू० ३।३।१३२) इति सूत्रेण भूतकालवद् भवतीति, चकारेण वर्त्तमानवद् भवतीति चाऽति-दिश्यते । तथा चैनेन देवश्चेदवर्षीत् वर्षति-वर्षिष्यति वा धान्यमवाप्स्म् वपाम· वप्स्यामो वा । अत्राऽवर्षीदित्यनेन भविष्यत्कालेऽप्यतिदेशमहिम्ना भूतकाल प्रद्योत्यते । स च कालोऽद्यतन एव ।

परोक्षस्तु कालस्य भेदो नास्ति, प्रत्युताऽनद्यतनस्यैव भेदोऽस्ति । अत कालस्य भेदत्वेन स न गृह्यते । यथोक्तम्—**परोक्षस्त्वनद्यतनभेदो न भूतभेद इति न पृथग् गण्यते** (हेला० ३।६।३८) इति ।

**अथ भविष्यत्कालो विचार्यते—**

तत्र भविष्यत्कालो द्विविध अद्यतनाऽनद्यतनभेदात् । एनयोर्लक्षणन्तु प्रागेवोक्तम् । अत्रोदाहरणान्युपन्यस्यन्ते । तथाहि—

**भविष्यत्कालस्य भेदा —**

१—अशोककुमारो गृह कदा गमिष्यतीति कश्चित्कञ्चित्पृच्छति चेत्तर्हि सम्प्रत्येव भुक्त्वा गृह गमिष्यतीति त प्रति कश्चिदाह । अत्र **सम्प्रति** पदेनाऽ-तीवाऽऽसन्न स कालो यस्मिन् काले गन्तुर्गृहगमन सम्पद्यते । तेनाऽत्राऽद्यतन-काल स्फुटतया मलक्षितो भवति । अतस्तस्याऽद्यतनकालस्य झटिति प्रतिपत्तये **लृट् शेषे च** (पा० सू० ३।३।१३) इति सूत्रेण लृडेव, न तु लुङ् भवति । अत एवोत्तरयिता गमिष्यतीति लृड्लकारेणैव प्रष्ट्रे उत्तर ददाति ।

२—इन्दिरा कदा ओदन पक्ष्यतीति पृष्टे कश्चित् श्व परश्वो वा सा ओदन पक्तेति प्रतिब्रूते । अत्र **श्व, परश्व** इति पदाभ्यामनद्यतन कालो लक्ष्यते । अतोऽत्र स कालो यथा प्रतीयेत, तथा **अनद्यतने लुट्** (पा० सू० ३।३।१५) इति लुट् लकारघटित पक्तेति प्रतिब्रूते ।

३—कदा भवान् गृह गमिष्यतीति पृष्टे **अद्य श्वो** वा गृह गमिष्यामि । अत्र **अद्य श्वो वा** इति पदाभ्यामद्यतनेन मिश्रितोऽनद्यतन कालो लक्ष्यते । अत ईदृश-स्थलेषु नैवाऽनद्यतन कालो भवति । किन्तु ततो भिन्नोऽन्य एव । स चाऽद्यतन काल एवेति । अत एव तस्य प्रकाशनाय अह गृह गमिष्यामीति प्रतिब्रूते ।

४—गृह गमिष्यति भवान् किम् ? इति पृष्टे, कश्चिद् ओम् गृह गमिष्यामीति प्रतिब्रूते। अत्राऽऽसन्नो भविष्यत्कालो लक्ष्यते। अतोऽत्राऽद्यतनो भविष्यत्कालो द्योत्यते। तेन लृडेव, न तु लुड्।

एतेषा काल-विभागाना समुल्लेखो भर्त्तृहरिणेत्थ व्युदपादि। तथाहि—

> क्रियोपाधिश्च सन् भूत भविष्यद् वर्त्तमानताः।
> एकादशभिराकारैर्विभक्ताः प्रतिपद्यते ॥
> भूतः पञ्चविधः तत्र भविष्यस्तु चतुर्विध.।
> वर्त्तमानो द्विधाऽऽख्यात इत्येकादश कल्पनाः ॥
>
> (वा० प० ३।९।३७-३८) इति।

॥ इति काल ॥

## (७) दिक्

अथ दिग् विचार्यते । अत्राऽऽदौ वैशेषिकस्य मतमुपन्यस्यते ।

**दिशः साधनम्—**

भवति चाऽय व्यवहारोऽस्मादिद दूरम्, अस्मादिद समीपमिति । स च व्यवहार किमपि मूर्त्तद्रव्यमाश्रित्य कस्मिश्चिन्मूर्त्तद्रव्य एव भवति । अत्र यमाश्रित्य स व्यवहारो भवति, आश्रीयमाण सोऽवधिरिति कथ्यते । अवधिमाश्रित्य यस्मिन् दूरत्व-समीपत्वे विज्ञायेते, तदवधिमद् द्रव्य भवति । यतो हि यस्मिन्नवधिमति द्रव्ये दूरत्वसमीपत्वे विज्ञायेते, ते अवधिमन्तरा विज्ञातु न शक्येते । तथा च यत तयोर्विज्ञानमवधिमति द्रव्ये भवति, अतोऽवधिमद् द्रव्यमवधिमपेक्षते । अवधिमन्तराऽवधिमति द्रव्ये दूरत्वसमीपत्वयोर्विज्ञानाऽनुपपत्ते ।

किञ्च दूरत्वसमीपत्वयोर्विज्ञाने यदवधिद्रव्यम्, यच्चाऽवधिमद्द्रव्य वर्त्तते, ते उभे द्रव्ये मूर्ते एव भवत न तु विभुनी द्रव्ये, विभुनि द्रव्येऽवधितद्वतोश्चाऽसम्भवात् । नहि विभुनि द्रव्ये दूरत्वसमीपत्वयोर्विज्ञानमवध्यवधिमद्भावश्च भवति, सर्वमूर्त्तद्रव्यसयोगित्वात् । अत एव विभुनो द्रव्यस्य दूरमिदमाकाशम्, समीपमिदमाकाशमित्यादिव्यवहारो न भवति । प्रत्युत मूर्तेष्वेव द्रव्येषु दूरत्वसमीपत्वयोर्ज्ञान भवति । अतो मूर्त्तान्येव द्रव्याण्यवध्यवधिमद्भाव लभन्ते, न विभूनि द्रव्याणि ।

किञ्च दूरत्वसमीपत्वयोर्ज्ञान नियतदिग्देशे समानकाले च यमवधिमपेक्ष्य यस्मिन्नवधिमति पिण्डे नैयत्येन भवति, तस्मिन्नेवाऽवधिमति पिण्डेऽनियतदिग्देशेऽसमानकाले च दूरत्वसमीपत्वयोर्नैयत्येन ज्ञान न सम्भवति चलद्रव्याणामनियतत्वात् । अर्थाद्यस्मिन् पिण्डे दूरत्वस्य ज्ञानम्, तस्मिन्नेव पिण्डे कदाचित्समीपत्वस्याऽपि ज्ञान भवति, एव यस्मिन् पिण्डे समीपत्वस्य ज्ञानम्, तस्मिन्नेव पिण्डे कदाचिद् दूरत्वस्यापि । अत एव नैयत्येन प्रतीतये नियतदिग्देशे समानकाले च पिण्डस्थितिरावश्यकी भवति । यथोक्त कणादेन—**इत इदमिति यतस्तद्दिश्य लिङ्गम्** (वै० सू० २।२।१०) इति ।

इदमेवाह शङ्करमिश्रोऽपि—**इतोऽल्पतरसयुक्तसयोगाश्रयादिद बहुतरसयुक्तसंयोगाऽधिकरण परम् । इतश्च संयुक्तसयोगभूयस्त्वाऽधिकरणादिदं सयुक्तसंयोगाऽल्पीयस्त्वाऽधिकरणमपरमिति नियतदिग्देशयो. समानकालयोः पिण्डयोर्यतो द्रव्याद् भवति सा दिक्** (उप० २।२।१०) इति ।

सा च दिक् समीपत्वदूरत्वे प्रत्यसाधारण कारण भवति । यतो हि नहि ता विना भूयसा सयोगानामधिकरणे दूरत्वम्, अल्पीयसा सयोगानामधिकरणे समीपत्वञ्च परिज्ञात केनचिच्छक्यते । न च दिशमन्तरा परत्वाऽपरत्वयोरुत्पत्ति न च तयोरुत्पत्तिमन्तरा दूरमिदमस्मात्, समीपमिदमस्मादिति बुद्धिर्भवितु प्रभवति । अतस्तेषामुपपत्तये दिश कल्पना जायते । यथोक्तम्—**नहि तादृशं द्रव्यमन्तरेण भूयसां संयुक्तसंयोगानामल्पीयसा वा पिण्डयोरुपनायकमन्यदस्ति । न च तदुपनयमन्तरेण तत्तद्विशिष्टबुद्धिः । न च तामन्तरेण परत्वाऽपरत्वयोरुत्पत्तिः । न च तदुत्पत्तिं विना तत्तद्विशिष्टप्रत्ययव्यवहारौ ।** (उप० २।२।१०) इति ।

न च कालिकपरत्वाऽपरत्वयोर्बोध इव दैशिकपरत्वाऽपरत्वयोरपि बोध काल एव जनयतीति वाच्यम् ? कालस्य नियतक्रियोपनायकत्वेनैव सिद्धत्वात् । यदि कालोऽनियतदूरत्वसमीपत्वे अपि जनयितु प्रभवेत्तर्हि अन्यदेशस्थित वस्तु, तस्माद् भिन्नदेशस्थितमपि वस्तु प्रत्युपनायक स्यात् । यथोक्तम्—**अनियतपरधर्मोपनायकत्वकल्पनाया तु काश्मीरकुङ्कुमपङ्करागं कार्णाटकामिनीकुचकलशं प्रत्युपनयेत्** (उप० २।२।१०) इति ।

परन्तु नैतत्सम्भवति, दैशिकपरत्वाऽपरत्वे प्रति दिश एव करणत्वम्, तस्या अनियतक्रियोपनायकत्वात् । यथा—ज्येष्ठत्वकनिष्ठत्वे प्रति काल कारण भवति, तथा दैशिकपरत्वाऽपरत्वे प्रति दिश कारणत्वम् ।

एवञ्च नियतक्रियोपनायक. काल, अनियतसयोगोपनायिका च दिक् । उभौ परस्परविरुद्धस्वभाववन्तौ स्त । अत कथमन्यस्य कार्यमन्य कर्त्तुमर्हति, अत एव कालात्पृथग् दिग्द्रव्यमस्तीति गम्यते । यथोक्तम्—

**नियतक्रियोपनायकात्कालादनियतसंयोगोपनायिका दिक् पृथगेव**

(उप० २।२।१०) इति ।

किञ्च यदपेक्षया यस्मिन् पिण्डे परत्वम्=ज्येष्ठत्वम्, एव यदपेक्षया यस्मिन् पिण्डेऽपरत्वम्=कनिष्ठत्वम् उभे ज्येष्ठत्वकनिष्ठत्वे यदपेक्षया यस्मिन् पिण्डे भवत तस्मिन्नेव पिण्डे तदपेक्षया सदा नियमेनैव ज्येष्ठत्वकनिष्ठत्वे भवत । यस्मिन् पिण्डे ज्येष्ठत्वव्यवहार. तस्मिन् पिण्डे कनिष्ठत्वव्यवहारो न भवति । न वा यस्मिन् पिण्डे कनिष्ठत्वव्यवहार, तस्मिन् पिण्डे ज्येष्ठत्वव्यवहारो भवति । परन्तु नैव नियमो दैशिकपरत्वाऽपरत्वे प्रति भवति । यस्मिन् पिण्डे यदपेक्षया दूरत्वम्, तस्मिन्नेव पिण्डे तदपेक्षया समीपत्वमपि । एव यदपेक्षया यस्मिन् पिण्डे समीपत्वम्, तदपेक्षया तस्मिन्नेव पिण्डे **दूरत्वमपि व्यवहारो** भवति, पदार्थानामनियतदिग्देशत्वात्, असमानकालत्वाच्च । नियतदिग्देशे समानकाले च स्थितानां पदार्थानान्तु यदपेक्षया यस्मिन् दूरत्व-

समीपत्वे तदपेक्षया तस्मिन् ते एव भवत । एतेनाऽपि कालात्पृथग्द्रव्यमस्तीति गम्यते । यथोक्तम्—

**किञ्च नियतोपाध्युन्नायकः कालः, अनियतोपाध्युन्नायिका दिक् । भवति हि यदपेक्षया यो वर्त्तमानः, स तदपेक्षया वर्त्तमान एव । दिगुपाधौ तु नैवं नियमः, यं प्रति या प्राची त प्रत्येव कदाचित्तस्याः प्रतीचीत्वात्** (उप० २।२।१०) इति ।

किञ्चाऽस्मात्पूर्वमिदम्, अस्माद्दक्षिणमिदमित्यादिदशदिग्व्यवहारो भवति। तासा दिशा व्यवहारो नहि कालकृतोऽस्ति, अपि तु दिक्कृत एव स । यथोक्तम्— **अस्मादिदं पूर्वम्, अस्मादिद दक्षिणम्, अस्मादिद पश्चिमम्, अस्मादिदमुत्तरम्, अस्मादिदं दक्षिणपश्चिमम् अस्मादिदं पश्चिमोत्तरम्, अस्मादिदमुत्तरपूर्वम् अस्मादधस्तादिदम्, अस्मादुपरिष्टादिदमित्येते प्रत्ययाः इत इदमिति सौत्रेतिना संगृहीताः । एतेषा प्रत्ययानां निमित्तान्तराऽसम्भवात् ।** (उप० २।२।१०) इति ।

**प्राच्यादिव्यवहारस्य कारणत्वसाधनम्—**

मेरो प्रदक्षिणक्रमेण भ्रमत आदित्यस्य प्रथम. सयोगोऽभूत्, भविष्यति, भवन्नस्ति वा, स च सयोगो यस्या दिशि भवति, स एव प्राच्यादिदिश कारण भवितुमर्हति । यथोक्तम्—**आदित्यसंयोगाद् भूतपूर्वाद् भविष्यतो भूताच्च प्राची** (वै० सू० २।२।१४) इति । इदमेवैतत्सूत्रव्याख्यातोऽपि स्पष्टीभवति —**प्राक् अस्यां सविता अञ्चतीति प्राची । तथा च यस्यां दिशि मेरुप्रदक्षिणक्रमेण भ्रमत आदित्यस्य प्रथमं सयोगो भूतपूर्वो भविष्यन् वा भवन् वा सा दिक् प्राची** (उप० २।२।१४) इति । एवमेव दक्षिणपश्चिमोत्तरादिदिशो बोद्धव्या । यथोक्तम्—

**तथा दक्षिणा प्रतीची उदीची** (वै० सू० २।२।१५) इति ।

सूत्रेऽस्मिन् तथा=या च युक्ति प्राची दिग् व्यवहारे प्रदर्शिता, सैव युक्तिर्दक्षिणादिदिग्व्यवहारेऽपि मन्तव्या । यथोक्तम्—**दक्षिणदिग्वर्त्तिनगादिना सहादित्यसंयोगाद्भूतपूर्वाद् भविष्यतो भूताद्वा दक्षिणाव्यवहार । एवं प्रतीच्युदीच्योरपि व्यवहारा उन्नेयाः** (उप० २।२।१५) इति।

प्राचीदक्षिणयोर्दिशोर्मध्यवर्त्तिनी या दिक् सा दक्षिणपूर्वेति कथ्यते । यथोक्तम् —**एतेन दिगन्तरालानि व्याख्यातानि** (वै० सू० २।२।१६) इति । सूत्रेऽस्मिन् एतेन=प्राचीदक्षिणयोर्दिशोर्लक्षणसाङ्कर्येण दक्षिणपूर्वा दिगिति व्यवहार । एव दक्षिणपश्चिमा, पश्चिमोत्तरा, उत्तरपूर्वेत्यूह्यम् ।

**दिशो नित्यत्वसाधनम्—**

समवायिकारणाऽसमवायिकारणाऽन्यतरविनाशाद् द्रव्य विनश्यति। यथा घटस्य समवायिकारणम्=कपाल, असमवायिकारणम्=कपालयो सयोग। एव पटस्य समवायिकारणम्=तन्तु, असमवायिकारणम्=तन्तूना सयोग। एतयोरन्यतरस्योभयस्य वा विनाशाद्घटपटौ विनश्यत। एतेनोभौ घटपटावनित्यद्रव्ये स्त।

एवञ्च दिश समवायिकारणमसमवायिकारणञ्च किमपि यदि भवेत् तर्हि एतयोरन्यतरस्योभयोर्वा विनाशात्तस्या अपि विनाश स्यात्। यतो हि समवाय्यसमवायिकारणे मूर्तद्रव्ये एव भवतः। तथा च यतो दिश उक्तद्विविधकारणयोर्मध्ये किञ्चिदपि कारण नाऽस्ति, अतो द्वयो कारणयोरन्यतरस्योभयोर्वा विनाशाद् विनश्यतीति प्रश्न एव नोदेति दिशो विषये। एतेन दिशो नित्यत्व गम्यते। यथोक्त कणादेन—**अद्रव्यत्वेन नित्यत्वमुक्तम्** (वै० सू० २।१।१३) इति। सूत्रेऽस्मिन्नद्रव्यत्वेन=समवायिकारणाऽसमवायिकारणवद्भिन्नत्वेन दिशो नित्यत्व सिध्यति।

किञ्च यथा वायुपरमाणो समवायिकारणमसमवायिकारणञ्च किञ्चिन्नास्ति। एतेन वायुपरमाणोरनाश्रितत्व सिध्यति। अनाश्रितत्वाद् वायुपरमाणोर्नित्यत्वम्। अनेनैव हेतुना दिशोऽपि नित्यत्वम् विभोर्दिशोऽप्यनाश्रितत्वात्। किञ्च गुणाश्रयत्वाद् यथा वायुपरमाणोर्द्रव्यत्वम्, तथा दिशोऽपि। यथोक्त कणादेन—**द्रव्यत्वनित्यत्वे वायुना व्याख्याते** (वै० सू० २।२।११) इति।

**दिश एकत्वस्य नानात्वस्य च साधनम्—**

येन कारणेनैका दिक् सिध्यति, तेनैव कारणेनाऽपराऽपि। अत्रैकस्या दिशो यत्कारणमस्ति, तदेवाऽपरस्या अपि दिशः। तथा च दिशो नानात्वसाधकप्रमाणस्याऽविशेषाद्दिश एकत्व सिध्यति। यथोक्तम्—**तत्त्वं भावेन** (वै० सू० २।२।१२) इति। अस्मिन् सूत्रे तत्त्वम्=एकत्वम्। भावेन=सत्तयेति व्याख्यातम्, यथा सत्ताया एकत्वम्, तथा दिशोऽपि। यथोक्तमुपस्कारकृताऽपि—**दिग्लिङ्गाऽविशेषाद्विशेषलिङ्गाऽभावाच्च सत्तावदेकत्वं तदनुविधानादेकपृथक्त्वम्** (उप० २।२।१२) इति।

यद्यपि दिश एकत्व वास्तवम्, तथापि प्राच्यादिव्यवहारबलेन नानात्वमप्यौपाधिकमाश्रणीयम्। यथोक्तम् —**कार्यविशेषेण नानात्वम्** (वै० सू० २।२।१३)

इति । सूत्रेऽस्मिन् कार्यविशेष =प्राच्यादिव्यवहारविशेष इति । तेनैतस्या नानात्वमवकल्पनीयम् ।

अथ व्याकरणदृशा दिग्विचार्यते । इमानि दिग्घटितानि सूत्राणि ।

१—**दिक्छब्देभ्यः सप्तमी-पञ्चमी**—पा० सू० ५।३।२७।

२—**दिक्छब्दा ग्रामजनपदाख्यानचानराटेषु**—पा० सू० ६।२।१०३

३—**दिङ्नामान्यन्तराले**—पा० सू० २।२।२६

**व्याकरणदृशा दिशः समर्थनम्—**

शब्दशास्त्रेऽपि दिशो लक्षण तदेवाऽस्ति यद् वैशेषिकै स्वीक्रियते । न ततोऽपूर्वा दिक् शाब्दिकैरङ्गीक्रियते । अत एव हेलाराजेन सिद्धान्तित यदिह शास्त्रे दिङ् न विभज्योच्यते, प्रत्युत वैशेषिकसम्मता एव दिगभ्युपगम्यते । तथाहि तस्य वचनम्—**इह त्वनूद्यते, परं दिगिति न विभज्य कथ्यते** (हेला० ३।६।३) इति ।

दिश प्राच्यादिव्यवहारस्य विभाजिका या रवे क्रिया, सैव रवे क्रिया वैशेषिकै शाब्दिकैश्चाऽनुमन्यते । तथा चैतयोर्वाक्य क्रमेणोद्ध्रियते । तथाहि—**मेरुं प्रदक्षिणमावर्त्तमानस्य भगवतः सवितुर्ये संयोगविशेषा लोकपालपरिगृहीतदिक्प्रदेशानामन्वर्थाः प्राच्यादिभेदेन दशविधाः संज्ञाः कृताः, अतो भक्त्या दश दिशः सिद्धाः** (प्र० पा० भा० पृ० १६६) इति ।

अपि च—**मेरु प्रदक्षिणमावर्त्तमानस्य सवितुर्लोकपालपरिगृहीतैर्देशविशेषैर्ये संयोगाः, तदुपाधिना सूर्येण दिशः सयोगे सति भेदे भिन्नं दिक्सामान्यं दिक्छब्दवाच्यं परिकल्पनीयम्** (हेला० ३।१।१५, ३।६।३) इति च ।

**दिशो भेदाः—**

अस्या दिश एकत्व वास्तव नानात्व त्वौपाधिकम् । यथाह कैयट —**एकाऽपि दिक् सूर्योदयास्तमयाद्युपाधिभेदादनेका व्यपदिश्यते । तथा दश दिश इति लोके व्यवहारः** (प्र० ४।२४६) इति[2] ।

इदमेव मत पतञ्जलिनाऽपि स्पष्टीक्रियते—**वाता वान्तु दिशो दश** (म० भा० ४।२।४६) इति । अत्र **दिशो दशे**ति कथनेन दिशो नानात्व सिध्यति ।

---

१ दिग्घटितानि तत्सम्बन्धीनि बहुसूत्राणि वर्न्नन्ते—द्र०—१।१।२८, २।३।२८, २।१।५०, ४।१।६०, ४।२।१०७, ४।३।६, ४।३।५४, ४।३।११२, ६।२।१६८, ७।३।१३ ।

२ द्र० हेला० वा० प० ३।६।३ ।

द्वयोर्दिशोर्मध्ये या दिगस्ति, सा अन्तरा दिगिति कथ्यते । यथा दक्षिण-पूर्वयोर्मध्ये वर्तिनी या दिक्, सा दक्षिणपूर्वेति । एवमेव दक्षिणपश्चिमा, पश्चिमोत्तरा, उत्तरपूर्वेति विज्ञेयम् । अत एवोक्त कैयटेनाऽपि—**दक्षिणस्याश्च पूर्वस्याश्च दिशो यदन्तराल दिक्, सा दक्षिणपूर्वेत्युच्यते** (प्र० २।२।२६) इति ।

एवञ्चैकस्या एव दिश प्राचीप्रतीच्यादिविशेषा· । एतेषा प्राच्यादिशब्दाना पर्यायभूता पूर्वादिशब्दा अष्टाध्याय्या बहुषु सूत्रेषु दृश्यन्ते[1] ।

**दिश. प्राच्यादिव्यवहारे वामहस्तादेः कारणत्वस्य खण्डनम्—**

प्राच्यादिव्यवहारे उदयगिरिमभिमुखीभूय स्थितस्य पुरुषस्य यो हि वामहस्त-प्रदेश सा चोत्तरा दिक्, यश्च दक्षिणहस्तप्रदेश सा दक्षिणा दिक्, यश्च पृष्ठ-प्रदेश, सा च पश्चिमा दिगिति केचिद् व्याचक्षते । तन्न युक्त प्रतिभाति । यतो हि प्रतीच्या स्थितमपि चलवस्तु प्राच्या दिशि स्थितमपि चलवस्तु भवितुमर्हति, स्थानपरिवर्त्तनेनेति ।

यथोक्तम्—

**स्वाङ्गाद् व्यवस्था या लोके न तस्या नियता दिशः ।**
**प्रत्यङ्मुखस्य यत्पश्चात् तत्पुरस्ताद् विपर्यये ॥**

(वा० प० ३।६।८) इति ।

किञ्च दक्षिणभारतात् कश्चित् पुमान् वङ्गदेश गच्छन् अन्येन केनचित् पुरुषेण कुत्र गम्यत इति पृष्टे सत्युत्तरदेश गच्छामीति वक्तव्ये पूर्वदेश गच्छामीति म प्रष्टार पुरुष प्रतिब्रूते । स्वाङ्गनिमित्तदिग्व्यवस्थया तु स जन उत्तराभि-मुखो भवति । तस्मात्स्वाङ्गनिमित्तदिग्व्यवस्था नाऽङ्गीकार्या । किन्त्वना-दिरूढदिङ्निमित्ता पूर्वापरादिव्यवस्थैवाऽङ्गीकार्या । यथोक्तम्—

**देशव्यवस्थानियमो दिक्षु न व्यवतिष्ठते ।**
**रूढमप्यपरत्वेन पूर्वमित्यभिधीयते ॥**

(वा० प० ३।६।९) इति ।

एवञ्चाऽनादिरूढपरम्परयैव दिश· प्राच्यादिव्यवहारोऽभ्युपगन्तव्य इति । स्वाङ्गनिमित्तप्रयोज्या दिग्व्यवस्था तु नैव स्वीकार्येति सिद्धान्तितम् ।

**दिशः कल्पनाया हेतोरुपन्यासः—**

तत्र पूर्वत्वमपरत्वमिति व्यपदेशाऽऽधायकतया, एकदिक्काऽवयवप्रसारण-रूपाया ऋजुताया अनेकदिक्काऽवयवप्रसारणरूपाया वक्रतायाश्चोपपादकतया,

---

१ द्र०—५।३।३६, ५।३।२८, ५।४।१२६, ५।३।३४, ५।३।३८, ५।४।६८, ५।१।७७। ६।२।१०५, ६।२।१११, ७।३।१० ।

लोष्टादेरूर्ध्वदेशाऽधोदेशसयोगोत्पादकक्रियया, उत्क्षेपणत्वाऽपक्षेपणत्वजातिप्रयोजकतया च दिश कल्पना जायते । यथोक्तम्—

**व्यतिरेकस्य यो हेतुरवधिप्रतिपाद्ययो· ।**
**ऋज्वित्येव यतोऽन्येन विना बुद्धिः प्रवर्त्तते ॥**
**कर्म्मणो जातिभेदानामभिव्यक्तिर्यदाश्रया ।**
**सा स्वैरुपाधिभिर्भिन्ना शक्तिर्दिगिति कथ्यते ॥**

(वा० प० ३।६।२-३) इति ।

**दिशः शक्तित्वसाधनम्—**

शब्दशास्त्रे दिशो नाऽतिरिक्त द्रव्यत्वम्, प्रत्युत मूर्त्त द्रव्यपरतन्त्रतयैवैतस्या द्रव्यत्वमवगम्यते । पृथिव्यादीना मूर्त्तानामेव स्वातन्त्र्येण द्रव्यत्वम् । आकाशादीना विभूना पृथिव्यादिमूर्त्तद्रव्यपरतन्त्रतया गृहगवाक्षाद्युपाधिरूपेण च तत् प्रतीयत इति ।

एवञ्च दिक् छक्तिविशेष एव । शक्तिश्च शक्तिमद्द्रव्यमन्तरा न तिष्ठति। तथा च तासा शक्तीना पृथिव्यादीनि द्रव्यादीन्येवाऽधिकरणानि सन्तीति । तेन शक्तिशक्तिमतोरभेदोपचाराद् दिशो द्रव्यत्व सिध्यति।
यथोक्त हरिणा—

**सा स्वैरुपाधिभिर्भिन्ना शक्तिर्दिगिति कथ्यते** (वा० प० ३।६।२) इति ।
**इदमेव हेलाराजोऽप्याह—**

**कार्यकल्प्यत्वे च सदैव पदार्थोपाधितया प्रतीतेः । स्वतन्त्रद्रव्यरूपता नास्ति दिशः । नहि पृथिव्यादिवद्दिगुपलभ्यते । अत एव कालोऽपि शक्तिरिति वक्ष्यते** (हेला० ३।६।२) इति ।

अत्र **अपि** पदेन आकाशाऽऽत्मनो सग्रहण भवति । यतो हि आकाशाऽऽत्मनोरपि द्रव्यपरतन्त्रतयैव बोधो जायते । अत एव शरीराऽवच्छेदेनाऽऽत्मा प्रतीयते तदनवच्छेदे तु न, विभुत्वात् ।

॥ इति दिक् ॥

**आत्मनः साधनम्—**

## (८) आत्मा

अथ आत्मा विचार्य्यते । अत्राऽऽदौ वैशेषिकमतमुपन्यस्यते । तथाहि—यदा कश्चित्पुमान् काष्ठं छेत्तुं वास्यादेरुद्यमनं निपातनञ्च करोति, तदा ताभ्यामुद्यमननिपातनाभ्यां काष्ठस्य च्छिदिक्रिया जायते । तत्रच्छेत्तुरुद्यमननिपातनरूपा या क्रिया सा प्रयत्नजन्यैव । नह्यान्तरप्रयत्नमन्तरा छेत्ता उद्यमननिपातने कर्मणी कर्त्तुं प्रभवति । तथा चच्छेत्तुरान्तरप्रयत्नजन्ये उद्यमननिपातने भवत इत्यवधार्य्यते । प्रयत्नश्च कञ्चिदधिष्ठातारमन्तरा न सम्भवति । अधिष्ठाता च नह्यात्मनो व्यतिरिक्त. कश्चिदन्य सम्भवति । ततोऽन्य कश्चनाऽधिष्ठाता भवेच्चेत्तर्हि काष्ठकुड्याऽऽदावपि प्रयत्नो दृश्येत । न च तत्र दृश्यते । अत प्रयत्नस्याऽधिष्ठाता आत्मास्तीति सिध्यति । यथोक्त शङ्करमिश्रेण—**उत्क्षेपणाऽवक्षेपणे मुसलादाविव प्रयत्नं विनाऽनुपपद्यमाने यस्य प्रयत्नाद् भवतः स नूनमात्मा** (उप० ३।२।४) इति ।

किञ्च तिर्यग्गमनस्वभावस्य वायोरूर्ध्वमधश्च गमन दृश्यते । तत्रोर्ध्वगमनं प्राणवायो, अधोगमनञ्चाऽपानवायोः स्वभाव । एते अस्वाभाविक्यौ क्रिये कस्यचित्कर्त्तुं प्रयत्नमवश्यमपेक्षेते । नहि स्वभावविपर्यय प्रयत्न विना भवितुमर्हति । यथोक्तम्—**नहि तिर्यग्गमनस्वभावस्य वायोरेवविधः स्वभावविपर्ययो विना प्रयत्नात्** (उप० ३।२।४) इति । एतेनाऽपि गम्यते यत् प्राणाऽपानव्यापारयो कश्चित् कर्त्तास्त्येवेति । स चाऽऽत्मेति विज्ञायते ।

किञ्चाऽक्षिपक्ष्मणोर्यो निमेष स सयोगविशेषरूप कर्म । एवमुन्मेषः खलु तयोरेव विभागजनक कर्म । एते द्वे क्रिये निरन्तरमुत्पद्यमाने लक्ष्येते । न चाऽत्र किञ्चिद् दृष्ट कारणं दृश्यते । यथा नोदनाऽभिघाताभ्या जन्ये सयोगे विभागे च दृष्ट कारणमस्तीति । अत्र नोदनम्=शब्दाऽजनक स्पर्श । अभिघात =शब्दजनक स्पर्शः । तथाऽक्षिपक्ष्मणो सयोगविभागयोर्न दृष्ट कारणमस्तीति शक्यते वक्तुम् । परन्तु एतयोः सयोगविभागौ भवतः । तौ च कस्यचित्प्रयत्नमन्तरा न सिध्यत । यथा दारुपुत्रकस्य लाक्षागुटकस्य च नर्त्तन कस्यचित् पुरुषस्य प्रयत्नमन्तरा न सम्भवति । तथा च यथा दारुपुत्रकस्य लाक्षागुटकस्य च नर्त्तयिता कस्यचित्कश्चित् पुत्रोऽस्ति तथाऽक्षिपक्ष्मणोर्निमेषोन्मेषयोः प्रवर्त्तक कश्चिदस्तीति गम्यते । स च प्रवर्त्तकोऽयमात्मेत्यवधार्यते । यथोक्त शङ्करमिश्रेण—**निमेषोन्मेषावपि शरीरस्याऽधिष्ठातारमनुभावयतः । निमेषस्तावदक्षिपक्ष्मणोः संयोगजनकं कर्म । उन्मेषस्तयोरेव विभागजनकं कर्म । एते च कर्मणी नोदनाऽभिघातादिदृष्टकारणान्तरमन्तरेण निरन्तरमुत्पद्यमाने प्रयत्नं विना**

**नोत्पद्येते । यथा दारुपुत्त्रकस्य नर्त्तन कस्यचित् प्रयत्नात् तथाऽक्षिपक्ष्म-नर्त्तनमपि** (उप० ३।२।४) इति ।

किञ्च भग्नस्य गृहस्य निर्माणं दृश्यते, लघीयो वा गृह वर्द्धयति । तत्र नहि कञ्चन कर्त्तारमन्तरा भग्नस्य गृहस्य निर्माणम्, लघीयसो गृहस्य वर्द्धन च सम्भवति । एतेन यथा गृहात् पृथक् कश्चिद् गृहकर्त्ताऽस्तीति दृश्यते तथैव भग्नस्य शरीरस्यौषधिना प्ररोहणम्, आहारादिना शरीरस्य वर्द्धनञ्च दृश्यते । तत्रेमानि कर्माणि कञ्चित्कर्त्तारमन्तरा न सम्भवन्ति । एतेनाऽपि शरीरात्पृथगात्मास्तीति गम्यते । यथोक्तम्—**यथा गृहपतिर्भग्नस्य गृहस्य निर्माणं करोति लघीयसो गृहस्य वर्द्धनञ्च । तथा देहाधिष्ठाता गृहस्थानीयस्य देहस्याऽऽहारादिना वृद्धिमुपचयञ्च करोति, क्षतञ्च भेषजादिना प्ररोहयति भग्नञ्च करचरणादि सरोहयति । तथा च गृहपतिरिव देहस्याऽप्यधिष्ठाता सिध्यतीति** (उप० ३।२।४) इति ।

किञ्च यदा दारक कन्दुकम्, लाक्षागुटक वा गृहाऽऽभ्यन्तर इतस्ततः प्रेरयति, अत्र तयोर्या भ्रमण क्रिया दृश्यते, सा कञ्चन प्रेरकमन्तरा न सिध्यति । तथा च यथाऽत्रैतयो प्रेरक कश्चिद् बालक कर्त्ता दृश्यते तथाऽभिमत-विषयेषु मनसो निवेशनम्, अनभिमतविषयेषु मनसोऽनिवेशनञ्च भवति । ते क्रिये कञ्चनाऽधिष्ठातारमन्तरा न सिध्यत । एतेन मनसोर्निवेशनाऽनिवेशनयोः क्रिययो कश्चनाऽधिष्ठाताऽस्तीति गम्यते । स चाऽऽत्मा । यथोक्तम्—**अभिमत-विषयग्राहिणीन्द्रिये निवेशनम्, अनभिमतविषयेऽनिवेशनम् । एते चेच्छाप्रणिधानाधीने स्त. । तथा च यस्येच्छाप्रणिधाने मनः प्रेरयतः स आत्मेत्यनुमीयते । यथा गृहकोणाऽवस्थितो दारक कन्दुक लाक्षागुटक वा गृहाऽऽभ्यन्तर एवेतस्ततः प्रेरयति** (उप० ३।२।४) इति ।

किञ्च कश्चन पुमान् द्राक्षाया आम्रस्य वा रसविशेषमनुभूय पुनस्तादृश फलमुपलभमानो रसगर्द्धिप्रवर्त्तितो भवति । तस्य दन्तोदकसप्लवो जायते । स च सप्लवो नाऽऽम्लरसाऽनुमितिमन्तरेण जायते, अनुमितिर्न व्याप्तिस्मृति-मन्तरेण, सा च स्मृतिर्न सस्कार विना, स च नाऽनुभवमन्तरेण, स च न भूयो-दर्शनमन्तरेणेतीय ज्ञानपरम्परा सर्वथा कर्त्तृ तन्त्रैवेति सिद्धम् ।

किञ्च सुखदु खादयो गुणा । एते च कुत्रचिद् द्रव्य आश्रिताः सन्ति, गुणत्वाद् रूपादिवत् । न च सुखदु खाऽऽदिगुणा पृथिव्यादिद्रव्यमाश्रयन्ति, तत्रैतेषामननुभवत्वात् । शरीराऽवच्छिन्नाऽऽत्मन्येव सुखादयो गुणा अनुभूयन्ते । अत एव **ज्ञानाऽधिकरणमात्मेति** कथ्यते[1] । अत्र ज्ञानपदमुपलक्षणम् । तेन सुख-दु खादीनामपि आत्मैवाऽधिकरणमस्ति । यथाह कणाद —

---

१ द्र०—तर्कसङ्ग्रह ।

**प्राणाऽपाननिमेषोन्मेषजीवनमनोगतीन्द्रियान्तरविकाराः सुखदुःखेच्छाद्वेष-प्रयत्नाश्चात्मनो लिङ्गानि** (वै०सू० ३।२।४) इति।

अस्मिन् सूत्रे जीवनपदेन लक्षणया जीवनकार्यभूतानि वृद्धिक्षतसंरोहणादीनि गृह्यन्ते।

अपि च—**इन्द्रियार्थप्रसिद्धिरिन्द्रियार्थेभ्योऽर्थान्तरस्य हेतुः** (वै०सू० ३।१।२) इति। सूत्रेऽस्मिन्निन्द्रियार्थप्रसिद्धिः=रूपादिसाक्षात्कारः। इन्द्रियार्थेभ्यः= इन्द्रियेभ्यः, अर्थेभ्यश्च। अर्थान्तरस्य=आत्मनः। हेतुः=कारणम्।

अपि च — **आत्मेन्द्रियार्थसन्निकर्षाद् यन्निष्पद्यते तदन्यत्** (वै० सू० ३।१।१८) इति। सूत्रार्थस्तु—आत्मेन्द्रियार्थसन्निकर्षात्=आत्मनो मनसः संयोग इति, तस्मात्। यत्=ज्ञानम्। निष्पद्यते=जायते। तत्=ज्ञानम्। अन्यत्=अनुमानादन्यस्मिन्नात्मनि प्रमाणम्।

**आत्मनो भेदाः—**

स चाऽऽत्मा द्विविधः, जीवात्मपरमात्मभेदात्। तत्र जीवात्मा प्रतिशरीराऽवच्छेदेन नानाविधः। स च विभुर्नित्यश्चाऽस्ति। परमात्मा त्वेक एवाऽस्ति, स सर्वप्राणिष्वन्तर्यामिरूपेण तिष्ठति। अत एवैनस्य सर्वज्ञत्वं सिध्यति यथोक्तमन्नम्भट्टेन—**ज्ञानाऽधिकरणमात्मा। स द्विविधः परमात्मा जीवात्मा चेति। तत्रेश्वरः सर्वज्ञः परमात्मा एक एव। जीवः प्रतिशरीरं भिन्नो विभुर्नित्यश्च** (तर्कसंग्रह) इति।

अथ व्याकरणदृशा आत्मा विचार्य्यते। इमानि चाऽऽत्मघटितानि सूत्राणि। तथाहि—

| | |
|---|---|
| **१—आत्ममाने खश्च** | पा०सू० ३।२।८२ |
| **२—आत्मन्विश्वजनभोगोत्तरपदात्खः** | पा० सू० ५।१।९ |
| **३—आत्मनश्च पूरणे** | पा० सू० ६।३।६ |
| **४—आत्माध्वानौ खे** | पा०सू० ६।४।६९ |

**आत्मनः साधनम्—**

आत्मनो यादृशं लक्षणं वैशेषिकैरास्थितम्, तादृशमेव लक्षणं शब्दशास्त्रेऽपि पतञ्जलिना ध्वनितम्। तथाहि तस्य वचनम्—**द्वावात्मानौ, अन्तरात्मा, शरीरात्मा च। अन्तरात्मा तत्कर्म करोति येन शरीराऽऽत्मा सुखदुःखे अनुभवति। शरीरात्मा तत्कर्म करोति येनाऽन्तरात्मा सुखदुःखे अनुभवति** (म०भा० १।३।६७) इति[1]। अत्र **शरीरात्मा सुखदुःखे अनुभवति** (पा०सू० १।३।६७) इति सूत्रस्थेन भाष्येण शरीराऽवच्छिन्नाऽऽत्मनि सुखदुःखयोः सत्त्वात् सुखदुःखा-

१. द्र०—म० भा० ३।१।८७।

धिकरणमात्मा सिध्यति । अत एव शरीरावच्छिन्नात्मनि सुखदुःखे अनुभूयेते । एतेन सुखदुःखाऽधिकरणमात्मैवाऽस्तीति निश्चीयते ।

अस्य भाष्यस्य द्विविधं व्याख्यानमुपलभ्यते। तत्र साख्यदृशा अन्तःकरणमेव अन्तरात्मेति पदेन गृह्यते । तदेवाऽन्तःकरणं सुखदुःखजनकं कर्म करोति, येन कर्मणा शरीराऽवच्छिन्नात्मनि सुखदुःखे उद्भवतः । अत एव शरीरावच्छिन्नात्मा पुरुषः सुखदुःखे अनुभवति । पुरुषः सुखदुःखजनकं कर्म न करोति, तस्याऽकर्तृत्वात् । स च पुष्करपलाशवन्निर्लेपो भोक्तैव, न तु कर्त्ता । अन्तःकरणन्तु कर्तृ, न तु भोक्तृ, अचेतनत्वात् । अत एवोक्तम्—**अन्तरात्मा तत्कर्म करोति येन शरीरात्मा सुखदुःखे अनुभवति** (म०भा० पा०सू० १।३।६७) इति । अत्राऽन्तरात्मा = अन्तःकरणम् । शरीरात्मा = पुरुषः ।

अमुमेव सिद्धान्तं कैयटोऽपि स्पष्टीकुरुते—**साख्यपक्षेऽन्तःकरणमेवाऽन्तरात्मा, तस्यैव कर्तृत्वसम्भवात्पुरुषस्याऽकर्तृत्वात्** (प्र० १।३।६७) इति ।

न्यायवैशेषिकदृशा शरीरावच्छिन्नात्मा पुरुष एव सुखदुःखजनकं कर्म करोति, तस्य कर्तृत्वात् । शरीरस्याऽचेतनत्वान्न सुखदुःखे अनुभवति शरीरम् । किन्तु सुखदुःखाभ्यां सम्बध्यत एव शरीरम् । सुखदुःखजनकाभ्यां हेतुभ्याम् अन्तरात्मनि सुखदुःखे प्रादुर्भवतः । अत एव अन्तरात्मैव सुखदुःखे अनुभवति । यथोक्तम्—**शरीरात्मा तत्कर्म करोति येनाऽन्तरात्मा सुखदुःखे अनुभवतीति** (म०भा०पा०सू० १।३।६७) इति । अत्र शरीरात्मा = पुरुषः । अन्तरात्मा = शरीरावच्छिन्नात्मा । इदमेव स्पष्टीकुरुते कैयटः —**नैयायिकानां मते तु पुरुषस्य कर्तृत्वात् स एवाऽन्तरात्मा विवक्षितः । शरीरात्मा सुखदुःखेति— शरीरस्याऽचेतनत्वात् सुखदुःखहेतुभ्यां शरीरं सम्बध्यते** (प्र० १।३।६७) इति ।

एनेन सुखदुःखादीनामधिकरणमात्मास्तीति गम्यते । स चाऽऽत्मा विभुः, एकश्च व्यवस्थातो नानाऽपि । अत एव तस्य सर्वमूर्त्तद्रव्यैरविशेषेण सम्बन्धेऽपि यत्रोद्भूतं चैतन्यं वर्त्तते, तत्रैव सुखदुःखे अनुभूयेते । यथा —उद्भूतचैतन्यमस्मदादीनां शरीरावच्छिन्नाऽऽत्मनि सुखदुःखे प्रतीयेते । पाषाणाऽवच्छिन्नाऽऽत्मनि अस्माभिर्नाऽनुभूयेते अनुद्भूतचैतन्यात् । यथोक्तम्—**व्यापकस्याऽऽत्मनः सर्वैर्द्रव्यैः संयोगस्याऽविशेषेऽपि धर्माऽधर्मवशाच्छरीरादावेव स्वस्वामिभावलक्षणः** (हेला० वा० प० ३।३।१८) इति । अत्र धर्मात्सुखम्, अधर्माद्दुःखमिति गृह्यते । एते सुखदुःखे उभाभ्यां शरीरावच्छिन्नात्मनि प्रतीयेते इति हेलाराजस्याऽभिप्रायः ।

आत्मनो द्रव्यत्वं भर्तृहरिणाऽभिहितम् । तेनैतस्य द्रव्यत्वं शब्दशास्त्रेऽप्यस्तीति विज्ञायते । यथोक्तम्—

**आत्मा वस्तु स्वभावश्च शरीरं तत्त्वमित्यपि ।**
**द्रव्यमित्यस्य पर्यायास्तच्च नित्यमिति स्मृतम् ।।**
(वा० प० ३।२।१) इति ।

इदमेव मत हेलाराजोऽपि स्पष्टीकुरुते—**आत्मैव ह्युपाधिभिन्नं प्रतिभासमानं द्रव्यं पदानामर्थः** (हेला० ३।२।१) इति ।

**अथ चैतन्याऽचैतन्ये विचार्येते—**

यद्यपि चरके सेन्द्रियद्रव्यस्याऽस्मदादेश्चैत यम्, निरिन्द्रियद्रव्यस्य काष्ठ-कुड्यपाषाणादेश्चाऽचैतन्यमभिहितम् । तथाहि तत्रत्य वचनम्—**सेन्द्रिय चेतनम्, निरिन्द्रियमचेतनम्** (च० स० सू० ४८) इति । तथाऽप्युद्भूतचैतन्य सेन्द्रिय-द्रव्यस्य, अनुद्भूतचैतन्य निरिन्द्रियद्रव्यस्येति विवक्षया चरककृताऽभिहितमिति विज्ञायते । यतो हि **धातो कर्मण समानकर्तृकादिच्छाया वा** (पा० सू० ३।१।७) इतिसूत्रभाष्ये **अश्मा लुलुठिषते, कूल पिपतिषतीति** इच्छाया सन्-प्रत्ययस्योदाहरणे प्रस्तूयेते पतञ्जलिना । परन्तूभयत्रेच्छाया सन्प्रत्ययो भवितु नार्हति । यतो हि **इच्छा** हि चेतनेष्वेव दृश्यते, न त्वचेतनेष्विति । अश्मन कूलस्य चाऽचेतनत्वादिच्छाया सन्प्रत्ययस्याऽसत्त्वादश्मा लुलुठिषते, कूल पिपतिषतीत्युदाहरणे न सेत्स्यतः । यथा ब्रूते पतञ्जलि —**अश्मा लुलुठिषते, कूल पिपतिषतीति । किं पुन कारण न सिध्यति ? एवं मन्यते, चेतनावत एतद् भवति—'इच्छा' इति, कूलञ्चाऽचेतनम्** (म० भा० ३।१।७) इति ।

उपरि प्रदर्शितयोरुदाहरणयोरिच्छाया सन्प्रत्ययस्तु स्यादेव । यतो हि **सर्वो हि भावश्चेतनावान्** भवति । अतश्चेतनावतोरश्मकूलयोरिच्छाया सन्प्रत्ययस्य सत्त्वे अश्मा लुलुठिषते, कूल पिपतिषतीत्युदाहरणे सुष्ठूपपद्येते । यथाऽऽचष्टे पतञ्जलि —**सर्वस्य वा चेतनावत्त्वात्** । (का० वा० पा० सू० ३।१।७) इति । अस्य भाष्यम्—**अथवा सर्व चेतनावत् । एव ह्याह—कसकाः सर्पन्ति, शिरीषोऽधः स्वपिति, सुवर्चला आदित्यमनुपयति, आस्कन्द कपिलकेत्युक्ते तृणमास्कन्दति, अयस्कान्तमयः सङ्क्रामति, ऋषिः पठति—शृणोत ग्रावाण.** सर्पणक्रियया, स्वपिक्रियया, अनुगमनक्रियया, आस्कन्दिक्रियया, आकर्षणक्रियया, शृणोतिक्रियया चेत्यादीना चेतनावत्त्व साधित पतञ्जलिना । (म० भा० ३।१।७) इति ।

अमुमेवाऽऽशय कैयटनागेशावपि स्पष्टीकुरुत —
सर्वस्यैवेति—**आत्माऽद्वैतदर्शनेनेति भावः**[1] । ऋषिरिति—**वेद. सर्वभावानां**

१. द्र० सर्व खल्विद ब्रह्म तज्जलानिति शान्त उपासीत छा० १४।१

**चैतन्य प्रतिपादयतीत्यर्थः । वैचित्र्येण च पदार्थानामुपलम्भत्वात् सर्वचेतन-धर्मप्रसङ्गः सर्वत्र नोद्भावनीयः** (प्र० पा० सू० ३।१।७) इति ।

वैचित्र्येणेति—**चेतनेषु मनुष्येष्वपि नानाजातीयव्यवहारदर्शनादिति भावः । सर्वत्र परिणामदर्शनेन चेतनाऽधिष्ठानं विना च तदसम्भवात्सर्वस्य तदधिष्ठि-तत्व ज्ञायत इति तात्पर्यम्** (उद्० ३।१।७) इति । एतेन सर्वेषा चेतनावत्त्व सिध्यति । यत्रोद्भूत चैतन्य तत्रैव चेतनोऽय चेतनोऽयमिति लौकिका जानन्ति । परमार्थदृशा तु काष्ठकुड्यपाषाणादीनामपि चैतन्यमस्त्येव । एतेषा चैतन्य-मनुद्भूतरूपेणैव वर्त्तते । अत एव लौकिका एतेषा जडत्वमवगच्छन्ति । परमार्थतो जडत्वमेतेषा भवेच्चेत्तर्हि कसकादीना सर्पणक्रिया, आकर्षणक्रिया च न सिध्येत्, जडत्वात् । दृश्यन्ते च तेषु ता क्रिया । अत सर्वभावाना चैतन्यमस्तीति गम्यते । अत्र कसका (=कास धातु के वर्त्तन इति भाषा) कसा एव कसका स्वार्थे कन् प्रत्ययेन साध्यते । **अयस्कान्तमणि** (=चुम्बकलौह ) इति । **शृणोत ग्रावाणः** इति भाष्योदाहृतवचनेन पाषाणस्यापि चैतन्यमुक्तम्, अन्यथा पाषाणादीना जडत्वाच्छ्रुतित्व न सम्भवति । अत्र ग्रावाण =पाषाणा इति । पाषाणस्य चैतन्य हनूमन्मैनाकयो सवादेनाऽपि सिध्यति । तथाहि—

> **पूर्वं कृतयुगे तात ! पर्वताः पक्षिणोऽभवन् ।**
> **तेऽपि जग्मुर्दिशः सर्वा गरुडानिलवेगिनः ॥**
>
> (वा० रा० सु० का० सर्ग १ श्लो० १२३ख १२४क) ।

तरुगुल्मलतादीना तु भग्नक्षतसरोहणादिनोद्भूतचैतन्यमेव दृश्यते । यथाऽस्मदादीना शरीरस्य भग्नक्षतसरोहण भवति, तथा तर्वादीनामपि ।

यथा ब्रूते विश्वनाथ—**वृक्षादीनामपि चेष्टासत्त्वान्नाऽव्याप्तिः । न च वृक्षादीनां शरीरत्वे किं मानमिति वाच्यम् ? आध्यात्मिकवायुसम्बन्धस्य प्रमाण-त्वात् । तत्रैव किं मानमिति चेत् ? भग्नक्षतसरोहणादिना तदनुमानात्** (न्या० सि० मु० भा० परि० ३८) इति । तथा चाऽस्मदादीना यथोद्भूत चैतन्यमस्ति, तथा तरुगुल्मलतादीनामपि । अत एव व्यासस्य पुत्रविरहेण कातर्यं दृष्ट्वा तरुगुल्मलतादयोऽपि रोदन चक्रु । तथाहि—

> **य प्रव्रजन्तमनुपेतमपेतकृत्यं द्वैपायनो विरहकातर आजुहाव ।**
> **पुत्रेति तन्मयतया तरवोऽभिनेदुस्त सर्वभूतहृदयं मुनिमानतोऽस्मि ॥**
>
> (श्रीमद्भा० स्क० १ अ२ श्लोक२) इति ।

अपि च—

> **सुखदुःखयोश्च ग्रहणाच्छिन्नस्य च प्ररोहणात् ।**
> **जीवं पश्यामि वृक्षाणामचैतन्यं न विद्यते ॥**
>
> महाभारते शान्तिपर्वणि (अ० १८४, श्लो० १७)

किञ्च नारदमहर्षे शापवशान्नलकूबरमणिग्रीवौ द्वौ भ्रातरौ यमलार्जुनौ वृक्षौ बभूवतु । श्रीकृष्ण तयोरुपरि दया कृत्वा यमलार्जुनयो तर्वोर्मध्ये जगाम । गच्छत कृष्णस्य कटौ रज्ज्वा बद्धमुलूखल तयोर्मध्येऽवरुद्धम् । कृष्णो रज्जु गृहीत्वा वेगेनोलूखलमाकृष्टवान् । तेन यमलार्जुनौ वृक्षौ भूमौ निपतितौ । ताभ्या नलकूबरमणिग्रीवयोराविर्भावो बभूव । यथोक्तम्—

**बालेन निष्कर्षयतान्वगुलूखल तद्दामोदरेण तरसोत्कलिताङ्घ्रिबन्धौ ।**
**निष्पेततु परमविक्रमितातिवेपस्कन्धप्रवालविटपौ कृतचण्डशब्दौ ॥**
**तत्र श्रिया परमया ककुभ स्फुरन्तौ सिद्धावुपेत्य कुजयोरिव जातवेदाः ।**
**कृष्ण प्रणम्य शिरसाखिललोकनाथ बद्धाञ्जली विरजसाविदमूचतु. स्म ॥**

श्रीमद्भा० स्क० १० । अ० १० श्लो०२७-८) इति ।

एतेनाऽपि वृक्षस्य चैतन्यमवगम्यते । अत एव मनुरपि वृक्षादीना चैतन्य-मस्तीति सगिरते । तथाहि तस्य वचनम्—

**तमसा बहुरूपेण वेष्टिता कर्महेतुना ।**
**अन्त·संज्ञा भवन्त्येते सुखदुःखसमन्विताः ॥**

मनुस्मृति १।४९॥

काष्ठस्य चैतन्यन्तु स्तम्भान्नृसिहरूपस्य परमेश्वरस्याऽविर्भावादवगम्यते । यथोक्तम्—

**स विक्रमन् पुत्त्रवधेप्सुरोजसा निशम्य निर्ह्रादमपूर्वमद्भुतम् ।**
**अन्तःसभायां न ददर्श तत्पद वितत्रसुर्येन सुरारियूथपा. ॥**
**सत्य विधातुं निजभृत्यभाषितं व्याप्ति च भूतेष्वखिलेषु चात्मनः ।**
**अदृश्यताऽत्यद्भुतरूपमुद्वहन् स्तम्भे सभाया न मृग न मानुषम् ॥**
**स सत्त्वमेन परितोऽपि पश्यन् स्तम्भस्य मध्यादनुनिर्जिहानम् ।**
**नाऽयं मृगो नाऽपि नरो विचित्रमहो किमेतन्नृमृगेन्द्ररूपम् ॥**

(श्रीमद्भा० स्क० ७ अ० ८ श्लो० १७-१९) इति ।

**अत्र व्याप्तिञ्च भूतेष्वखिलेषु चात्मन** इति कथनेन आत्मनो व्यापकत्व गम्यते ।

॥ इत्यात्मा ॥

## (६) मनः

**मनसः साधनम्—**

अथ मनो विचार्य्यते। अत्राऽऽदौ वैशेषिकस्य मतमुपन्यस्यते। तत्राऽस्य द्रव्यस्य शुक्ल रूपम्, अस्येक्षोर्मधुरो रस, पुष्पस्य सौरभोऽयमित्यादिप्रतीतीनाञ्चक्षूरसन-घ्राणेत्यादीनीन्द्रियाणि करणानि सन्ति। यतो हि चक्षुरादिभिरिन्द्रियैरेव रूपादीना ज्ञानमुत्पद्यते, नहि रूपादीना ज्ञान तानीन्द्रियाण्यन्तरोत्पत्तु प्रभवति। अत एव चाक्षुष रूपम्, रासनो रस, घ्राणजो गन्ध, त्वाच स्पर्श, श्रावण शब्द इति व्यवहारो भवति।

एवमेव ममेद दु खम्, ममेद सुखमित्यनयो प्रतीत्योरपि किञ्चित्करणमवश्य मन्तव्यम्। यतो हि सुखदु खे अनुभूयेते। एतयोरनुभवात्मकञ्च ज्ञान नहि किञ्चित्करण विना सम्भवति, न च सुखदु खयोर्ज्ञान प्रति चक्षुरादीनीन्द्रियाणि करणानि भवितुमर्हन्ति, बहिरिन्द्रियग्राह्यत्वाभावादान्तरवेद्यत्वाच्च। तथा च यत सुखदु खयोर्ज्ञान भवति, अत तस्य ज्ञानस्य करणमपि किञ्चिदस्तीति गम्यते॥ तच्च करण मन एव। यथोक्त कणादेन—

**आत्मेन्द्रियमनोऽर्थसन्निकर्षात्सुखदु खे** (वै०सू० ५।२।१५) इति।

न केवल सुखदु खयोर्ज्ञान प्रत्येव मनस करणत्वम्, प्रत्युत बहिरिन्द्रिय-जन्यरूपादिज्ञानप्रयत्नान् प्रत्यपि तस्य करणत्वम्। यथोक्तम्—**सुखदु.खे प्रति मनसः करणत्वमित्युपलक्षणम्, तेन ज्ञानप्रयत्नाद्यपि** (उप० ५।२।१५) इति। यतो ह्यात्मेन्द्रियार्थाना सम्बन्धे जातेऽपि मनस सम्बन्धस्य सत्त्व एव रूपादि-विषयाणा ज्ञान जायते, तस्याऽसत्त्वे तु तेषा नैव ज्ञानम्। अतो रूपादिज्ञान प्रति मनस सहकारिकरणत्वम्, बहिरिन्द्रियग्राह्यत्वात्, सुखदु खयोर्ज्ञान प्रति तस्याऽ-साधारणकरणत्वञ्चाऽऽन्तरवेद्यत्वात्।

एवञ्च मनस सत्त्वे ज्ञानम्, तस्याऽसत्त्वे ज्ञानाऽभावश्च यतो भवति, अत सुखदु खयोर्ज्ञान प्रत्यसाधारणकरणत्व मनस एवाऽस्तीति गम्यते।
यथोक्त कणादेन—**आत्मेन्द्रियार्थसन्निकर्षे ज्ञानस्य भावोऽभावश्च मनसो लिङ्गम्** (वै०सू० ३।२।१) इति। सूत्रेऽस्मिन् ज्ञानस्य=सुखदु खादेर्ज्ञानस्य। भाव=सत्त्वम्। अभाव=असत्त्वम्, मनसो लिङ्गम्=मनस करणत्वम्[1]।

---

१. शास्त्रान्तरेऽपि मनसो लक्षण दृश्यते—

लक्षण मनसो ज्ञानस्याऽभावो भाव एव च।
वैधृत्यान्मनसोऽज्ञान सान्निध्यात्तच्च वर्त्तते॥

च० स० शा० १८ इति।

इदमेव मत स्पष्टीभवति शङ्करमिश्रस्य वाक्येनाऽपि—**आत्मेन्द्रियार्थसन्निकर्षे सति यस्मिन्निन्द्रियसन्निकृष्टे ज्ञानस्य भावः, असन्निकृष्टे ज्ञानस्याऽभावोऽनुत्पादस्तन्मन** (उप० ३।२।१) इति । इदमेव विशदीकरोति विश्वनाथोऽपि—

**साक्षात्कारे सुखादीनां करणं मन उच्यते** (भा० परि० ८५) इति । प्रशस्तपादाचार्योऽप्युक्त मतमित्थ विशदीकरोति—

**मनस्त्वयोगान्मनः । सत्यप्यात्मेन्द्रियार्थसान्निध्ये ज्ञानसुखादीनामभूत्वोत्पत्तिदर्शनात् करणान्तरमनुमीयते । श्रोत्राद्यव्यापारे स्मृत्युत्पत्तिदर्शनाद् बाह्येन्द्रियैरगृहीतसुखादिग्राह्यान्तरभावाच्चाऽन्त करणम्** (प्र०पा०भा०पृ० २१६-२१८) इति । अत्राऽन्त करणम्=मन ।

**मनसो विभुत्वसाधनम्**—

ज्ञानमात्र प्रत्यात्ममनसो सयोगाऽसमवायिकारण भवति । तत्राऽऽत्मा विभुद्रव्यमस्ति, सर्वमूर्त्तद्रव्यसयोगित्वात्, ज्ञानमात्र प्रत्यसमवायिकारणत्वाच्च । तथा मनसोऽपि विभुद्रव्यत्व स्यात्, ज्ञानमात्र प्रत्यसमवायिकारणत्वात् । किञ्च मनो विभुद्रव्यम्, स्पर्शस्याऽत्यन्ताऽभाववत्त्वात् । यथा स्पर्शस्याऽत्यन्ताऽभाववत्त्वादाकाश विभुद्रव्यम्, तथा मनोऽपि स्यात् तद्वत्त्वादिति ।

किञ्च मनो विभुद्रव्यमस्ति, विशेषगुणशून्यत्वात् । यथा विशेषगुणशून्यत्वेन कालो विभुद्रव्यमस्ति, तथा विशेषगुणशून्यत्वेन विभुद्रव्यत्व मनसोऽपि । यथोक्तम्—**मनो विभु विशेषगुणशून्यद्रव्यत्वात्कालवत्, ज्ञानाऽसमवायिकारणसयोगाऽऽधारत्वादात्मवत्, स्पर्शाऽत्यन्ताऽभावत्वादाकाशवदित्यादिमनसो वैभवसाधकं प्रमाणम्** (उप० ३।२।१) इति ।

किञ्च मनो विभुद्रव्य भवेच्चेत्तर्हि यथाकाशादेर्विभुत्वेन सर्वमूर्त्तद्रव्यै सह सयोग. सर्वदोपलभ्यते, तथा मनसोऽपि सर्वैश्चक्षुरादिभिरिन्द्रियै सर्वकालिक सयोग स्यात् । तथा च सर्वैरिन्द्रियै सर्वविषयक ज्ञानमेकरूपमेव युगपदुपलभ्येत । न च चाक्षुषत्वरासनत्वादीना परस्पर विरोधान्न सर्वैरिन्द्रियैरेकमेव ज्ञानमुत्पत्स्यत इति वाच्यम् ? सामग्रीसमवधाने सति कार्यस्याऽवश्यमेवोत्पाद्यमानत्वात् । तथा च यथा शुक्लनीलपीतादिरूपाणामेक चित्र रूपमुपलभ्यते, तथा चाक्षुषत्वरासनत्वादीनामप्येवमेव ज्ञान चित्ररूपवत्स्यात् ।

**मनसो विभुत्वखण्डनम्**—

मनसो विभुद्रव्यत्वस्वीकारे पादे मे दु खम्, शिरसि मे वेदना, शरीरे मे सुखमित्यादिभिन्न-भिन्नाऽवयवाऽवच्छिन्ने प्रदेशे दु खादीना यज्ज्ञान भवति, तन्न स्यात्, मनसो विभुत्वात् । तथा च मनसो विभुद्रव्यत्वाद् विभुदेशे सुखदु खे भवत इत्येव व्यवहार. स्यात्, न तु पादे मे दु.खम्, शिरसि मे वेदना, शरीरे मे सुख-

मित्यादिप्रादेशिकत्वव्यपदेश इति । किन्तु पादे मे दु:खमित्यादिव्यवहारो भवति । स च व्यवहारो मनसो विभुत्वे न सिध्यति । यतो हि विभुकार्याणि स्वाऽसमवायिकारणाऽवच्छिन्नप्रदेशे एव जायन्ते । यथोक्तम्—

**विभुकार्याणामसमवायिकारणाऽवच्छिन्नदेश उत्पादनियमः** (उप० ३।२।१) इति । अत एव येन क्रमेण शब्द उच्चारितो भवति, तेनैव क्रमेण शब्द शब्दाऽऽ-कर्षकयन्त्रेण (WIRELESS, TELEVISION, RADIO) दूरस्थितेन (=शब्दोच्चारणदेशाद्भिन्नदेशस्थितेनाऽपि) जनेन श्रूयते । यतो हि यस्मिन् देशे शब्दस्योच्चारण भवति, तस्मिन् देशे, ततो भिन्नदेशे चैकमेवाऽऽकाश तिष्ठति, तस्य विभुत्वात् ।

एवञ्च यतो भवति, सुखदु खयो **शिरसि मे वेदने**त्यादिप्रादेशिकत्व-व्यवहार , अतो मनसो विभुत्व नाऽस्तीति मन्तव्यम् ।

**मनसोऽणुत्वसाधनम्—**

मनसोऽणुत्वमेवाऽस्ति, न तु विभुत्वम्, प्रतीतिविरोधात् । अत एव दीर्घशष्कुल्या भक्षणकाले न ज्ञानस्य यौगपद्यम्, न वा चित्ररूपमिव तत्रैक चित्र ज्ञान-ञ्चोत्पद्यते । किन्तु क्रमिकमेव ज्ञान जायते दीर्घशष्कुल्या भक्षणकालेऽपि । यौगपद्यप्रतीतिस्तूत्पलशतपत्रभेदनवद् भवति । तथा चाऽण्वेव मन इति निष्कर्ष । यथाह कणाद —**तदभावादणु मनः** (वै० सू० ७।१।२३) इति ।
सूत्रेऽस्मिन्—तद्=विभु । अभावाद्=विभोरसत्त्वात् । अणु=परमाणु । मन =अन्त करणम् ।
इदमेव शङ्करमिश्रोऽपि ब्रूते—**तस्य विभवस्य सर्वमूर्त्तसयोगित्वस्याऽभावादणु मनः** (उप ७।१।२३) इति ।

ज्ञानाना यौगपद्य न प्रतीयते, किन्तु क्रमिकत्वमेव । अत तस्याऽणुत्व-मेवेति स्पष्टीकृत विश्वनाथेनाऽपि—**अयौगपद्याज्ज्ञानाना तस्याऽणुत्वमिहेष्यते** (भा० परि० ८५) इति ।

**मनस एकत्वसाधनम्—**

शरीरेषु प्रत्येक मनस एकत्वमेव, न तु नानात्वम् । यद्येकस्मिञ् छरीरे मनसो नानात्वमुरीक्रियते तर्हि ज्ञानाना यौगपद्य स्यात् । अत एकस्मिञ् छरीर एकमेव मनोऽस्तीति । यथाह कणाद. —**प्रयत्नाऽयौगपद्याज्ज्ञानाऽयौगपद्या-च्चैकम्** (वै० सू० ३।२।३) इति ।
इदमेवोपस्कारकृताऽपि—**यद्येकस्मिन्नपि शरीरे बहूनि मनांसि स्युस्तदा ज्ञान-प्रयत्नानां यौगपद्यमेव स्यात्** (उप० ३।२।३) इति ।
एतेनैकस्मिञ् छरीर एकमेव मनोऽस्तीति गम्यते ।

**मनसो नित्यत्वं द्रव्यत्वञ्च—**

मनसोऽणुरूपत्वमस्तीति प्रागभिहितम् । यदणुरूपमस्ति, तन्नाऽनित्यद्रव्यमस्ति । प्रत्युत नित्यद्रव्यमेव तत् । तथा च यतो मनसोऽणुरूपत्वमस्ति, अत तस्य नित्यत्वमस्त्येव ।

**मनसो द्रव्यत्वसाधनम्—**

मनसोऽणुपरिमाणत्वमस्ति । एतेन तस्य द्रव्यत्व सिध्यति, अणुपरिमाणवत्त्वात् । किञ्च मनो हि क्रियावद्द्रव्यमस्ति[1] । अत क्रियावत्त्वात्तस्य द्रव्यत्वमवगम्यते । एवमेव सख्यादिगुणाश्रयत्वादपि तस्य द्रव्यत्वमस्त्येव । यथोक्तम्—

**अणुत्वमथ चैकत्व द्वौ गुणौ मनस स्मृतौ** (च०स० शा० १६) इति । एतेन मनसोऽणुत्वात्तस्य नित्यत्वम्, एकत्वसख्याऽऽश्रयत्वात्तस्य द्रव्यत्वमवगम्यते । यथाह कणाद —**तस्य द्रव्यत्वनित्यत्वे वायुना व्याख्याते** (वै० सू० ३।२।२) इति । अस्याऽयमर्थ —यथाऽवयविद्रव्येणाऽनुमितो वायुपरमाणुर्गुणवत्त्वात्, क्रियाश्रयत्वाच्च द्रव्यत्वम्, अनाश्रितत्वात्तस्य नित्यत्वमपि । नहि परमाणोरवयवकल्पनाया किञ्चित्प्रमाणमुपलभ्यते, येन तस्याऽऽश्रितत्वमवगम्येत । अतो यथा वायुपरमाणोरवयवशून्यत्वान्नित्यत्वम्, तथा मनसोऽपीति विज्ञायते ।

**मनस इन्द्रियत्वसाधनम्—**

यथा रूपादेर्ज्ञान नहि चक्षुरादीनीन्द्रियाण्यन्तरा सिध्यति । अपि तु चक्षुरादिभिरिन्द्रियैरेव तेषा ज्ञान जायते। अत एव चक्षुर्भ्या हीनो जनो रूप न पश्यति । बधिरो न शब्द शृणोति । तथा च यतो रूपादेर्ज्ञान प्रति चक्षुरादीनीन्द्रियाणि करणानि सन्ति अत एव चाक्षुष रूपम्, श्रावण शब्द, त्वाच स्पर्श इति प्रतीतिसाक्षिको व्यवहार कथ्यते तथा सुखदु खयोर्ज्ञान नहि चक्षुरादिभिरिन्द्रियैर्भवति। न च किञ्चित्करणमन्तरा ज्ञान भवति प्रत्युत केनचित्करणेनैव । यथा रूपादेर्ज्ञाने चक्षु करण भवति । अत एव ज्ञान हि सकरणक भवतीति कथ्यते । तथा च यत सुखदु खयोर्ज्ञान भवति । अत तयोर्ज्ञाने किञ्चित्करणमवश्यमस्तीति गम्यते । नहि सुखदु खे प्रति चक्षुरादीनि करणानि, तयोरान्तरवेद्यत्वात् । तस्मात्सुखदु खयोर्ज्ञान प्रति मनस एव करणत्वमस्तीति निश्चीयते । यद्यपि ज्ञानमात्र

---

१ मनः क्रियावद्द्रव्यमस्तीति कृष्णद्वैपायनेनोक्तम्-

चञ्चल हि मन कृष्ण ! प्रमाथि बलवद्दृढम् ।
तस्याऽह निग्रह मन्ये वायोरिव सुदुष्करम् ॥
असशय महाबाहो ! मनो दुर्निग्रह चलम् । गी० ६।३४-३५ क ॥
एतेन मन क्रियावद्द्रव्यमस्तीति गम्यते ॥

प्रति मनस करणत्वमस्ति, तथापि सुखदुःखे प्रति तस्याऽसाधारणकरणत्वमस्तीत्यवधार्य्यते। एतेन मनस इन्द्रियत्व सिध्यति। यथोक्तम्—

**सुखादिसाक्षात्कार इन्द्रियकरणक साक्षात्कारत्वात्, रूपादिसाक्षात्कारवदितीन्द्रियत्वेन मन सिद्धम् । इन्द्रियत्वञ्च ज्ञानकारणमन सयोगाश्रयत्वमित्ययत्नसिद्धमेव मनसो द्रव्यत्वम्** (उप० ३।२।२) इति।

अथ व्याकरणदृशा मनो विचार्यते। इमानि मनोघटितानि सूत्राणि। तथाहि—

| | |
|---|---|
| १—**करोमनसी श्रद्धाप्रतिघाते** | पा० सू० १।४६६ |
| २—**अनत्याध्यान उरसिमनसी** | पा० सू० १।४।७५ |
| ३—**अरूर्मनः—** | पा० सू० ५।४।५१ |
| ४—**मनसः सज्ञायाम्** | |
| ५—**क्षुब्धस्वान्त·—मन —** | पा० सू० ७।२।१८ |

**मनसो लक्षणस्य समर्थनम्—**

मनसो यादृश लक्षण वैशेषिकैरास्थितम्, तादृशमेव लक्षण शाब्दिकैरपि स्वीक्रियत इति पूर्वाचार्यस्य व्याख्यानतो विज्ञायते।

**मनसो मध्यमपरिमाणवत्त्वसाधनम्—**

वैयाकरणा मनसो मध्यमपरिमाणवत्त्व स्वीकुर्वन्ति, न तु तस्याऽणुपरिमाणवत्त्वम्, न वा विभुपरिमाणवत्त्वम्। अत्र मध्यमपरिमाणवत्त्वम्=विषयानुरूपपरिमाणवन् मन इति दर्शनम्। ते कथयन्ति यदि मनसोऽणुत्व स्वीक्रियते तर्हि विषयस्य ज्ञान न भवितुमर्हति, मनसोऽणुत्वात्। नहि परमाणुपरिमाणवन्मनो महापरिमाणवन्त विषय परिच्छेत्तु शक्नोति। न च विषयस्य परिच्छेदमन्तरा तस्य ज्ञान प्रत्यसाधारणकरणत्व मनस सिध्यति। मनस करणत्वमन्तरा कस्यचिदपि ज्ञानमुत्पत्तु न प्रभवति[1]। तस्माद् विषयस्य परिच्छेदाय मनसो मध्यमपरिमाणवत्त्वमवश्यमङ्गीकरणीयम्। अत एव सूक्ष्मवाङ्मनसोऽवस्था लब्ध्वा परश्रवणगोचर वैखरीरूपमेति। यदि मनसोऽणुत्व स्वीक्रियते तर्हि सूक्ष्मवागर्थबुबोधयिषया मनोभावमापद्यते, तत साऽर्थबोधने सामर्थ्यवती भवतीति कथनस्य सामञ्जस्य हीयेत वाङ्मनसो सूक्ष्मत्वात्। यतो हि नहि कश्चिद् भिक्षुक कस्यचिद्भिक्षुकान्तरस्य पार्श्वे गच्छति, सत्यन्यस्मिन्नभिक्षुक इति लौकिको हि व्यवहार। अमुमेवाऽऽशय पुष्णाति हरि.—

१ द्र०—मनसा सयुक्तानीन्द्रियाण्युपलब्धौ कारणानि भवन्ति, मनसोऽसान्निध्यात्। म० भा० ३।२।११५

ख—मनोऽनवस्थानात्। सा० का० ७

अथेदमान्तरं ज्ञानं सूक्ष्मवागात्मना स्थितम् ।
व्यक्तये स्वस्य रूपस्य शब्दत्वेन विवर्त्तते ॥
स मनोभावमापद्य तेजसा पाकमागत ।
वायुमाविशति प्राणमथासौ समुदीर्यते ॥ वा०प० १।११२-
११३ इति ।

अत्रेयं वृषभदेवीया टीका—

**मनो हि विषयपरिच्छेदकमिति मनोऽवस्थामागच्छति । विषयपरिच्छेदेन योग्येन स्थूलेनाऽऽत्मना व्यवतिष्ठते मन, प्रकाशरूपत्वादिति ।**

इदमेव नागेशोऽप्यनुमन्यते—**यद्यपि पातञ्जलानामन्त करण व्यापकम्, तथापि तत्परिणामविशेषो मनश्चिरस्थायिमध्यमपरिमाणं सङ्कोचविकासशालिज्ञानकारणम्** । (उद्० ३।२।११५) इति ।[1]

मनसो मध्यमपरिमाणवत्त्वादेव कश्चिदपर प्रति वक्ति यदह शरीरेणाऽत्र स्थितोऽपि सन् मनसा नाऽऽसम् । अतो भवदुक्त वचन समाहितमनसा नाऽश्रौषम् । तेन मम मनसि अर्थबोधो न जात । यथोक्तम्—

**अन्यत्रमना अभूव नाऽश्रौषमिति** व्यवहारो दृश्यते ।

किञ्च **षष्ठी शेषे** (पा०सू० २।३।५०) इति सूत्रस्य वरवर्णिनीव्याख्यातोऽपि मनसो मध्यमपरिमाणवत्त्व साऽवयवतया सिध्यति । तथाहि—**यद्यपि मनसः परमाणुरूपस्य निरवयवस्य सत्त्वेन युगपज्ज्ञानद्वयाऽसम्भवः, तथापि जन्यतया साऽवयवं मन इति सांख्यमतानुसारिणां शाब्दिकाना मतमस्तीति ।** अत्र साऽवयवतया मनसो मध्यमपरिमाणवत्त्वमस्तीत्यवगम्यते । मनसो मध्यमपरिमाणवत्त्वादेवैकस्मिन् काले न ज्ञानद्वयम्, यौगपद्य वा ज्ञानस्य जायते । कदाचिद् युगपदपि ज्ञान जायत एव । यथा—दीर्घशष्कुलीभक्षणकाले । यथाऽत्र ब्रूते नागेश — **अत एव सदा न ज्ञानयौगपद्यं कदाचित्तद्यौगपद्यमपि** (उद्० ३।२।११५) इति । नैयायिका वैशेषिकास्तु दीर्घशष्कुलीभक्षणकाले न ज्ञानस्य यौगपद्य स्वीकुर्वन्ति । यौगपद्यप्रतीतिस्तु भ्रान्त्या उत्पलशतपत्रभेदनवद् भवतीति मन्यन्ते । यथा ब्रूते गौतम — **युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम्** (न्या० सू० १।१।१६) इति ।

अत्र वात्स्यायन —**मनःसयोगानपेक्षस्य हीन्द्रियार्थसन्निकर्षस्य ज्ञानहेतुत्वे युगपदुत्पद्येरन् ज्ञानानीति** । (वा० भा० १।१।१६)

अपि चाह विश्वनाथ —**न च दीर्घशष्कुलीभक्षणादौ नानावधानभाजाञ्च कथमेकदाऽनेकेन्द्रियजन्यं ज्ञानमिति वाच्यम् ? मनसोऽतिलाघवाद् झटिति**

१. द्र०—अपि च वै० सि० म० पृ० ८७१ ।

**नाऽनेकेन्द्रियसम्बन्धान्नानाज्ञानोत्पत्त्या उत्पलशतपत्त्रभेदादिव यौगपद्यप्रत्ययस्य भ्रान्तत्वात्** (न्या० सि० मु० भा० परि० ८५) इति ।

**मनसो विभुत्वसाधनम्—**

योगिनस्तु विभुनोऽन्तःकरणस्य परिणामभूतं मनोऽपि विभ्विति न्यायसिद्धं पश्यन्ति, कार्यकारणयोरभेद इति सिद्धान्तात् । मनसा विभुत्वादेव शमदमादिना संस्कृतमनोवता योगिना स्वच्छाऽऽदर्शे बिम्बमिवाऽतीताऽनागतविषयाणामपि ज्ञानं जायते । अस्मदादीनां मनस्तु न शमदमादिना स्वच्छमस्ति । किन्तु असंस्कृतमेवाऽस्माकं मनोऽस्ति । तेन न योगिवदस्मदादीनामतीताऽनागतविषययोर्विज्ञानं जायते । यथोक्तम् —

> **वृत्तिरेवास्य विभुनश्चित्तस्य संकोचविकाशिनीत्याचार्यः**
> (व्या० भा० ४।१०) इति ।

एतेन मनसो विभुपरिमाणवत्त्वमस्तीति गम्यते ।

इदमेव नागेशोऽप्याह—**विकाशस्तु योगिमनस एव । यतो ह्यन्तःकरणं विभु । अत एव हि तस्याऽनन्तवासनाऽऽधारतया सर्ववृत्तिनिरोधेन योगिनां सर्ववस्तु ज्ञानम् । अन्यथा सन्निकर्षाऽभावान्न गृह्येत । योगजधर्मस्य प्रत्यासत्तित्वकल्पने गौरवम् । तेन च तमआख्यप्रतिबन्धनिवृत्तौ संयोगादिप्रत्यासत्त्यैव तेषां प्रत्यक्षं भवति । अस्मदादीनां तु क्षणविलम्बेऽपि यौगपद्यभ्रमश्शतपत्त्रभेद इव । अन्यथा दूरदेशस्थमपि ज्ञायेत** (वै० सि० म० पृ० ८७१—८७२) इति । अपि च—**पातञ्जलानामन्तःकरणं व्यापकम्** (उद्० ३।२।११५) इति ।

॥ इति मनः ॥

## (१०) तमः

अथ तमो विचार्य्यते। अत्राऽऽदौ वैशेषिकमतमुपन्यस्यते।

**तमसोऽतिरिक्तद्रव्यत्वस्वीकारे प्रमाणाऽभावोपन्यासः—**

पृथिव्यप्तेजोवायुष्वनुस्यूततया स्पर्श प्रतीयते। स्पर्शसमवायिकारणतया चैतेषा द्रव्यत्व सिध्यति। एतत्स्पष्टीकृतमुपस्कारकृता। तथाहि तस्य वचनम्-**द्रव्यनिष्पत्तिस्तावत्स्पर्शवद् द्रव्याधीना** (उप० ५।२।१९) इति।

तमस स्पर्शो नाऽनुभूयते, तत्र स्पर्शस्याऽभावात्। तमसि स्पर्शो भवेच्चेत्तर्हि रूपोद्भवेन सह स्पर्शोऽप्यवश्यमुद्भूततया प्रतीयेत। यथा—पृथिव्यादीना स्पर्शो रूपोद्भवेन सह प्रतीयते। तमस कृष्णरूप दृश्यते, न च स्पर्शोऽनुभूयते। तथा च यतो रूपोद्भवेन सह तमस स्पर्शो नाऽनुभूयते, अत तमसो द्रव्यत्वमपि नास्ति। येषा रूपोद्भवेन सह स्पर्शोऽस्ति, तेषामेव स्पर्शसमवायिकारणतया द्रव्यत्व सिध्यति। यथा पृथिव्यादीनाम्। यथोक्तमुपस्कारकृता—**न च तमसि स्पर्शोऽनुभूयते। नचाऽनुद्भूत एव स्पर्श, रूपोद्भवे सति स्पर्शोद्भवस्याऽऽवश्यकत्वात्** (उप० ५।२।१९) इति।

अमुमेव सिद्धान्त न्यायकन्दलीकारोऽप्यनुमन्यते—**अस्पर्शवत्त्वस्य कार्यद्रव्यानारम्भकत्वेनाऽव्यभिचारोपलम्भात्। कार्यं दृष्ट्वा तदनुगुणं कारण कल्प्यते, न तु कारणवैगुण्येन दृष्टकार्यविपर्यासो युज्यते।** (न्या० क० पृ० २२-२३) इति।

किञ्च तमसो यन्नील रूप प्रतीयते, तद्गुरुत्वरसगन्धेभ्योऽपृथक्त्वेनैवोपलभ्यते। गुरुत्वादिभ्यो बहिर्भूत नील रूप प्रतीयेत चेत्तर्ह्येव तमसो दशमद्रव्यत्व सिध्येत्। न च तथा तमसो नीलिमा प्रतीयते, अतः तस्य दशमद्रव्यत्वमसिद्धमेव।

किञ्च तमसो नीलरूपस्य विशेषगुणत्व स्वीक्रियते चेत्तर्हि तस्याऽऽलोकनिरपेक्षचाक्षुषत्व न सिध्यति। यतो हि नहि रूपमालोकनिरपेक्षेण चक्षुषा गृह्यते, किन्त्वालोकयुक्तेनेवेति, तस्य विशेषगुणत्वात्। यथा घटादे रूपम्। तथा च यतस्तमसो नीलरूपमालोकनिरपेक्षेणैव गृह्यते, अतस्तमसो नीलरूपस्य विशेषगुणत्व नाऽस्ति, आलोकनिरपेक्षचाक्षुषत्वात्। यथा ब्रूते शङ्करमिश्र —

**यथाकाशं शब्दमात्रविशेषगुणम्, तथा तमोऽपि नीलरूपमात्रविशेषगुणं स्यादिति चेन्न? चाक्षुषत्वविरोधात्। यदि हि नीलरूपवन्नील रूपमेव वा तम. स्याद् बाह्याऽऽलोकप्रग्रहमन्तरेण चक्षुषा न गृह्येत** (उप० ५।२।१९)

इति। एतेन तमसो नीलरूपस्य विशेषगुणत्वाऽभावात्, तदाश्रयत्वेन तमसो द्रव्यत्व न सिध्यति।

किञ्च तमसि या क्रियाया प्रतीतिर्जायते साऽपि न वास्तवी। किन्तु प्रदीपगतक्रियामादायैव क्रियावत्तम इति प्रतीतिर्भवति। अत एवाऽऽलोके सति गच्छति तम, आलोकाऽभावे सति तम आगच्छतीति व्यवहारो भवति। यथोक्त कणादेन—

**तेजसो द्रव्यान्तरेणाऽऽवरणाच्च** (वै० सू० ५।२।२०) इति। इदमेव मतमुपस्कारकृताऽपि स्पष्टीक्रियते—**गच्छता द्रव्यान्तरेण आवृते तेजसि पूर्वदेशाऽनुपलम्भादग्रिमदेशे चोपलम्भात्तेजोऽभावस्य गच्छद्द्रव्यसाधर्म्याद् गतिभ्रमो, न तु वास्तवी तत्र गतिरित्यन्वयव्यतिरेकाभ्यां तथा प्रतीतेः** (उप० ५।२।२०) इति।

किञ्च तमसो नीलरूप न वास्तवम्, किन्त्ववास्तवमेव। अत एव तेजस सत्त्वे तमो न तिष्ठति। यस्य द्रव्यस्य वास्तव रूपमस्ति, तस्य द्रव्यस्य तेजस सत्त्वे स्थितिर्दृश्यते। तथा च तमसो रूपवत्ताया प्रतीतिर्न वास्तवी, किन्तु सा प्रतीतिर्भ्रान्त्या भवति। किञ्च तमसो या क्रिया दृश्यते, साऽपि न तमसोऽस्ति, तेजस एवाऽस्ति। यतो हि प्रदीपस्य सत्त्वेऽपसरति तम, तस्याऽसत्त्वे तम आगच्छतीति व्यवहार.। अत्र ते क्रिये तेजस एव, न तु तमसः। तमसस्ते क्रिये स्तश्चेत्तर्हि यथा प्रदीपस्य गमनाऽऽगमने क्रिये दृश्येते तथा तमस कथ न ते क्रिये प्रतीयेते। अथ च प्रदीपस्य सत्त्वे यतस्ते क्रिये न दृश्येते, अतस्तयो क्रिययोराश्रय तमो नास्तीति निश्चीयते। तमस. तथा प्रतीतिस्तु भ्रान्त्या भवति। यथोक्तम्—

**रूपवत्ताप्रतीतिस्तु भ्रमरूपेति। कर्मवत्ताप्रतीतिरप्यालोकापसरणौपाधिकी भ्रान्तिरेव** (न्या० सि० मु० भा० परि० ३) इति। अपि च—**तमसि नीलरूपप्रतीतिस्तु भ्रान्तिरेव प्रदीपाऽपसरणक्रियाया एव तत्र भानात्** (न्यायबोधिनी) इति।

एवञ्च क्रियाश्रयत्वेनाऽपि तमसो द्रव्यत्व न सिध्यति। तथा च यतो न नीलरूपक्रिययोरधिकरण तम, अतस्तमो न भावरूप द्रव्यम्, अपि तु तेजसोऽभाव एव तमोऽस्तीति निश्चीयते। अत एवोक्त कणादेन—**द्रव्यगुणकर्मनिष्पत्तिवैधर्म्यादभावस्तमः** (वै० सू० २।२।१९) इति। एतेन नवैव द्रव्यम्, न तु तमोनामक दशम द्रव्यमस्तीति विज्ञायते। तथा चाऽऽह कणाद.—**पृथिव्यापस्तेजो वायुराकाशं कालो दिगात्मा मन इति द्रव्याणि** (वै० सू० १।१।१५) इति।

इदमेव प्रशस्तपादाचार्योऽप्याह—**तत्र द्रव्याणि पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि सामान्यविशेषसञ्ज्ञयोक्तानि नवैवेति** (प्र० पा० भा०

पृ० २०) इति। अत्र नवैवेति कथनेन तमसो दशमद्रव्यत्व निरस्त भवतीति गम्यते ।

अथ शब्दशास्त्रोक्तदिशा तमो विचार्य्यते। इमानि तम शब्दघटितानि सूत्राणि। तथाहि—

| | |
|---|---|
| **१—अपे क्लेशतमसोः** | पा० सू० ३।२।५० |
| **२—अवसमन्धेभ्यस्तमस.** | पा० सू० ५।४।७६ |
| **३—ओजःसहोऽम्भस्तमसस्तृतीयाया.** | पा० सू० ६।३।३ |
| **४—क्षुब्ध···मनस्तमः···** | पा० सू० ७।२।१८ |
| **५—ज्योत्स्नातमिस्रा[1]·· मलीमसा.** | पा० सू० ५।२।११४ |
| **६—ध्वान्त तमोऽभिधाने** | पा० सू० ७।२।१८ का०वा० |

**तमसो द्रव्यत्वसाधनम्—**

यद्यपि शब्दशास्त्रे तमसो द्रव्यत्व स्फुटतयोक्त नोपलभ्यते तथापि नाश-प्रतियोगित्वेन तमस उल्लेख समुपलभ्यत एव। यथा—तमोऽपह सूर्य.। अत्र तमोऽपह =तमोनाशक सूर्य.। यथोक्त नागेशेन—**उदयति सवितरि तमो नष्टम्=तमसो ध्वसो भवति**[2]। अस्य ध्वसस्य प्रतियोगि तमोऽस्ति। अभावस्य प्रतियोगी कश्चिद्भाव एव भवति। नह्यभावस्य प्रतियोग्यभावो भवितुमर्हति। तथा च यतो ध्वसस्य प्रतियोगि तमोऽस्ति अतस्तस्य भावत्वमेव निश्चीयते।

किञ्च केनचिद् भावेनैव वस्तुना किञ्चिद्वस्तु आव्रियते। यथा—भस्मना अग्नेरावरण भवति। आवृत हि वस्तु (=वह्नि) न दृश्यते। एव तमसाऽपि वस्तुन आवरण दृश्यते। अत एव तमसि निपतित वस्तु न प्रत्यक्षीभवति। तेन तेषा वस्तूना ज्ञान न भवति, तमसा आवरणात्। यथाऽतीताऽनागतकालयो स्थितमपि वस्तु न दृश्यते। यतो हि तद्वस्तु अतीताऽनागतकालाभ्यामावृत भवति। तथा च यतोऽतीताऽनागतयो. कालयोरावरणत्वाद् भावत्वमुररीक्रियते। अत. तमसोऽपि भावत्वमेवाऽस्तीति निश्चीयते। नह्यावरण भावद्रव्यमन्तरा सम्भवति, किन्तु भावेनैव। एतदेव स्पष्टीभवति हरिहेलाराजयोर्वचनेन—

**द्वौ तु तत्र तमोरूपावेकस्याऽऽलोकवत् स्थितिः।**
**अतीतमपि केषाञ्चित् पुनर्विपरिवर्त्तते॥** वा०प० ३।९।५३ इति।

**अतीताऽनागतावध्वानौ भावाऽऽवरणहेतुत्वात्तमःस्वभावौ। आवरणं हि तमो-**

---

१ तमःसमूहस्तमिस्रम्, तद् यत्राऽस्ति, तमिस्रा रात्रिर्वा यस्मिन्नस्ति तत्ता-मिस्रम्। (प्र० ५।२।१०३) इति।

२ द्र० उद्० पा० सू० २।३।३७

**धर्मः । गुरुवरणकमेव**[1] **तम** (हेला० ३।९।५३) इति ।

किञ्च रूपतन्मात्रस्य परिणामभूत तमोऽस्ति । तथा च यतो रूपतन्मात्र-भावरूप द्रव्यमस्ति अत तमोऽपि भावरूप द्रव्यमेवाऽस्ति, परिणामपरिणा-मिनोरभेदात् । नहि दुग्धस्य परिणामभूत दधि, अभावात्मक भवति । किन्तु भावरूपमेव । तथा रूपतन्मात्रस्य परिणामभूत तमोऽपि भावद्रव्यमेवाऽस्तीति निश्चीयते । स्पष्टीभवति मतमिद हरिकारिकया—

**अणव. सर्वशक्तित्वाद्भेदससर्गवृत्तय ।**
**छायाऽऽतपतमःशब्दभावेन परिणामिनः ॥** वा० प० १।११० इति ।

एतद्व्याख्याने प्राह अम्बाकर्त्रीकार —

**रूपपरमाणवश्चाऽसमुदेत्य छायाऽऽतपतमोरूपतया परिणामिन** इति ।

एवञ्चैतेन तमसो भावद्रव्यत्वमेवेति शाब्दिकाना मतमस्तीति गम्यते । तत्र गन्धशून्यत्वान्न पृथिवी, स्पर्शशून्यत्वान्नाऽप्तेजोवायुष्वन्तर्भवति । नाश्यत्व-वचनान्न तदाकाशादिष्वन्तर्भवति । तथा च नवभ्यो द्रव्येभ्यो भिन्न दशम द्रव्य तमोऽस्तीति विज्ञायते ।

**स्वमतपुष्टयेऽन्येषा मतस्योपन्यासः—**

स्वमतपुष्टये दार्शनिकान्तराणामपि मतमिहोद्ध्रियते । अभावस्य प्रति-योगी यतो भावो भवति, अत तमोऽपि नाशस्य प्रतियोगित्वाद् भाव एव । यथोक्त साख्यै —**नियतकारणात्तदुच्छित्तिर्ध्वान्तवत्** (सा० सू० १।५६) इति ।

अस्य सूत्रस्य व्याख्यानभूतेन भाष्येण स्पष्टीभवति—

**अत्र सूत्रे ध्वान्तस्याऽऽलोकनाश्यत्ववचनात् तमोऽपि द्रव्यमेव नत्वालोकाऽ-भावः । असति बाधके नीलं तम इत्यादिप्रत्ययानां भ्रमत्वाऽनौचित्यात्** (सा० प्र० भा० १।५६) इति । उक्तमेव मत मीमासकोऽप्यनुमन्यते—

**तमः कृष्णं विजानीयादाधारं गुणकर्मणाम् ।**
**गुणकर्मादिसद्भावादस्तीति प्रतिभासत. ॥**
**प्रतियोग्यस्मृतेश्चैव भावरूप ध्रुव तमः ।**
(मानमेयो० प्रमे० परि०) इति ।

एतेन कृष्णरूपाश्रयत्वात् क्रियाश्रयत्वाच्च तमसो द्रव्यत्व सिध्यति । अत एव परमिद तम , अपरमिद तम इति व्यवहारोऽपि भवत्येव । यथोक्त कैश्चित्—

**तम. खलु चलन्नीलं पराऽपरविभागवत् ।**
**प्रसिद्धधर्मवैधर्म्यान्नवभ्यो भेत्तुमर्हति ॥**
(सा० सू० १।५६ वृत्तौ उद्०) इति ।

---

१. गुरुवरणकमेव तम , सा० का० १३ ।

अपि च— **न च भासामभावस्य तमस्त्व वृद्धसम्मतम् ।**
**छायायाः कार्ष्ण्यमित्येव पुराणे भूगुणश्रुते ॥**
**दूरासन्नप्रदीपाद्धि महदल्पाऽचलाऽचला ।**
**देहानुवर्त्तिनी छाया न वस्तुत्वाद् विना भवेत् ॥**

(सा० सू० १।५६ वृत्तावुद्०) इति ।

ननु तमो भावद्रव्यमस्ति चेत्तर्ह्यालोकयुक्तेन चक्षुषा गृह्णीयादिति चेन्न ? आलोकनिरपेक्षतमसो ग्रहणस्वभावत्वात् । यथा कौशिको भानिरपेक्षेणैव वस्तूनि पश्यति, न तु भायुक्तेन, तथा तमोऽपि । यथोक्तम्—

**यथा कौशिकः (=उलूक) भानिरपेक्षेणैव वस्तूनि पश्यति, तथा आलोकाऽनपेक्षमेव तमसो ग्रहणं वैचित्र्यात् पदार्थस्य ।**

(सा० सू० वृ० १।५६) इति ।

छायाऽऽतपादीनां द्रव्यत्वं जैना अपि मन्यन्ते । यथोक्तम्—

**शब्दः पुद्गलपर्याय स्कन्धः छायाऽऽतपादिवत्** इति ।

(सिद्धिविनिश्चयटीका ६।२) इति ।

अत्रच्छाया=तम ।

॥ इति तम. ॥

# तृतीयः परिच्छेदः

## गुणसामान्यम्

**गुणस्य लक्षणम्—**

अथ गुणो विचार्य्यते। अत्राऽऽदौ वैशेषिकस्य मतमुपन्यस्यते। अत्र गुणस्य लक्षण किम् ? इति चिन्ताया कणादस्य सूत्रमुपस्थाप्यते। तथाहि—

**द्रव्याऽऽश्रय्यगुणवान् संयोगविभागेष्वकारणमनपेक्ष इति गुणलक्षणम्**
(वै० सू० १।१।१६) इति।

सूत्रेऽस्मिन् द्वावशौ वर्त्तेते। तत्र **द्रव्याऽऽश्रयीति, अगुणवान्, सयोगविभागेष्वकारणमनपेक्ष** इति च एतयोरशयोर्द्वयो क्रमेण व्याख्या प्रस्तूयते। तथाहि-द्रव्याऽऽश्रयीत्यस्य गुणो द्रव्यमाश्रयतीत्यर्थ। अत्र गुणस्याऽऽश्रयणं समवायेन द्रव्य एव भवति, द्रव्यादपृथग्ग्रहणाद्। अत एव **द्रव्याऽऽश्रयी**[1]ति गुणस्य लक्षण प्रास्तावीत्। किन्त्वेतल्लक्षणमतिव्याप्तम्, यतो हि गुण इव कर्म्माऽपि द्रव्यमाश्रयति। अतोऽतिव्याप्तिवारणाय लक्षणे अगुणवानित्यावाप.। अत्राऽगुणवानित्यस्य गुणवद्द्रव्यभिन्नो गुण इत्यर्थ। तेन गुणवद्द्रव्यमिव गुणवान् गुण इति नोपलभ्यते। किन्तु गुणशून्य एव गुणो भवति। अत एव **गुणे-गुणाऽनङ्गीकार** इति प्रतीतिसाक्षिको व्यवहार। परन्त्वेतदपि लक्षणमतिव्याप्तमेव, यतो हि गुण इव कर्म्माऽपि गुणवद्द्रव्यभिन्नमेवोपलभ्यते। अतो गुणलक्षणेऽतिव्याप्तिदोषस्याऽपसारणाय पदान्तरस्य सन्निवेश आवश्यक। अत एव सूत्रे **संयोगविभागेष्वकारणमित्युक्तम्**।

कर्मणा सयोगविभागौ जायेते। यथा—यदा चैत्रो गतिकर्म करोति, तदा चैत्रस्य पूर्वदेशाद् विभाग, उत्तरदेशेन च सयोगो भवति। सयोगविभागयो कारण कर्मैव भवति, न तु गुणा। यद्यपि चैत्रे कर्म्म इव गुणा अपि व्यवतिष्ठन्त एव। तथापि गुणाश्च चैत्रे सन्तोऽपि सयोगविभागौ न जनयन्ति। अत एव गुणा सयोगविभागौ प्रति कारणानि न सन्तीति विज्ञायते।

परन्त्वेतल्लक्षणमव्याप्तमेव दृश्यते[2]। यथा कर्म सयोगविभागौ जनयत्तौ

---

१. द्रव्यमाश्रयितु शीलमस्येति द्रव्याश्रयीति। उप० १।१।१६

२ सयोगविभागधर्माऽधर्मेश्वरज्ञानादीनामसंग्रह। उप० १।१।१६ ॥

प्रति कारण भवति, तथा सयोगविभागावपि कारणे स्त इति। तत्कथमिति चेदुच्यते—हस्तपुस्तकसयोग कायपुस्तकसयोगञ्जनयति। एव हस्तपुस्तक-विभाग कायपुस्तकविभागञ्जनयति। अत्र कायपुस्तकसयोग प्रति काय-पुस्तकविभाग प्रति वा, हस्तपुस्तकसयोगस्य, हस्तपुस्तकविभागस्य वा कारण-त्वमस्त्येव। किञ्च धर्माऽधर्मेश्वरज्ञानादीना जन्यमात्र प्रति निमित्तकारणत्व भवत्येव। तथा च सयोगविभागधर्माऽधर्मेश्वरज्ञानादीना पूर्वोक्तलक्षणेनाऽसग्रहाद-व्याप्तिदोष। तस्याऽपसारणाय पुनरपि पदान्तरस्य सन्निवेश आवश्यक। अत एव सूत्रे **अनपेक्ष** इति पद धृतम्।

अनपेक्ष इत्यस्य निरपेक्ष इत्यर्थः। तेन स्वोत्तरभावस्याऽपेक्षामकृत्वैव यत्किञ्चित्कार्य प्रति कारण भवति, ततो भिन्न सामान्यवदकारण य स गुणो भवतीति गृह्यते। यथा कर्म स्वोत्तरभावस्याऽपेक्षा विना सयोगविभागौ जनयति, तेन तौ प्रति कर्म कारण भवति, तथा च कर्मभिन्नो य सामान्यवान् स गुणो भवतीति। स एवाऽत्राऽकारणपदेन गृह्यते। यथोक्तम्—**संयोगविभागेष्वनपेक्षः सन् कारण यो न भवति स गुणः** (उप० १।१।१६) इति।

एवञ्च कायपुस्तकसयोग, कायपुस्तकविभागो वा, हस्तपुस्तकसयोगस्य, हस्तपुस्तकविभागस्य वाऽपेक्षा कृत्वैव जायते। तेन सयोगविभागयो सापे-क्षत्वात्तयोरकारणत्वमस्त्येव[1]। तेन नोक्तलक्षणस्याऽव्याप्ति, अतिव्याप्तिश्च दोष।

कारणपदेनाऽत्र समवाय्यसमवायिकारणे गृह्येते धर्माऽधर्मेश्वरज्ञानादीना जन्यमात्र प्रति निमित्तकारणत्वेऽपि समवाय्यसमवायिकारणयोरभावान्नाऽस्त्य-त्राऽव्याप्तिदोष[2]।

सौत्रेति पदस्य सार्थक्यमित्थ दर्शयन्ति केचित्—नित्यपरमाणुगत यन्नित्य परिमाणम् तद्वृत्तिर्या सत्ताव्याप्यपरिमाणत्वजाति तद्वद्=यत्परिमाणम्, तच्च गुण एव। यथोक्तम्—**नित्यवृत्तिनित्यवृत्तिसत्ताव्याप्यजातिमत्त्व गुणत्वम्** (उप० १।१।१६) इति। एतेन गुणस्य लक्षण निर्दिष्ट भवतीति।

**गुणस्य भेदाः—**

वैशेषिकैश्चतुर्विंशतिर्गुणा स्वीक्रियन्ते। एताश्च गुणानित्थ वर्णयन्ति तथाहि—**रूपरसगन्धस्पर्शाः संख्याः परिमाणानि पृथक्त्वं सयोगविभागौ**

---

१. सयोगविभागादीना सयोगविभागौ प्रति सापेक्षत्वात्। उप० १।१।१६,

२. धर्माऽधर्मेश्वरज्ञानादीना निमित्तकारणत्वमात्रम्, न समवायिकारणत्वम्, नाऽप्यसमवायिकारणत्वमिति तेषा सङ्ग्रह। उप० १।१।१६।

**परत्वाऽपरत्वे बुद्धयः सुखदुःखे इच्छाद्वेषौ प्रयत्नाश्च गुणाः** (वै० सू० १।१।६) इति ।

**चकारेण गुरुत्वद्रवत्वस्नेहसंस्कारधर्माऽधर्मशब्दान् समुच्चिनोति** (उप० १।१।६) इति[1] ।

एतेषां सङ्कलनेन चतुर्विंशतिर्गुणा वैशेषिकशास्त्रे संगृहीताः । एतेषां विवेचनाऽग्रे भविष्यतीति[2] ।

अथ व्याकरणदृशा गुणो विचार्य्यते । इमानि गुणशब्दसंबद्धानि सूत्राणि । तथाहि—

| | |
|---|---|
| १—**पूरणगुण—** | पा० सू० २।२।११ |
| २—**सर्वं गुणकार्त्स्न्ये—** | पा० सू० ६।२।९३ |
| ३—**गुणोत्तरेण तरलोपश्चेति वक्तव्यम्** | पा० सू० २।२।९ का० वा० |

शब्दशास्त्रे गुणस्य द्विविधं लक्षणम्, **सत्त्वे निविशतेऽपैति, संसर्गिभेदकञ्चे**-ति भेदात् । एतयोर्गुणलक्षणयोः क्रमेण विवेचना प्रस्तूयते । तथाहि—

**व्याकरणदृशा गुणलक्षणम्—**

गुणः कदाचिद् द्रव्ये पाकादिना पूर्वं रूपं रसं वा त्यक्त्वाऽपरं रूपं रसञ्च गृह्णाति । यथा—बदराऽऽम्राऽऽमलकादीनाम् । अतो बदरादयो हरितं रूपं त्यक्त्वा पीतं रक्तं वा रूपं गृह्णन्ति, एवं कषायाऽऽम्लरसं त्यक्त्वा मधुररसयुक्ताश्चाऽऽम्रादयो भवन्ति । वह्निसंयोगे सति घटः श्यामरूपं त्यक्त्वा रक्तरूपमाधत्ते । एतेन रक्तो निविशते, श्यामो निवर्त्तत इति प्रतीयते । स च गुणो नैकत्रैवोपलभ्यते, किन्तु गवाऽश्वादिषु विभिन्नजातीयेषु द्रव्येषु शुक्लादिगुणा दृश्यन्त इति । अत एव शुक्लोऽयं गौः, पीतमिदं वस्त्रमिति व्यापदेश उपपद्यते । यथोक्तम्—**द्रव्यमाश्रयते, तत एव च द्रव्यान्निवर्त्तते भिन्नजातीयेषु च दृश्यते यः स गुणः** (प्र० ४।१।४४) इति ।

सामान्यं यद् द्रव्यमाश्रयते, तद्द्रव्यमुत्पत्तेरारभ्य नाशपर्यन्तं न जहाति । यथा गोघटादिषु वर्त्तमानं गोत्वघटत्वादिसामान्यं गोघटादिद्रव्यमुत्पत्तेरारभ्य नाशपर्यन्तं न जहाति । अत एव गोत्वघटत्वादिसामान्यं गोघटादिष्वेव, न तु तेभ्यो भिन्नेषु वर्त्तते । यथोक्तम्—**आविष्टलिङ्गा जातिर्यल्लिङ्गमुपादाय प्रवर्त्तते, उत्पत्तिप्रभृत्याविनाशान्न तल्लिङ्गं जहाति** (म० भा० १।२।५२) इति । इदमेवैतद्व्याख्यानादपि सिध्यति—**जातिर्हि द्रव्ये निविशमाना द्रव्यं न**

---

१. एवमेव प्रशस्तपादभाष्येऽपि दृश्यते । द्र० पृ० २६-२७ ।

२. द्र० चतु० परि० पृ० सं० ९५ इत्यारभ्य परिच्छेदस्य समाप्तिं यावत् ।

**कदाचिज्जहाति, न च भिन्नजातीयानि द्रव्याण्यभिनिविशते** (प्र० ४।१।४४) इति। एतेन सामान्याद् गुणो भिन्नोऽस्तीति गम्यते।

परन्त्वेतावन्मात्रमेव लक्षण भवेच्चेत् कर्मण्यतिव्याप्ति स्यात्। यतो हि कर्म्माऽपि कदाचित्कस्मिश्चिद् द्रव्ये निविशमान ततो निवर्त्तमानञ्च दृश्यते। यथा—यदा चैत्रो गतिरूप कर्म करोति, तदा तत्र निविशते कर्मेति प्रतीयते। तत् कर्म्माऽवस्थिते चैत्रे न दृश्यते। अतस्ततो निवर्त्तते कर्म्मेति प्रतीयते। अत एव कदाचिद् द्रव्य कर्म्मयुक्त भवति, कदाचित्तद्रहितमपि। तत्कर्म गुण इव गवाश्वप्रभृतिषु द्रव्येषु दृश्यते। एतेन कर्म्मणोऽपि गुणत्व स्यात्। तथा च निर्दुष्ट गुणलक्षण न भवतीति। यथोक्तम्—**क्रियायास्तु पूर्वोक्तलक्षणयोगाद् गुणत्वं प्राप्नोति। साऽपि हि द्रव्ये निविशते, कदाचिद् द्रव्यान्निवर्त्तते। निष्क्रिय हि द्रव्यं कदाचिद् भवति, कदाचिद् सक्रियम्, विभिन्नजातीयानि च द्रव्याण्याश्रयतीति** (प्र० ४।१।४४) इति।

एवञ्च गुणलक्षणेऽतिव्याप्तेर्निरसनाय विशेषणान्तरपदस्य सन्निवेश आवश्यक। अत एवोक्तम्—**आधेयश्चाऽक्रियाजश्चेति।**

अत्राऽऽधेयः=उत्पाद्य, यथा—घटादीना पाकजो रूपादि। अक्रियाज = अनुत्पाद्य, यथाऽऽकाशादेर्महत्त्वादि। क्रिया तूत्पाद्यैव भवति, नत्वनुत्पाद्या। एतेनाऽतिव्याप्तेर्वारणसम्भावान्न कर्मणो गुणत्वम्।

विशेषणान्तरपदस्य सन्निवेशे क्रियमाणेऽपि गुणस्य लक्षणमतिव्याप्तमेव। यतो ह्यवयविद्रव्य समवायसम्बन्धेनाऽवयवे निविशमानं दृश्यते। यथा—पट तन्तुषु निविशते, घट कपालयोश्च। एवमसमवायिकारणसयोगस्य समवायिकारणस्य च नाशान्नश्यति पटः घटश्चेति व्यवहार। एतेन निवर्त्तते पटो घटो वेति गम्यते। एतच्च द्रव्य गवाश्वादिविभिन्नजातीयेष्वपि दृश्यत एव। किञ्चोत्पाद्याऽनुत्पाद्ये द्रव्ये अपि स्त एव। तत्रोत्पाद्य कार्यद्रव्यम्, अनुत्पाद्य परमाणुद्रव्यम्। तथा च द्रव्यस्यापि गुणत्व प्रसज्यते। अत एव गुणस्य पुनरपि निर्दुष्ट लक्षण न सम्भवतीति, अतिव्याप्तिदोषस्य सत्त्वात्। यथोक्तम्—**एवन्तु द्रव्यस्याऽपि गुणत्वं प्राप्नोति। अवयविद्रव्यमवयवद्रव्येषु निविशते असमवायिकारणसंयोगनिवृत्तौ च विनाशात्ततोऽपैति, भिन्नजातीयेषु हस्तपादादिषु दृश्यते। द्विविधञ्च तन्नित्याऽनित्यभेदेन। निरवयवस्य द्रव्यस्याऽऽत्मपरमाण्वादेर्नित्यत्वादवयविद्रव्यस्याऽनित्यत्वादिति** (प्र० ४।१।४४) इति।

एवञ्चैतस्या अपि अतिव्याप्तेर्वारणाय पुनरपि विशेषणान्तरसन्निवेश आवश्यक इति। अत एवोक्तम्—**सोऽसत्त्वप्रकृतिर्गुण** इति। अत्राऽसत्त्वप्रकृति.

=अद्रव्यस्वभाव.। तेन द्रव्यभिन्नो गुणो भवतीति गम्यते। तथा चैतस्य गुण-लक्षणस्य सग्राहक पद्यमुद्ध्रियते—

> **सत्त्वे निविशतेऽपैति पृथग् जातिषु दृश्यते।**
> **आधेयश्चाऽक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुण· ॥**

अपि च—

> **उपैत्यन्यज्जहात्यन्यद्दृष्टो द्रव्यान्तरेष्वपि।**
> **वाचकः सर्वलिङ्गानां द्रव्यादन्यो गुण. स्मृतः ॥**
> (म० भा० ४।१।४४ श्लो० वा०) इति।

किञ्च गुणो द्रव्यगत यल्लिङ्गम्, तद्गृह्णाति। परन्तु यद्द्रव्य भवति, तद्द्रव्यान्तरस्य लिङ्ग नादत्ते। एतेन सर्वलिङ्गाना वाचको य शुक्लादि-शब्द स च शुक्लादिर्यल्लिङ्गक द्रव्य भवति, तस्य लिङ्ग वचनञ्च गृह्णाति। अत एव शुक्ल वस्त्रम्, शुक्ला शाटी, शुक्लो गौरिति व्यवहार प्रवर्त्तते। यथोक्तम्—**वाचकः सर्वलिङ्गानां द्रव्यादन्यो गुणः स्मृत** इति। इदमेव भाष्यकारस्य वचनेनाऽपि विशदीभवति। तथाहि तस्य वचनम्—**यदसौ द्रव्य श्रितो भवति गुणः, तस्य यल्लिङ्ग वचनञ्च तद्गुणस्याऽपि भवति** (म० भा० ५।२।९४) इति।

**व्याकरणसम्मत गुणलक्षणम्—**

एतेन वैशेषिकस्य सम्मता ये गुणा वर्त्तन्ते तेषामेव सग्रहण भवति। परन्तु शब्दशास्त्रे सोऽपि गुणो य परतन्त्रतया गृहीतो भवति। यथा धनमानये-त्यत्राऽऽनयनक्रियाया धनस्य पारतन्त्र्यम्, तेन धनमपि गुण। न च धनमुक्त-लक्षणेन ग्रहीतु शक्यते। अत परतन्त्रतया यत्किमपि, तत्सर्वमपि परतन्त्रल-क्षणलक्षितो गुणो भवतीति गम्यते। अत एवोक्त कैयटेन—**धनादीनां साका-ङ्क्षत्वाद्भेदकत्वात्क्रियायां पारतन्त्र्याच्च गुणत्वम्। यथा—शुक्लमित्युक्ते किं तदिति नित्यं द्रव्यमाकाङ्क्षति शुक्लञ्च वस्त्रमिति द्रव्यस्य भेदकम् शुक्लमानयेत्युक्ते क्रियायां द्रव्यपरतन्त्रम्, द्रव्याऽऽनयनमन्तरेण गुणाऽऽनयनाऽसम्भवादिति शौक्ल्यं गुणः। धनमानयेत्युक्ते गवादिद्रव्याऽऽनयनात् क्रियायां पारतन्त्र्य धनं गुणः**(प्र० ५।१।५९) इति।

अपि च **किं पुनर्द्रव्यं के गुणाः? शब्दस्पर्शरूपरसगन्धा गुणा., ततोऽन्यद् द्रव्यम्** (म० भा० ५।१।११९) इति।

**एतद्भाष्यस्य कैयटव्याख्यानेनाऽपि पराश्रयस्य गुणत्वमुक्तं भवति।**

यथोक्तम्—**एतच्चोपलक्षणम्, पराऽऽश्रस्य सर्वस्य भेदकस्य जात्यादेरिह गुणत्वेऽभिमतत्वात्** (प्र० ५।१।११९) इति।

किञ्च यो हि गुणो भवति, स भेदक । अत एवैकमेवोदकद्रव्य, गुणभेदेन तस्याऽन्यत्वव्यवहारो भवति। यथोक्तम्—**एवं हि दृश्यते लोके, एकोऽयमात्मा —उदक नाम, तस्य गुणभेदादन्यत्व भवति—अन्यदिद शीतम्, अन्यदिदमुष्णम्** (म० भा० १।१।१) इनि।

यद्यप्यभेदका अपि गुणा दृश्यन्ते। यथैकोऽपि चैत्रो बाल्याद्यवस्थाया भेदेऽपि न तस्य भेदो गृह्यते, स एव वार्द्धक्याद्यवस्थायामपि। अत्र चैत्रो बाल्यादेरवस्थाया भेदेऽपि चैत्रेत्याख्या न जहाति। परन्तु स एव चैत्र, यो बाल्ये दृष्ट इति बोध । किञ्च **मुण्डी, जटी, शिखीत्यादिगुणभेदेनाऽपि चैत्रस्य भेदो** न भवति। किन्तु मुण्डी यश्चैत्र, स एव **शिखी जट्यपि** भवति। तथा च गुणाना भेदेऽपि न द्रव्यस्य भेदो भवति। अत एवोक्त पतञ्जलिना—**ननु च अभेदका अपि गुणा दृश्यन्ते। तद्यथा—देवदत्तो मुण्ड्यपि जट्यपि शिख्यपि स्वाख्या न जहाति, तथा बालो युवा वृद्धो वत्सो दम्या बलीवर्द इति** (म०भा० १।१।१) इति।

एतेन गुणस्याऽभेदकत्वम्, न तु भेदकत्वम्। तथाऽपि यो हि गुण आश्रीयमाणो भवति, स गुणो भेदको भवत्येव। यथा शुक्लमिद वस्तु, रक्तो घट, दण्डी पुरुष इत्यत्र गुणभेदेन द्रव्यस्य भेदव्यवहारो जायत एव। यथोक्तम्—

**आश्रीयमाणो गुणो भेदको भवति। तद्यथा—शुक्लमालभेत, कृष्णमालभेत- अत्र यः शुक्ल आलब्धव्ये कृष्णमालभते, न हि तेन यथोक्त कृत भवतीति**[1]।
इदमेव मत हरिणाऽपि स्पष्टीक्रियते—

> **ससर्गिभेदकं यद्यत् सव्यापार प्रतीयते।**
> **गुणत्वं परतन्त्रत्वात्तस्य शास्त्र उदाहृतम्** ॥ वा०प० ३।५।१ इति।
>
> **द्रव्यस्याऽव्यपदेश्यस्य य उपादीयते गुण ।**
> **भेदकव्यपदेशाय तत्प्रकर्षोऽभिधीयते** ॥ वा० प० ३।५।२ इति।

एतेन शब्दशास्त्रे परतन्त्रतया, भेदकतया च यस्य बोधो भवति स गुणो भवतीति निश्चीयते। यतो हि परतन्त्रत्व भेदकत्वञ्च मुख्य गुणलक्षणमस्ति शाब्दिकानाम्। यथोक्तम्—**भेदकत्वञ्चाऽत्र मुख्य गुणलक्षणम्** (हेला० ३।५।२) इति।

---

१. द्र०—म० भा० १।१।१ ॥

**गुणशब्देन गृहीतानां समुल्लेख —**

अत्र गुणशब्देन स गृह्यते, य केवलगुणवाची भवति। यस्तु गुणवाची सन् गुणिन बोधयति स तेन न गृहीतो भवति। अत एव पूरणगुणेत्यादिसूत्रभाष्ये द्रव्याद् गुणस्य भेदोपपत्तये षष्ठ्या विभक्त्या भेदो दर्शित पतञ्जलिना। यथा—**गुणस्य किमुदाहरणम् ! ब्राह्मणस्य शुक्ला॰, वृषलस्य कृष्णा॰, इति, नैतदस्ति प्रयोजनम्। इदं तर्हि—काकस्य कार्ष्ण्यम्, कण्टकस्य तैक्ष्ण्यम्, बलाकायाः शौक्ल्यम्। इदञ्चाऽप्युदाहरणम्—ब्राह्मणस्य शुक्लाः, वृषलस्य कृष्णाः** (म० भा० २।१।११) इति।

कैयटनागेशावपि भाष्योक्तेषूदाहरणेषु **शौक्ल्यादिभाव**प्रत्ययान्तस्य गुणत्वमनुमन्येते। तथाहि तयो वचनम्—**शौक्ल्यशब्देन शुक्लोऽभिधीयते, शुक्लशब्दस्य द्रव्ये वर्त्तमानस्य तस्मिन्नेव प्रवृत्तिनिमित्ते भावप्रत्ययविधानात्** (प्र० २।२।८) इति।

**केवलगुणवाची सन् यो गुणिबोधकस्तत्प्रकृतिकभावप्रत्ययान्तप्रतिपाद्यानां गुणपदेन ग्रहणम्** (उद्० २।२।११) इति।

एवञ्च गुणशब्देन केवलगुणवाचिनो रूपादय, शौक्ल्यादय, षष्ठ्या निर्दिष्टेन **ब्राह्मणस्य शुक्ला** इत्यत्र **शुक्लादिशब्दाश्च** गृह्यन्ते। यथोक्तम्—**इह केचिद्गुणाः शब्देन द्रव्यान्निष्कृष्टा एव प्रत्याय्यन्ते न तु द्रव्यस्योपरञ्जकत्वेन। यथा—चन्दनस्य गन्ध इति सर्वदा वैयधिकरण्यमेव गुणगुणिनोः, न कदाचिच्चन्दनं गन्ध इति सामानाधिकरण्य भवति** (प्र० २।२।८) इति।

किञ्च विशेष्यपदस्याऽभावात् शुक्लादिशब्दा अपि गुणमात्रवचना दृश्यन्ते। अत एव शुक्लादीना शब्दत्वमाशङ्क्य तेषा गुणत्वमुक्त पतञ्जलिना। तथाहि तस्य वचनम्—**यर्त्तहि तच्छुक्लो नील॰ कपिलः कपोत इति स शब्द ? नेत्याह गुणो नाम सः** (म०भा० पस्पशा०) इति।

**गुणशब्दस्य बह्वर्थसाधनम्—**

गुणशब्दो हि बहुष्वर्थेषु दृश्यते। यथा—द्विगुणा रज्जु, त्रिगुणा रज्जु इति। अत्र गुण॰=समानाऽवयव। गुणवानय देश इत्यत्र गुण=द्रव्यरूप। गुणभूता वयमत्र—अप्रधानरूपोऽर्थोऽत्र ग्राह्य[१]। गुणवानय ब्राह्मण—आचाररूपोऽर्थ। सस्कृतमन्न गुणवद् भवति—सस्काररूपोऽर्थः। यथोक्तम् **गुणशब्दोऽयं बह्वर्थः। अस्त्येव समेष्ववयवेषु वर्तते। तद्यथा द्विगुणा रज्जुस्त्रिगुणा रज्जुरिति अस्ति द्रव्यपदार्थः। तद्यथा—गुणवानय देश इत्युच्यते, यस्मिन् गावः शस्यानि च**

---

१—द्र० कञ्च प्रत्यवयवो गुण ? समुदायम्।
म० भा० पा० सू० ५।२।४२

**वर्त्तन्ते । अस्त्यप्रधाने वर्त्तते । तद्यथा—योऽत्राऽप्रधानं भवति स आह—गुणभूता वयमत्र । अस्त्याचारे वर्त्तते । तद्यथा—गुणवानयं ब्राह्मण इत्युच्यते यः सम्यगाचार करोति । अस्तिसंस्कारे वर्त्तते । तद्यथा—संस्कृतमन्न गुणवदि-त्युच्यते** (म० भा० ५।१।११०) इति ।

**पारिभाषिकगुणस्य कथनम्—**

किञ्च गुणशब्दोऽयं पारिभाषिकोऽपि शब्दशास्त्रेऽस्ति । यथोक्त पाणिनिना अदेङ् गुण' (पा० सू० १।१।२) इति । अत्र गुण —अ, ए, ओ रूप. ।

**गुणवचनेन गृहीताना समुल्लेखः—**

**गुणवचनमिति** महासञ्ज्ञाकरणात्तस्याऽन्वर्थत्व विज्ञायते । तच्चाऽन्वर्थ-त्वम्—गुणोपसर्जनद्रव्यग्राह्यत्वमेव । यथोक्तम्—**गुणवचनेत्यन्वर्थसंज्ञया गुणोप-सर्जनगुणिवाचकानामेव तादृशानां सा संज्ञेति, न रूपादीनाम्** (लघुश० शेखर.-४।१।४४) इति ।

एवञ्चाऽनया सञ्ज्ञयेद प्रतीयते यद् ये पूर्व गुणमुक्त्वा पश्चाद् द्रव्यमभिद-धति, त एव शुक्लादिशब्दा , पटु-मृदु-कटुकतीक्ष्णप्रभृतयश्च[1] गुणवचना भवन्ति, न तु ये नित्यगुणवाचिनो रूपरसगन्धादय, शौक्ल्यम्, कार्ष्ण्यम्, तैक्ष्ण्यम्, कात्स्न्यमित्यादिभावप्रत्ययान्तनित्यगुणवाचिनश्च । अत एव **आकडारादेका संज्ञा** (पा० सू० १।४।१) इति सूत्रभाष्येऽर्थवच्छब्दाना प्रातिपदिकगुणवचने सञ्ज्ञे भवत इत्युक्तम् । अत्र **प्रातिपदिकेत्यस्य राजपुरुषेत्यादिसमाससञ्ज्ञास्वनुवर्त्तनात्तेषा** प्रातिपदिकेति सञ्ज्ञा भवति । परन्तु **गुणवचनेत्येषा** सञ्ज्ञा समासादिभि सञ्ज्ञाभि-र्बाध्यते । अत. समासादिभ्यो ये बहिर्भूता शब्दा वर्त्तन्ते, त एव गुणवचनेन गृह्यन्त इति । यथोक्तम्—**गुणवचनशब्देन जातिसञ्ज्ञाऽव्ययकृदन्ततद्धितान्त-समस्तसर्वनामसङ्ख्याशब्दातिरिक्तः शब्दो गृह्यते** (उद्० १।४।१) इति ।

अपि च—**एकविषयत्वाच्चकारकरणाच्च गुणवचनप्रातिपदिकसंज्ञयोः समावेशो भवति । उत्तरासु च सञ्ज्ञासु प्रातिपदिकमित्यनुवर्त्तनात्ताभिः प्रातिपदिकसंज्ञा समाविशति[2] । गुणवचनसञ्ज्ञा तु ताभिर्बाध्यते[3] । तस्याश्च व्यञ्ज्विधि प्रयोजनम्** (प्र० १।४।१) इति ।

एवञ्च गुणवचनस्य समासकृत्तद्धितादीनि प्रत्युदाहरणानि, एतेभ्यो भिन्नानि

---

१ कटुकादिभिश्च शब्दैर्गुणवद्द्रव्यमभिधीयते । का० वृत्ति ६।२।२४, सुबो० व्या० अपि च ।

२ अर्थवत्प्रातिपदिकम्, गुणवचनञ्चेति । म० भा० १।४।१,

३ समासकृत्तद्धिताऽव्ययसर्वनामाऽसर्वलिङ्गा जाति, सङ्ख्या, डु च = षट्-सञ्ज्ञा, एकद्रव्योपनिवेशिनी सञ्ज्ञेति । म० भा० १।४।१,

यानि पटुमृदुप्रभृतीनि, तान्युदाहरणानि। अत एव चित्रगुकारकौपगवादिषु समास-कृत्तद्धितान्तादिषु न गुणवचनप्रयुक्तकार्याणि भवन्ति, तेषा गुणवचनत्वाऽभावात्। पटुमृदुशुक्लादिषु गुणवचनप्रयुक्तकार्याणि भवन्ति, तेनैतेषा गुणवचनत्वमस्त्येवेति विज्ञायते।

गुणवचनस्य सूत्रपुरस्सरमुदाहरणाना प्रदर्शनम्—

| गुणवचनघटितसूत्रम् | गुणवचनेन गृहीतः शब्दः | गुणवचनप्रयुक्तकार्यनिर्देश. |
|---|---|---|
| वोतो गुणवचनात् पा० सू० ४।१।४४ | पटुमृदुप्रभृतय | पटु+ङीष् =पट्वी मृदु+ङीष् =मृद्वी |
| गुणवचनब्राह्मणादिभ्य कर्मणि च पा० सू० ५।१।२४ | शुक्लकृष्णतीक्ष्ण-प्रभृतय | शुक्ल+ष्यञ् =शौक्ल्यम् कृष्ण+ष्यञ् =कार्ष्ण्यम् इत्यादि |
| प्रकारे गुणवचनस्य पा० सू० ८।१।१२ | शुक्लप्रभृतय. | शुक्ल+द्वित्वविधिस्तेन शुक्लशुक्लरूपम्[1] शुक्लशुक्ल पट[2]। |
| विस्पष्टादीनि गुणवच-नेषु पा० सू० ६।२।२४ | कटुकप्रभृतय | गुणवचनशब्दपरत स्वरविधि। तेन विस्पष्ट-कटुकम्। एवमन्यान्युदाहर-णान्यप्यूह्यानि |
| अजादी गुणवचना-देव पा० सू० ५।३।५८ | पटुलघुप्रभृतय | गुणवचनशब्दादेवेष्ठन्नीय-सुनौ प्रत्ययौ भवत। तेन पटु+इष्ठन् =पटिष्ठ, लघु+इष्ठन् =लघिष्ठ पटु+ईयसुन् =पटीयान् लघु+ईयसुन् =लघीयान् नेह पाचकतर, पाचकतम इति। |
| तृतीया तत्कृतार्थेन गुणवचनेन पा० सू० २।१।३० | खण्ड, अर्थप्रभृतय | समासविधिस्तेन शङ्कुला+टा+खण्ड+सु =शङ्कुला-खण्ड, धान्य=टा+अर्थ+सु=धान्यार्थ। |

एवञ्च पटुमृदुप्रभृतयो न कस्मिश्चिद् द्रव्ये निविशन्ते, न च ततो निव-

१. प्रकारे गुणवचनस्येति सूत्रे गुणवचनेन गुणोपसर्जनद्रव्यवाचिन, केवल-गुणवाचिनश्च गृह्यन्ते। तेनेदमुदाहरण केवलगुणवाचिनो रूपम्।

२. इदमुदाहरण गुणोपसर्जनद्रव्यवाचिन।

सि० कौ० पा० सू० ८।१।१२

र्त्तन्ते यथा शुक्लादय आम्रादिद्रव्ये रूपरसगन्धस्पर्शा निविशमाना निवर्त्त-
मानाश्च लक्ष्यन्ते तथा पट्वादीना **सत्त्वे निविशतेऽपैतीति** लक्षणेन सग्रहण
न भवति । अत एव शब्दशास्त्रे तस्यैकदेशयुक्तित्वेनैव ग्रहण भवति । शाब्दि-
काना नये पारतन्त्र्यलक्षणो वा गुण इत्येव सिद्धान्तभूत लक्षणमस्तीति ।
तेनैताभ्या लक्षणाभ्या शुक्लादय , पटुमृदुप्रभृतयश्च सगृह्यन्त एवेति । यथोक्त
नागेशेन—**सत्त्वे इति गुणलक्षणन्त्वेकदेशयुक्तिर्बहुविशेषणानां वैयर्थ्यात्, भाष्य-
कृताऽव्याख्यानाच्च । तस्मादा कडारसूत्रोक्तमेव भाष्यसम्मतमस्तीति विज्ञायते**
(लघुशब्देन्दुशेखर पा० सू० ४।१।४४) इति ।

॥ इति गुण ॥

# चतुर्थः परिच्छेदः

## गुणविशेष.

### (१) रूपम्

**रूपस्य लक्षणम्—**

अत्राऽऽदौ वैशेषिकस्य मत प्रदर्श्यते । तथाहि—रूप चक्षुषा गृह्यते, नह्यन्येन केनचिदिन्द्रियेणैतस्य ग्रहण भवति । अत एव चाक्षुष रूपमिति कथ्यते । यथोक्तमन्नम्भट्टेन—**चक्षुर्मात्रग्राह्यो गुणो रूपम्** (तर्कसग्रह ) इति ।

तच्च रूप चाक्षुषप्रत्यक्ष प्रत्यसाधारण कारण भवति, रूपमन्तरा कस्यचिद्द्रव्यस्य चाक्षुषप्रत्यक्षस्याऽसत्त्वात् । अत एव वाय्वाकाशादीना द्रव्याणा चाक्षुषप्रत्यक्ष न भवति, एतेषा नीरूपत्वात् । पृथिव्यप्तेजसान्तु द्रव्याणा चाक्षुषप्रत्यक्ष भवति, एतेषा रूपवत्त्वात् ।

**रूपस्य व्याप्यवृत्तित्वम्—**

रूप कस्मिँश्चिद्द्रव्ये व्याप्यवृत्तितयैव तिष्ठति, व्याप्यवृत्तितयैव तस्याऽनुभूयमानत्वात् । नहि रूप कस्यचिद् द्रव्यस्यैकदेशे प्रतीयते, अपरत्र नेति । किन्तु सर्वाऽवयवत्वेनैव तस्य ग्रहण भवति । अत्र व्याप्यवृत्तिता=सर्वाऽवयवाऽनुस्यूतता । अत एव यस्य द्रव्यस्य यद्रूपम्, तत् तस्य सर्वाऽवयवेष्वेवाऽवलोक्यते । अत एव शुक्लोऽयं गौ, शुक्ल· पट, नीलमिद वस्त्रमित्यादयो व्यवहारा प्रवर्त्तन्ते । रूपस्य व्याप्यवृत्तित्वादेव यस्मिन्नधिकरणे रूप व्याप्यवृत्तितया नोपलभ्यते प्रत्युताऽव्याप्यवृत्तितया समुपलभ्यते तस्मिन्नधिकरणे शुक्लादिभ्योऽतिरिक्तमेकञ्चित्र रूप भवति, अव्याप्यवृत्तित्वेन शुक्लादे सत्त्वात् ।

**रूपस्य भेदाः—**

रूप सप्तविधम्, शुक्लनीलपीतरक्तहरितकपिशचित्रभेदात् । एते च रूपभेदा पृथिव्या समुपलभ्यन्ते[1] । अप्स्वभास्वरमेव शुक्ल रूपम्, तेजसि

---

१ शुक्लनीलादिभेदेन नानाजातीय रूप पृथिव्यामेव वर्त्तते । न्या० सि० मु० भा० परि० ३५ इति ।

भास्वरशुक्लमेव रूपमस्ति[1]। यथोक्तम्—**रूपं चक्षुर्ग्राह्यं पृथिव्युदकज्वलन-वृत्तिद्रव्याद्युपलम्भकं नयनसहकारि शुक्लाद्यनेकप्रकारम्** (प्र० पा० भा० पृ० २५१-२५२) इति। इदमेव मत विश्वनाथोऽपि विशदीकरोति।

**चक्षुर्ग्राह्य भवेद्रूप द्रव्यादेरुपलम्भकम्।**
**चक्षुष. सहकारि स्याच्छुक्लादिकमनेकधा॥** भा० परि० १०० इति।

यश्च कालिन्द्या पयसो नीलिमा प्रतीयते, स पृथिव्या एव तदुपाधि-वशादपा नीलिमा प्रतीयते[2]। यतो हि वियति प्रक्षिप्ते सति कालिन्द्या जलस्य धवलिम्न एव प्रतीति, न तु नीलिम्न॰।

महाभारते शान्तिपर्वणि चतुरशीत्युत्तरशततमेऽध्याये (=१८४) रूपस्य षोडशधा विभागो दर्शित.। तथा हि—

**ह्रस्वो दीर्घस्तथा स्थूलश्चतुरस्रोऽणुवृत्तवान्।**
**शुक्लः कृष्णस्तथा रक्तः पीतो नीलारुणस्तथा॥३३॥**
**कठिनश्चिक्कणःश्लक्ष्णः पिच्छिलो मृदुदारुणः।**
**एव षोडशविस्तारो ज्योतीरूपगुणः स्मृतः॥३४॥**

**रूपस्य नित्यत्वाऽनित्यत्वे—**

जलीयतैजसपरमाणु नित्यम्। यतो ह्येतयो परमाणूना विलक्षणतेजस॰ सन्निकर्षादपि रूपस्य परिवर्त्तन न भवतीति। यदि जलीयतैजसपरमाणूना रूपस्य परिवर्त्तन स्यात्तर्हि कार्ययोर्जलतेजसो रूपस्य विभिन्नता प्रतीयेत, यथा पार्थिवपरमाणूना रूपादे परिवर्त्तन भवति। अत एव बदराऽऽमलकादीना कदाचिद्धरितम्, कदाचित्पीत रक्तञ्च रूप दृश्यते। न च तथा जले तेजसि वा परिलक्ष्यते। अतो जलतेजसोर्ये परमाणवस्तेषा रूपस्य नित्यत्वम्, पार्थिव-परमाणूना रूपस्याऽनित्यत्वञ्च सिध्यति। यथोक्त कणादेन—**कारणगुण-पूर्वकाः पृथिव्यां पाकजाः** (वै० सू० ७।१।६) इति।

इदमेवैतद्व्याख्यानात्स्पष्टीभवति—**पीलवः=परमाणव एव स्वतन्त्राः पच्यन्ते, तत्रैव पूर्वरूपनाशादग्रिमरूपाद्युत्पत्तिः, कारणगुणप्रक्रमेण चाऽवयवि निरूपाद्युत्पद्यत इति पीलुवादिनः** (उप० ७।१।६) इति।

इदमेवाह प्रशस्तपाद.—**सलिलादिपरमाणुषु नित्यम्, पार्थिवपरमाणु-ष्वग्निसंयोगविरोधि सर्वकार्यद्रव्येषु कारणगुणपूर्वकमाश्रयविनाशादेव विनश्य-तीति** (प्र० पा० भा० पृ० २५१-२५२) इति।

---

१. उष्ण. स्पर्शस्तेजसस्तु स्याद्रूप शुक्लभास्वरम्। भा०परि० ४१ क इति।

२. कालिन्दीजले नीलत्वप्रतीतिस्त्वाश्रयौपाधिकी। अत एव वियति विक्षेपे धवलिमोपलब्धि। न्या० सि० मु० भा० परि० ३९ इति।

**रूपवत परमाणोरप्रत्यक्षत्वे हेतुः—**

चाक्षुषप्रत्यक्ष प्रति रूपमसाधारण कारण भवतीति प्रागुक्तम्, परमाणौ रूपस्य सत्त्वेऽपि तस्य प्रत्यक्ष न भवति, सति कारणे कार्यस्योत्पन्नत्वात्। सत्यम्, रूपस्य सत्त्वेऽपि परमाणोर्महत्परिमाणवत्त्वाऽभावादनेकद्रव्यवत्त्वाऽभावाच्च न प्रत्यक्षम्। अत एव त्रसरेण्वादे प्रत्यक्ष भवति, न परमाणो.। यथोक्त कणादेन—**महत्यनेकद्रव्यवत्त्वाद् रूपाच्चोपलब्धिः** (वै० सू० ४।१।६) इति। इदमेवाऽऽह व्याख्याकारोऽपि—**परमाणोर्महत्त्वाऽभावादनुपलब्धिः** (उप० ४।१।६) इति।

एवञ्च यस्य द्रव्यस्याऽनेकाऽवयवाऽऽरब्ध॰ समूहो दृश्यते, तस्योद्भूतत्वाऽनभिभूतत्वे रूपे उपलभ्येताञ्चेत्तर्हि तस्य द्रव्यस्याऽवश्यमेव चक्षुर्विषयताऽस्तीति सिध्यति। यथा—इह भूतलेऽय घट, पुरत स्थितोऽय गौ। यथोक्त कणादेन—**अनेकद्रव्यसमवायाद्रूपविशेषाच्च रूपोपलब्धिः** (वै० सू० ४।१।८) इति। इदमेवैतद्व्याख्यानादपि—**रूपगतो विशेषो रूपविशेषः, यच्चोद्भूतत्वमनभिभूतत्व रूपत्वञ्च, तस्माद्रूपस्योपलब्धिः, अनेकपद भूयस्त्वपरम्, तेनाऽनेकानि भूयासि द्रव्याणि, आश्रयतया यस्य तदनेकद्रव्यं त्रसरेणुप्रभृति तत्समुदायाद् घटादयोऽप्यवयवद्वयाऽऽरब्धाः परस्परयोरनेकद्रव्याऽऽश्रया एव** (उप० ४।१।८) इति।

**चित्ररूपस्य साधनम्—**

नीलाद्यवयवाऽऽरब्धो नीलाद्यवयवी, न तावन्नीरूप, सत्यालोके चक्षुर्भ्या तस्य ग्रहणात्। नाऽपि नीलाद्यवयवैरारब्धो नीलाद्यवयवी अव्याप्यवृत्तितया प्रतीयते, व्याप्यवृत्तित्वेनैवैतेषा प्रतीयमानत्वात्। नीलादीनामव्याप्यवृत्तित्व स्वीक्रियते चेत्तर्हि पीताद्यवच्छेदे नीलादेरुत्पत्ति, नीलाद्यवच्छेदे पीतादेरुत्पत्तिश्च स्यात्। न च नीलाद्यवच्छेदे पीतोत्पत्ति, न वा पीताद्यवच्छेदे नीलोत्पत्तिर्दृश्यते क्वचित्। तथा च यतो रूपस्य व्याप्यवृत्तितयोपलब्धिर्भवति, अतो रूपस्य व्याप्यवृत्तित्वमेवेत्यवगम्यते।

एवञ्च व्याप्यवृत्तिनीलाद्यवयवैरारब्धस्याऽवयविन. कथमव्याप्यवृत्तितया शुक्लाद्यन्यतम रूप कल्पयितु शक्यते। तस्मान्नानाजातीयनीलाद्यवयवैरारब्धेऽवयविनि विजातीयमेवैकञ्चित्र रूपमुत्पद्यत इत्येव कल्पन युक्त प्रतिभाति यथोक्तम्—

**नीलपीताद्यवयवाऽऽरब्धोऽवयवी, न तावन्नीरूप॰, अप्रत्यक्षत्वप्रसङ्गात्। नाऽपि व्याप्यवृत्ति नीलादिकमुत्पद्यते, पीतावच्छेदेनापि नीलोपलब्धिप्रसङ्गात्। नाऽप्यव्याप्यवृत्ति नीलादिकमुत्पद्यते, व्याप्यवृत्तिजातीयगुणानामव्याप्यवृत्तित्वे**

**विरोधात् । तस्मान्नानाजातीयरूपैरवयविनि विजातीयं चित्रं रूपमारभ्यते । अत एव 'एकं चित्रमि' त्यनुभवोऽपि । नानारूपकल्पने गौरवात् । इत्थञ्च नीलादीनां पीताद्यारम्भे प्रतिबन्धकत्वकल्पनादवयविनि न पीताद्युत्पत्ति** (न्या० सि० मु० भा० परि० १००) इति । इदमेव मत विशदीभवति शङ्करमिश्रस्य वचनेनाऽपि । तथा हि तस्य वचनम्—**क्वचित्पटाऽऽदौ च चित्ररूपमपि रूपमधिकम्, अन्यथा तदचाक्षुषत्वापातात्द्रूपवत एव चाक्षुषद्रव्यत्वात् । न च विजातीयरूपं रूपाऽऽरम्भो भवति, प्रत्युत नीलपीतादीनामारम्भे रूपत्वेनैव साजात्यस्याऽपेक्षितत्वात्, अन्यथा तदचाक्षुषत्वाऽऽपत्तेरुक्तत्वात् । न चाऽवयवरूपोपग्रहेणैवाऽवयविग्रहः अवयवानामपि चित्रतया नीरूपत्वप्रसङ्गात्, यत्र वा पाकात्परमाणुषु चित्रं रूप तत्रैव तत्परम्पराऽऽरब्धपटाऽऽदौ चित्ररूपोपपत्ते.** (उप० ७।१।६) इति ।

नव्यास्तु—यस्मिन्नवयविनि नीलपीतादिनानारूप प्रतीयते, तस्मिन्नवयविन्यव्याप्यवृत्तितया नानाविध नीलादिरूपमेवाऽस्तीति । नहि तत्र नीलादिभ्योऽतिरिक्त किञ्चिद्रूपमिति । न च नीलादीना परस्पर विरोध , येनैकत्र शुक्लादीना स्थितिर्न स्यात् । तथा च शुक्लनीलाऽऽदय एवाऽव्याप्यवृत्तितया वर्त्तन्ते, नत्वेतेभ्यो बहिर्भूत किञ्चिद्रूपान्तरम् । किञ्च नीलादेरपूर्वरूपकल्पने गौरवदोषस्य दुर्वारत्व प्राप्स्यतीति । अत एव नव्याना मतमुद्धृत विश्वनाथेन—**नव्यास्तु तत्राऽव्याप्यवृत्त्येव नानारूपम्, नीलादेः पीतादिप्रतिबन्धकत्वकल्पने गौरवात्** (न्या० सि० मु० भा० परि० १००) इति ।

अत्रैवाऽस्य श्लोकोऽप्युदाह्रियते—

**लोहितो यस्तु वर्णेन मुखे पुच्छे च पाण्डुरः ।**
**श्वेत खुरविषाणाभ्यां स नीलो वृष उच्यते ।। इति ।।**

(उद्० न्या० सि० मु० भा० परि० १००)

अस्याऽयमर्थ —

एतादृग्वृषोऽस्ति यस्य सर्वेष्वङ्गेषु लोहितो वर्णोऽस्ति, मुखे पुच्छे च पाण्डुर (=पीतमिश्रितश्वेत ) रूपम्, यस्य च खुरयोर्विषाणयोश्च श्वेतो भवति, स नीलो वृष इति कथ्यते । अत्रैकस्मिन्नेवाऽधिकरणे लोहितादीना रूपाणा सत्त्वेऽपि नील एव, न तु नीलाऽऽदिभ्योऽतिरिक्त किंचिद्रूपमस्ति येन चित्ररूपस्य कल्पना स्यात् । एतेनैकस्मिन्नवयविनि द्रव्येऽव्याप्यवृत्तितया नीलादिकमेवाऽनेकविध रूपमस्ति, न तु एतेभ्योऽतिरिक्त किञ्चिच्चित्र रूपमिति गम्यते । अत एव लोहितपाण्डुरादिरूपाणामव्याप्यवृत्तितया सत्त्वेऽस्य नीलो वृष इति, न तु चित्रोऽस्य वृष इति प्रतीतिसाक्षिको व्यवहार ।

**शुक्लाऽऽदिगुणा गुणवाचिनो द्रव्यवाचिनश्च—**

शुक्लो नीलादिशब्द कदाचिद्गुणवाची भवति, कदाचिद्द्रव्यवाचीति। यथा—पटस्याऽय शुक्ल, गोरय नील इत्यादौ शुक्लनीलौ गुणवाचिनौ स्त। यतो हि गुणगुणिनोर्भेदस्योपपत्तये षष्ठी विभक्तिर्दृश्यते। एतेन षष्ठ्यन्त-पदस्य विशेषणस्य समभिहारे सति विशेष्यभूतो यो हि प्रथमान्तशुक्लादिशब्द, स गुणमात्रस्य बोधको भवतीति गम्यते।

शुक्लो घट, नीलो गौरित्यादौ तु शुक्लादिशब्द प्रथमान्तविशेष्यपदस्य सन्निधानाद् गुणिवाची भवति। अत्र **शुक्लो घट** इत्यत्र मतुपो[1] लोपाच्छुक्लाऽ-भिन्नो घट इति, नीलाऽभिन्नो गौरिति च बोध। यथोक्तम्—**ननु नीलपीताऽऽ-दयो गुणा द्रव्याऽभिन्ना एव धर्मधर्मिणोरभेदादिति चेन्न, रूपं घट, स्पर्शो घट इत्यादिव्यवहारप्रसङ्गात्। ननु नेदमनिष्टम्, यतो भवत्येव शुक्लः पट, नीलः पट इत्यादिप्रतीतिरिति चेन्न, मतुब्लोपादभेदोपचाराद्वा प्रतीत्युपपत्ते** (उप० ७।१।६) इति।

एतेन रूपस्य नित्यगुणवचनत्वम्, शुक्लादिशब्दाना गुणवचनत्वम्, गुणि-वचनत्वञ्च सिध्यति।

**रूपस्य लक्षणम्—**

अथ व्याकरणदृशा रूप विचार्य्यते। इमे रूपपदघटिते सूत्रे। तथा हि—

१—**ज्योतिर्जनपद—रूप—** पा० सू० ६।३।८५

२—**स्वं रूपं शब्दस्याऽशब्दसञ्ज्ञा** पा० सू० १।१।६८

रूपविषये वैयाकरणाना किमपि विलक्षण मत नास्ति, किन्तु वैशेषि-कैर्यदभिहितम्, तदेवाऽनूद्यते नत्वपूर्व मतमुपस्थापयन्ति शाब्दिका। यतो हि शुक्लादिशब्दाना गुणवचनत्वम्, गुणिवचनत्वञ्च वैशेषिकवच्छाब्दिकोऽपि मन्यत एव। यथोक्त दीक्षितेन—**शुक्लो गुणोऽस्यास्तीति शुक्ल. पटः, कृष्ण पटः** (सि० कौ० पा० सू० १।१।१९) इति। अत्र **गुणवचनेभ्यो मतुपो लुगिष्ट** (पा० सू० १।४।१९ का० वा०) इति शास्त्रेण मतुपो लुग् भवति। अत एव शुक्ल पटः= शुक्लगुणविशिष्टवान् पटः=शुक्लाऽभिन्न पट इति बोध। इदमेवाऽऽह तत्त्व-बोधिनीकार—**गुणे तद्वति च प्रसिद्धा ये शुक्लादयस्त एव गृह्यन्ते। न तु रूपाऽऽदयोऽपि। तेन रूपं वस्त्रमित्यादिप्रयोगो न भवति, प्रत्युत वस्त्रस्य रूप-मित्येव** (तत्त्व० बो० पा० सू० १।४।१९ का० वा०) इति।

पटस्य शुक्ल इत्यादौ तु शुक्लादेर्गुणवचनत्वमेवेति विज्ञायते।

---

१. द्र० गुणवचनेभ्यो मतुपो लुगिष्ट का० वार्त्तिकम्।

यथोक्तम्—

**अस्वतन्त्रे स्वतन्त्रत्व परधर्मो यथा गुणे ।**

**अभेद्ये भेद्यभावोऽपि द्रव्यधर्मस्तथा गुणे ॥** वा० प० ३।११।५ ॥ इति

इदमेवैतद्व्याख्यानादपि—**इह शुक्ल पट इत्यादिर्द्रव्योपसर्जनभावापन्नो गुणोऽभिधीयते, तदाऽसौ द्रव्यसामानाधिकरण्यात्तद्धर्मेण समन्वय सहृत एव । द्रव्यान्निष्कृष्य तु पटस्य शुक्ल इत्याद्यभिधाने स्वातन्त्र्यमात्मीय द्रव्यरूपमसंभवीति स्वाश्रयाऽऽयातं तद् व्यवस्थापनीयम्** (हेला० ३।११।५) इति ।

रूपन्तु सर्वदा गुणवचनमेव भवति । अतो घटस्येद रूपमित्येव, न तु रूप घट इति । यथोक्तम्—

**संस्तु रूपरसादीनामाश्रयो नाऽभिधीयते ।**

**द्रव्याऽभिधानेन विना ततस्ते द्वन्द्वभाविनः ॥** (वा० प० ३।१४।२३) इति

व्याख्यातं च हेलाराजेन—**रूपरसादिशब्दा स्वभावत एव द्रव्यान्निष्कृष्ट रूप स्वार्थमाचक्षते । निराश्रयस्य तु गुणस्याऽभावात् सामर्थ्याऽऽक्षिप्तमत्र द्रव्यम्** (हेला० ३।१४।२३) इति ।

एतेन वैशेषिकैर्यदुक्तम्, तदेव शाब्दिकैरप्यभ्युपगम्यते ।

**चित्र रूपम्**—

चित्ररूपस्य सम्बन्धेऽपि वैशेषिकैर्यदुक्तम्, तदेवाऽनुमन्यते वैयाकरणैरपि । यथोक्त हरिणा—

**चित्रस्यैकस्वरूपस्य यथा भेदनिदर्शनैः ।**

**नीलादिभिः समाख्यानं क्रियते भिन्नलक्षणैः ॥** वा० प० २।८ इति ॥

एवमेवाऽऽह पुण्यराज —**चित्रमिदं हि रूपमवयविगतमनंशमेकमेव, तस्यैवाऽवयवगतैर्यथा नीलादिभिर्भेदेन निदर्शन येषां तैः पृथग्रूपैरेव समाख्यानम्** (पु० रा० २।८) इति ।

इदमेवाऽऽह हेलाराजोऽपि—**न तर्हि भवति बहुतयं चित्ररूपमिति । भवति, चित्ररूपस्याऽवयविन एकत्वान्नीलाद्यवयवयोगापत्ते. । एकञ्चित्रञ्चेति चित्रतरमिति चेदभेदसंविदा वेदितत्वात् पदार्थाः प्रत्याख्यातुमशक्या एवाऽवयविसामान्यादय इत्यद्वयसिद्धावस्माभिर्विचारितम् । पटस्येदमेकं चित्रं रूपम्** (हेला० ३।११।२६) इति ।

एतेनाऽपि वैशेषिकसम्मतस्यैव चित्ररूपस्य समर्थन भवतीति निश्चीयते । अतो रूपस्य विषये वैशेषिकस्य य सिद्धान्त, स एव शाब्दिकस्याप्यस्तीत्यवधार्यते ।

॥ इति रूपम् ॥

## (२) रसः

**रसस्य लक्षणम्—**

आदौ वैशेषिकस्य मतमुपन्यस्यते । तथा हि—रसस्य ग्रहण रसनेन्द्रियेणैव भवति । अत एव **रासनो रस** इति कथ्यते । यथोक्तमन्नम्भट्टेन—**रसनग्राह्यो गुणो रसः (तर्कसग्रह·)** इति[1] ।

**रसस्य भेदा :—**

रस षडविध, मधुर-लवण-कटु-कषायाऽऽम्लतिक्तभेदात्[2] । एते च रसाः पृथिव्या जले च व्यवतिष्ठन्ते । तत्र पृथिव्या षड्विधा रसा., जले त्वेक एव रसो मधुरो नाम ।

**रसस्य नित्यत्वाऽनित्यत्वे—**

यथा जलीयतैजसपरमाणुवृत्तिरूप नित्यम्, पार्थिवपरमाणुवृत्त्यनित्यम्, तथा रसोऽपि जलीयपरमाणुवृत्तिर्नित्य, पार्थिवपरमाणुवृत्तिरनित्यो, विलक्षण-तेजस्सन्निकर्षमहिम्ना रसस्य परिवर्त्तनात् । यथा बदराऽऽमलकादीना कदाचिद्धरित रूपम्, कदाचिद्रक्तमित्यादि, तथा कदाचित्कट्ठ रस कदाचिन्मधुर इति । तथा चैनेषा विलक्षणतेजससन्निकर्षेण पूर्वरसस्य विनाशादपूर्वरसस्य प्रादुर्भावाच्च रसस्याऽनित्यत्व सिध्यति । यथोक्त प्रशस्तपादाऽऽचार्य्येण—

**अस्यापि नित्यत्वाऽनित्यत्वनिष्पत्तयो रूपवत्** (प्र० पा० भा० पृ० २५४) इति । इदमेव मत समर्थित विश्वनाथेनाऽपि—

**रसस्तु रसनाग्राह्यो मधुराऽऽदिरनेकधा ।**
**सहकारी रसज्ञायानित्यतादि च पूर्ववत्** ।। भा० परि० १०१ इति ।।

अत्रैवैतद्व्याख्यानमपि—**जलपरमाणौ रसो नित्योऽन्यः सर्वोऽपि रसोऽनित्यः** (न्या० सि० मु० भा० परि० १०१) इति ।

**रसस्य लक्षणम्—**

अथ व्याकरणदृशा रसो विचार्य्यते । इमे रसपदघटित-रससम्बन्धिसूत्रे । तथा हि—

१—**रसादिभ्यश्च** पा० सू० ५।२।९५
२—**लवणाल्लुक्** पा० सू० ४।४।२४

---

१. अपि च द्र० प्र० पा० भा० पृ० २५४, भा० परि० १०१ ।
२. मधुरो लवणस्तिक्त· कषायोऽम्ल कटुस्तथा ।
एष षड्विधविस्तारो रसो वारिमय स्मृत· ।।
म० भा० शा० प० अ० १८४ श्लो० ३१

रसस्य यादृश लक्षणम्, तस्य भेदा, नित्यत्वाऽनित्यत्वे च वैशेषिकै स्वीक्रियेते, रसस्य तादृश लक्षणम्, त एव च भेदा, नित्यत्वाऽनित्यत्वे च वैयाकरणैरप्यनुमन्येते एव, अप्रतिषिद्धमन्वाऽनुमत भवतीति न्यायात् ।

**रसस्य गुणवचनत्वम्—**

रसशब्द सर्वदा गुणवचन एव, न तु कदापि शुक्लादिवद् द्रव्यवचनो भवति। अत एव **रसादिभ्यश्च** (पा० सू० ५।२।९२) इति सूत्रे कौमुदीकृता दीक्षितेन **रूपवानिव रसवानित्युक्तम्। तस्य द्रव्यवचनत्वे शुक्लः पट इव रसवान् इक्षुरित्यत्र गुणवचनेभ्यो मतुपो लुगिष्टः** (पा० सू० १।४।१९ का० वा०) इत्यनेन लुक् प्रसज्येत । परन्तु नैव भवति । अतो रसो नित्यगुणवाच्येवेति विज्ञायते । यथोक्त हरिणा—

> **व्यतिरेके च सत्येवं मतुपः श्रवणं भवेत् ।**
> **लुगन्वाख्यायते तस्माद्रसादिभ्यश्च नास्ति स. ॥**
> **यत्सोऽयमिति सम्बन्धाद्रूपाऽभेदेन वर्त्तते ।**
> **शुक्लादिवत्ततो लोपस्तद्रसाऽऽदौ न विद्यते ॥**
>
> वा० प० ३।१४।१५०-१५१ इति ॥

अत्रैवैतद्व्याख्यानमपि—**रसादिशब्दाना तद्वति वर्त्तन नाऽस्ति, सदैव हि ते मत्वर्थीयान्ता एव स्वाश्रयमाचक्षते, रसवान्, गन्धवान्** (हेला० ३।४।-१५०१५१) इति[1] ।

**रसवाची लवणशब्दः—**

लवणोऽपि षड्विधरसेष्वन्यतमो रस. । स च लवणो न रसादिवत् सदा गुणवचन, प्रत्युत शुक्लादिवद् द्रव्यवचनोऽपि । यथोक्त नागेशेन **रूपादिवद्रसशब्दस्य गुणिसमानाधिकरणत्वाऽभावेऽपि शुक्लादिवल्लवणशब्दस्य तत्त्वम्** (उद्० ४।४।२४) इति ।

॥ इति रस ॥

---

१ लवणाल्लुग्वचनमनर्थकम् । कि कारणम् ? रसवाचित्वादिति म० भा० ४।४।२४ इति । रसस्य गुणत्वाद् गुणिवाचिना शुक्लादीना गुणगुणिनोरभेदोपचाराद् गुणवृत्तिदर्शनान्नार्थो लुकेत्यर्थ । प्र० ४।४।२४,

एतेनाऽपि रसस्य नित्यगुणवचनत्वमेव ।

## (३) गन्धः

**गन्धस्य लक्षणम्—**

अत्राऽऽदौ वैशेषिकस्य मतमुपन्यस्यते। तथा हि—गन्धो घ्राणेन्द्रियेण गृह्यते। नह्यन्येनेन्द्रियेणाऽस्य ग्रहण भवति। अत एव **घ्राणग्राह्यो गन्ध** इति कथ्यते। यथोक्तमन्नम्भट्टेन—**घ्राणग्राह्यो गुणो गन्धः** (तर्कसग्रहः) इति।

**गन्धस्य भेदा—**

गन्धो द्विविध, सुरभ्यसुरभिभेदात्। स च गन्ध पृथिव्यामेव समवाय-सबन्धेन वर्त्तते। जलाऽऽदौ तु पृथिवीसम्बन्धेनैव, अतो जलस्य गन्धो गुणो नास्तीति विज्ञायते।

महाभारते शान्तिपर्वणि चतुरशीत्युत्तरशततमेऽध्याये (=१८४) गन्धस्य नवविधो भेदो दर्शित । तथा हि—

> **इष्टश्चाऽनिष्टगन्धश्च मधुरः कटुरेव च।**
> **निर्हारी सहतः स्निग्धो रूक्षो विशद एव च॥** २८
> **एव नवविधो ज्ञेयः पार्थिवो गन्धविस्तरः।** २९ क

**गन्धस्याऽनित्यत्वम्—**

गन्धस्याऽनित्यत्वमेव, पृथिवीवृत्तिरूप-रस-गन्धादीना पाकजत्वेन परिवर्त्तनत्वात्। यथोक्त कणादेन—**कारणगुणपूर्वका पृथिव्यां पाकजाः** (वै० सू० ७।१।६) इति। इदमेवाऽऽह एतद् व्याख्याकार—**पाकजा इति रूपरसगन्धस्पर्शा** (उप० ७।१।६) इति। इदमेव विशदीकरोति प्रशस्तपाद—**गन्धो घ्राणग्राह्यः पृथिवीवृत्तिर्घ्राणसहकारी सुरभिरसुरभिश्च। अस्याऽपि पूर्ववदुत्पत्त्यादयो व्याख्याताः** (प्र०पा० भा० पृ० २५५) इति।

इदमेवाऽऽह विश्वनाथ—

> **घ्राणग्राह्यो भवेद् गन्धो घ्राणस्यैवोपकारकः।**
> **सौरभश्चाऽसौरभश्च स द्वेधा परिकीर्त्तितः॥** (भा०परि० १०२) इति।

**गन्धस्य लक्षणम्—**

अथ व्याकरणदृशा गन्धो विचार्य्यते। इद गन्धपदघटित सूत्रम्। तथाहि—

१—**गन्धस्येदुत्पूतिसुसुरभिभ्यः** पा० सू० ५।४।१३५

गन्धस्य यादृश लक्षण वैशेषिकै स्वीक्रियते, तादृशमेव शाब्दिकैरप्यनुमन्यते।

किञ्च गन्धस्य भेदा, तस्याऽनित्यत्वञ्च वैशेषिकैराम्नातम्, ते भेदा, अनित्यत्वञ्च गन्धस्य शाब्दिकैरप्यभ्युपगम्यत एव, अप्रतिषिद्धञ्चाऽनुमत भवतीति न्यायात् ।

**गन्धशब्दस्य क्वचिद्द्रव्यवचनत्वमपि—**

यद्यपि **पृथिव्यां गन्ध** इत्येव न तु पृथिवी गन्ध, गन्धस्य नित्यगुणवचनत्वात् तथापि **गन्धस्येदुत्पूतिसुसुरभिभ्यः** पा० सू० ५।४।१३५ इति सूत्रस्थवार्त्तिकेन द्रव्यवचनत्वमप्यवगम्यते, द्रव्य एवाऽवयवाऽवयविनोर्व्यवहारस्य दर्शनात् । नहि द्रव्यमन्तरा ततोऽन्यत्र कुत्रचित्तादृशो व्यवहारो भवितु शक्नोति । अत एव वार्त्तिककृता—**गन्धस्येत्वे तदेकान्तग्रहण कर्त्तव्यमित्युक्तम्** । अत्रैकान्त = अवयव ।

वस्तुतस्तु गुणसमुदायस्य द्रव्यत्वाद् गन्धस्य द्रव्यवचनत्वमस्त्येव । अत एव तत्त्वबोधिनीकृता—**अस्ति च गन्धशब्दो द्रव्यवचनः, वहति जलमिय पिनष्टि गन्धानित्युक्तम्**[1] ।

॥ इति गन्ध ॥

---

१. द्र०—पा० सू० ५।४।१३५ ॥

## (४) स्पर्शः

**स्पर्शस्य लक्षणम्—**

आदौ वैशेषिकस्य मतमुपन्यस्यते । तथा हि—स्पर्शं त्वगिन्द्रियेण गृह्यते । न ह्यन्येन केनचिदिन्द्रियेणाऽस्य ग्रहण भवति । प्रत्युत त्वचैव । अत एव **त्वाचः** **स्पर्श** इति कथ्यते । यथोक्तमन्नम्भट्टेन (तर्कसग्रहे)—**त्वगिन्द्रियमात्रग्राह्यो गुणः स्पर्शः** इति ।

**स्पर्शस्य भेदाः—**

स च स्पर्श त्रिविध, शीतोष्णाऽनुष्णाऽशीतभेदात् । अत्र शीतस्पर्शो जलस्य, उष्णस्पर्शस्तेजस अनुष्णाऽशीतस्पर्शश्च पृथिवीवाय्वो । अत एवैते स्पर्शा पृथिव्युदकतेजोवायुष्वेव व्यवतिष्ठन्ते । अत पृथिव्यप्तेजोवायूनामेव स्पार्शनप्रत्यक्ष भवति न त्वाकाशादीनाम्, तेषु स्पर्शस्याऽभावात् ।

महाभारते शान्तिपर्वणि चतुरशीत्युत्तरशततमेऽध्याये (=१८४) स्पर्शो हि द्वादशधा विभक्त इति समुपलभ्यते । तथाहि—

> **उष्णः शीतः सुखो दुःखः स्निग्धो विशद एव च ।**
> **तथा खरो मृदु रूक्षो लघुर्गुरुतरोऽपि च ॥** ३६ ॥
> **एवं द्वादशधा स्पर्शो वायव्यो गुण उच्यते ।** ३७

**स्पर्शस्य नित्यत्वाऽनित्यत्वे—**

पृथिवीपरमाणुवृत्ति स्पर्शोऽनित्य, पाकजत्वात्[1] । अत एव आम्रादे कदाचित्कठिनस्पर्श, कदाचिन्मृदुस्पर्शश्चाऽनुभूयते । अप्तेजोवायुवृत्ति स्पर्शो नित्य एव । यतो हि नह्येतेषा पाकेन कठिनमृदुस्पर्शश्चाऽनुभूयते ।

एवञ्च यथा पार्थिवपरमाणुषु रूपमनित्यम्, तथा पृथिवीपरमाणुषु वर्त्तिनो रसगन्धस्पर्शा अपि अनित्या **एव** । पृथिवीपरमाणुभ्यो भिन्नेषु जलीयपरमाणुषु वर्त्तिनौ रूपरसौ, तैजसपरमाणुषु वर्त्तिनौ रूपस्पर्शौ, वायवीयपरमाणुषु वर्त्ती स्पर्शश्च नित्य एवेति विज्ञायते । अत एवोक्त कणादेन—**तेन रसगन्धस्पर्शेषु ज्ञानं व्याख्यातम्** (वै०सू० ४।१।९) इति ।

अत्र तेन=रूपप्रत्यक्षज्ञानेन । इदमेव मत स्पष्टीभवति प्रशस्तपादाचार्यस्य वचनेनाऽपि । तथा हि तस्य वचनम्—**स्पर्शस्त्वगिन्द्रियग्राह्यः क्षित्युदकज्वलनपवनवृत्तिस्त्वक्सहकारी रूपानुविधायी शीतोष्णाऽनुष्णाऽशीतभेदात् त्रिविधः । अस्याऽपि नित्यत्वाऽनित्यत्वनिष्पत्तयः पूर्ववत्** (प्र० पा० भा० पृ० २५६) इति ।

---

[1] कारणगुणपूर्वका. पृथिव्या पाकजा । वै० सू० ७।१।६ ॥

इदमेव मत विशदीकरोति विश्वनाथोऽपि—

**स्पर्शस्त्वगिन्द्रियग्राह्यस्त्वचः स्यादुपकारकः ॥**
**अनुष्णाऽशीतशीतोष्णभेदात्स त्रिविधो मतः ।**
**काठिन्यादिक्षितावेव नित्यतादि च पूर्ववत् ॥**

(भा० परि० १०३ख, १०४) इति ।

**स्पर्शस्य समर्थनम्—**

अथ व्याकरणदृशा स्पर्शो विचार्य्यते । इद स्पर्शपदघटित सूत्रम् । तथा हि—

**१—द्रवमूर्त्तिस्पर्शयोः श्यः** पा० सू० ६।१।२४।

स्पर्शस्य यादृश लक्षणम्, यादृशाश्च भेदा, नित्यत्वानित्यत्वे च वैशेषिकै स्वीक्रियेते, तादृशमेव लक्षणम्, तादृशा एव भेदा, नित्यत्वाऽनित्यत्वे च शाब्दिकैरप्यभ्युपगम्येते एव, अप्रतिपिद्धञ्चाऽनुमत भवतीति न्यायात् ।

वैशेषिकैस्स्पर्शस्य गुणवचनत्वमेवाऽभ्युपगम्यते, शाब्दिकैरपि तदेवाऽनुमन्यते । परन्तु क्वचिच्छीतो वायुरिति प्रयोगमहिम्ना गुणोपसर्जनद्रव्यवचनत्वमपि । यथोक्तम्—**रूपादिसहचरितो गुण स्पर्शश्शीतो वायुरिति कथ पुनः स्पर्शमात्राऽभिधायिनः शीतशब्दस्य तद्वद्द्रव्यवाचिना वायुशब्देन सामानाऽधिकरण्यमिति । तत्राऽऽह गुणमात्रमित्यादि—शुक्लाऽऽदिशब्दवदिति भावः** (पदमञ्जरी पा० सू० ६।१।२४) इति ।

॥ इति स्पर्श ॥

## (५) संख्या

**संख्याया निर्धारणम्**—

अत्राऽऽदौ वैशेषिकस्य मतमुपन्यस्यते। तथा ह्येको घट =एकत्वविशिष्टो घट इति बोध। अत्रैकत्वस्य या प्रतीति, सा किञ्चित्कारणजन्या। नह्येतस्या प्रतीते रूपाऽऽदि कारणम्, गगनाऽऽदौ रूपाऽऽदीनामभावेऽपि **एकमाकाशम्, एकः कालः, एका दिगि**त्यादिप्रतीतेरनुभूयमानत्वात्। न चैको घट इत्यत्रैकत्वप्रतीते-र्घटत्वादि कारणम्। तथा सत्येको **घट** इत्यत्र **घटत्वम्**, एकः **पट** इत्यत्र **पटत्व** विनिगमनाविरहेण प्रतीयेत, न च तथा प्रतीयते। अतो घटत्वादिकमपि नैता-दृशबुद्धे कारणम्। न चैकत्व सत्तावत्सामान्यमिति स्वीकर्त्तु शक्यते, एकत्वस्य सत्तया सहाऽन्यूनाऽनतिरिक्तवृत्तित्वेनैतयो तुल्यत्वात्। तुल्यत्व हि जातेर्बाधक भवति। यथा घटत्वकलशत्वयो तुल्यत्वात्कलशत्व न जाति।[1] एकत्व हि द्रव्य-मात्रवृत्तिसामान्यमित्यपि वक्तु न शक्यते, द्रव्यत्वेनाऽन्यूनाऽनतिरिक्तदेशवृत्तितयो-क्तदोषस्य सत्त्वात्। न चैकत्वद्रव्यत्वयोरन्यूनाऽनतिरिक्तदेशवृत्तित्वेऽप्येतयो प्रतीतिभेदाद् भेद स्यादिति वक्तु शक्यते। यतो हि प्रतीतिभेदस्य स्वरूपकृतत्व-मिति स्वीकारे एकत्वद्रव्यत्वे इवैकत्वसत्तयोरपि स्वरूपभेदस्य सत्त्वात् सत्ताया अपि भेदत्व स्यात्। विषयभेदस्वीकारे तु एकत्वसत्तयो तुल्यत्वान्न सामान्यम्। अन्यथा घटत्वकलशत्वे अप्यतिरिक्तसामान्ये स्याताम्। यथोक्त कणादेन—**रूपरसगन्धस्पर्शव्यतिरेकादर्थान्तरमेकत्वम्** (वै० सू० ७।२।१) इति। विशदी-भवत्येतदुपस्कारव्याख्यानाद्—**एको घट इति विशिष्टप्रतीतिर्विशेषणजन्या, तच्च विशेषण न रूपादि, तद्व्यतिरेकेण जायमानत्वात्, न च घटत्वादिकमेव निमित्तम्, पटेऽपि जायमानत्वात्, न चैकत्वं सत्तावत्सामान्यम्, सत्तया सहाऽन्यूनाऽनतिरिक्तवृत्तित्वात्, न च द्रव्यमात्रसामान्य तत्, द्रव्यत्वेनाऽन्यूनाऽनतिरिक्तदेशत्वात् न चाऽन्यूनाऽतिरिक्तदेशत्वेऽपि प्रतीतिभेदाद्भेदः, प्रतीति-भेदस्य स्वरूपकृतत्वे सत्ताऽपि भिद्येत, विषयभेदकृतत्वे तु विषयभेदानुपपत्तेरुक्त-त्वादन्यथा घटत्वकलशत्वयोरपि भेदापत्तेः** (उप० ७।२।१) इति।

किञ्चैकत्वं **सत्तावत्सामान्यमि**ति स्वीकारे **एक सामान्यम्, एको विशेषः, एकः समवाय** इत्यादौ तादृशैकत्वस्याऽभावा**देकं सामान्यमि**त्यादिव्यवहारो न प्रवर्त्तेत। प्रवर्त्तते च तादृशो व्यवहार। अतः सत्तावत्सामान्य नैकत्वम्। तथा

---

१. द्र० व्यक्तेरभेदस्तुल्यत्व सङ्करोऽथाऽनवस्थिति।
रूपहानिरसम्बन्धो जातिबाधकसङ्ग्रह॥
उद्० न्या० सि० मु० भा० परि० ८

च यत **एको घटः, एकं सामान्यमिति** प्रतीतिसाक्षिको व्यवहार, अत तादृशो व्यवहारस्य प्रयोजक कश्चिदस्तीति गम्यते। स च प्रयोजको बुद्धिविशेषविषयत्व-रूपा सख्यैवेति निश्चीयते। यथोक्तम्—**न चैकं सामान्यमेको विशेषः, एकः समवायः एकोऽभाव इत्यादिप्रतीते का गतिरिति वाच्यम्? तत्राऽनायत्या धीविशेषविषयत्वरूपस्यैकत्वस्य भानाऽङ्गीकारादिति** (विवृ० ७।२।१) इति।

**सख्याया लक्षणम्—**

गणनाव्यवहारस्य यदसाधारण कारणम्, तत्सख्येति कथ्यते। गणना-व्यवहारश्चाऽयमेक, अयमेक इतीमौ द्वौ, अयमेक, इमौ द्वौ चेतीमे त्रय, अयमेक, इमे त्रयश्चेतीमे चत्वार इत्यादिरूप। अथवाऽयमेक, अयमेक इतीमौ द्वौ, अयमेक, अयमेक, अयमेक इतीमे त्रय इत्यादिरूपश्च। यथोक्त—प्रशस्तपादा-चार्य्येण—**एकाऽऽदिव्यवहारहेतुः सख्या** (प्र० पा० भा० पृ० २६७) इति। इदमेवाऽऽह विश्वनाथोऽपि—

**गणनाव्यवहारे तु हेतु सख्याऽभिधीयते** (भा० परि० १०६)

**सख्याया भेदः—**

सख्या द्विधा, एकद्रव्याऽनेकद्रव्येतिभेदात्। अत्रैकद्रव्याया सख्याया सलि-लाऽऽदिपरमाणुवृत्तिरूपाऽऽदीनामिव नित्यत्वम्, कार्यद्रव्याणा सलिलाऽऽदीना ये रूपाऽऽदयो गुणा, ते यथाऽनित्या भवन्ति, तथा कार्यसलिलाऽऽदिवृत्तिसख्याऽप्य-नित्यैवेति। अनेकद्रव्या=अनेकद्रव्येषु वर्त्तमाना या सख्या सा द्वित्वादिभ्य आरभ्य परार्द्धान्ता अपेक्षाबुद्धिजन्यत्वादनित्यैव। यतो ह्यपेक्षाबुद्धेर्नाशात्सख्याया अपि नाशो भवति। यथोक्त प्रशस्तपादाऽऽचार्येण—**सा पुनरेकद्रव्या चाऽनेकद्रव्या च। तत्रैकद्रव्यायाः सलिलाऽऽदिपरमाणुरूपाऽऽदीनामिव नित्यत्वाऽनित्यत्वनिष्पत्तय। अनेकद्रव्या तु द्वित्वादिका परार्द्धान्ता** (प्र० पा० भा० पृ० २७०) इति। द्वित्वादीना सख्यात्व कणादोऽपि प्राऽचिकीर्तत्—**द्वित्वप्रभृतयः सख्या** (वै० सू० १।१।२५) इति। इदमेवाऽऽह शङ्करमिश्र—**द्वित्वाऽऽदिकाः परार्द्धान्ताः संख्या** (उप० १।१२५) इति। इदमेव मत विशदीकृत विश्वनाथेनाऽपि—

**नित्येषु नित्यमेकत्वमनित्येऽनित्यमिष्यते।**
**द्वित्वादयः परार्द्धान्ता अपेक्षाबुद्धिजा मताः॥**
**अनेकाऽऽश्रयपर्याप्ता एते तु परिकीर्त्तिताः।**
**अपेक्षाबुद्धिनाशाच्च नाशस्तेषां निरूपित.॥**

भा० परि० १०७-१०८ इति।

**अथ व्याकरणदृशा संख्याया लक्षणम्—**

अथ व्याकरणदृशा सख्या विचार्य्यते। अत्रेमानि संख्यापदघटितानि सूत्राणि तथा हि—

१—आर्हादिगोपुच्छसख्यापरिमाणाट् ठक् पा० सू० ५।१।१६
२— बहुगणवतुडति सख्या पा० सू० १।१।२२
३—सख्या वश्येन पा० सू० २।१।१६
४—सख्ययाऽव्ययाऽऽसन्नादूराधिकसख्या सख्येये पा० सू० २।२।२५

यस्मिन् द्रव्ये या सख्या तिष्ठति, सा सख्या तस्माद् द्रव्यादपार्थक्येनैव प्रतीयते। यथा—एको घट इति। अत्रैकत्वसख्या घटात्पार्थक्येन न लक्ष्यते, अपित्वपार्थक्येनैव। अतएव यत्रैको घट., तत्र न द्वौ घटौ, न वा त्रयो घटा इति, किन्त्वेको घट इत्येव। एवमेव यत्र द्वौ घटौ, तत्र द्वौ घटावित्येव, न तु तत्रैको घट, त्रयो वा घटा इति। यतो हि सख्या नियतविषयस्य परिच्छेदिका भवति। एतच्च पाणिनिना **द्व्येकयोर्द्विवचनैकवचने** (पा० सू० १।४।२२) इति **बहुषु बहुवचनम्** (पा० सू० १।४।२१) इति च सूत्राभ्या समर्थितम्। यथोक्त नागेशेन—**नियतविषयपरिच्छेदहेतुर्हि सख्या** (उद्० १।१।२२) इति।

किञ्च यथा—शुक्लादिगुणा सामान्यद्रव्यस्य भेदका भवन्ति। अत एवैकमपि द्रव्य गुणभेदादन्यद् भवति। यथैकोऽपि गौ, शुक्लनीलाऽऽदिगुणसम्पर्काच्छुक्लोऽय गौ नीलोऽय गौरिति बोध, तथैकमपि वस्तु सख्याया भेदादन्यद् भवति। यथैकमिद वस्तु द्वे वस्तुनी, त्रीणि वस्तूनि। यथोक्त पतञ्जलिना—**भेदमात्रं सख्याऽऽह। यच्चेषीका·तम्, यच्चाऽपरिमाणं, तस्य सर्वस्य संख्या भेदमात्र ब्रवीति** (म० भा० ५।१।१६) इति।

भाष्येऽस्मिन्—इषीकान्तम्—इत्यपचितपरिमाणोपलक्षणम्। यथा—अणु परिमाणम्। यथोक्त कैयटेन—**हिमवदादि महापरिमाणमपि सख्यया गण्यते।**

**यथा—सप्त कुलाचला इति। अपचितपरिमाणमपि** (=**अपकृष्टपरिमाणवद्द्रव्यमपि**) **त्रयः परमाणव इति** (प्र० ५।१।१६) इति।

अपरिमाणम्=विभु द्रव्यम्। यथाऽऽकाशकालाऽऽदय। अत एवैकमाकाशम्, एक काल, एका दिक्, एकोऽयमात्मेत्यादि। यथोक्तम्—

**अमूर्त्तमपि—आत्मादि गण्यते** (प्र० ५।१।१६) इति। इदमेवाऽऽह नागेशोऽपि **यदल्पपरिमाणम्, यच्च महापरिमाणम्, यच्चाऽपरिमाणम्=रूपाऽऽदिक्रिया, एतत्सर्वं सख्यया गण्यते** (उद्० ५।१।१६) इति।

एवञ्च भेदकत्व सख्याया लक्षणमिति गम्यते। यथोक्त कैयटेन—**भेदः पदार्थाना वैलक्षण्यं तन्मात्रं सख्याशब्द· प्रतिपादयति मूर्त्ताऽमूर्त्तगणनात्मकत्वात्सख्यायाः। एको घट इत्यत्राऽपि द्व्यादिनिरासाद् भेदाऽवगतिरस्त्येव** (प्र० ५।१।१६) इति[1]।

१. अपि च द्र०=वा० प० ३।६।२ हेला०।

इदमेवाऽऽह भर्तृहरिरपि—

**सख्यावान् सत्त्वभूतोऽर्थः सर्व एवाऽभिधीयते ।**
**भेदाऽभेदविभागो हि लोके सख्यानिबन्धन ॥**
**स धर्मो व्यतिरेको वा तेषामात्मैव वा तथा ।**
**भेदहेतुत्वमाश्रित्य सख्येति व्यपदिश्यते ॥**
**समवेता परिच्छेद्ये क्वचिदन्यत्र साऽऽस्थिता ।**
**प्रकल्पयति भावाना सख्या भेद तथाऽऽत्मनः ॥**

(वा० प० ३।११।१-३) इति ।

अपि च—

**दिष्टिप्रस्थसुवर्णाऽऽदि मूर्त्तिभेदाय कल्पते ।**
**क्रियाभेदाय कालस्तु सख्या सर्वस्य भेदिका ।**

(वा० प० ३।६।२) इति ।

किञ्च यया द्रव्याणा सख्यान भवति, सा सख्येति कथ्यते । यथा—अयमेक, इमौ द्वौ, इमे त्रय इत्यादयो व्यवहारा । नह्येते व्यवहाराः सख्यामन्तरा उत्पत्तु प्रभवन्ति । अत एतेषा व्यवहाराणा यदसाधारण कारणम्, तदेव सख्येत्यवगम्यते । यथोक्त पतञ्जलिना—**संख्यायतेऽनया संख्या । एकादिकया चाऽपि संख्यायते** (म० भा० १।१।२२) इति । इदमेवाऽऽह हेलाराजोऽपि—**गणनमात्रलक्षणा सख्या सर्वत्राऽविशेषेण वर्ण्यते** (हेला० ३।११।३) इति ।

एतेन वैशेषिकसम्मतसख्यायाः परिपोषण भवतीति । यतो हि वैशेषिका अपि **एकादिव्यवहारहेतुः संख्या** इति कथयन्ति । एतेनोभयोर्मतयो कश्चिद् विरोधो नास्तीति गम्यते ।

॥ इति सख्या ॥

## (६) परिमाणम्

**परिमाणस्य सिद्धि.—**

आदौ वैशेषिकस्य मतमुपन्यस्यते। तथा हि—यथा—अय घट, अय पट इति व्यवहारो भवति, तथाऽय परमाणुरिति न। परमाणूना चाक्षुषे त्वस्याऽसत्त्वात्। तथा च कथ घटादेरेव तादृशो व्यवहारो भवति, न पुन परिमाणोरिति चिन्त्यते।

यथा—घटादीना द्रव्याणा प्रत्यक्ष प्रति रूपमसाधारण कारण भवति, तथा महापरिमाणमपि प्रत्यक्ष प्रत्यसाधारण कारणम्। तथा च यन्महत्परिमाणवद्-द्रव्यम्, तस्यैव द्रव्यस्य प्रत्यक्षम्, यन्महत्परिमाणवद्द्रव्य नास्ति, तस्य चाक्षुष-प्रत्यक्ष न भवति। अत एव परमाणोर्न प्रत्यक्षम्, सूक्ष्मपरिमाणवत्त्वात्, घटाऽऽ-दयस्तु महत्परिमाणवन्त, अत एतेषा प्रत्यक्ष भवति। एतेन घटादे चाक्षुषप्रत्यक्ष प्रति नीलादिरूपमिव महापरिमाणमपि कारणमस्तीति गम्यते। अत एवोक्त कणादेन—**अणोर्महतश्चोपलब्ध्यनुपलब्धी नित्ये व्याख्याते** (वै० सू० ७।१।८) व्याख्यातञ्च शङ्करमिश्रेण—**स्थूलो नीलः कलश इति प्रात्यक्षिकप्रत्यये यथा —नील रूप विषयस्तथा परिमाणमपि** (उप० ७।१।८) इति।

किञ्च अण्विद वस्तु, महदिद वस्तु, अय दीर्घ, अय ह्रस्व इत्येव व्यव-हारस्य यदसाधारण कारण तत्परिमाणमिति, नहि कारणमन्तरा एतादृशो व्यवहार प्रवर्त्तते। एतादृशो व्यवहारस्येद कारणमेव परिमाणमित्युच्यते, यथोक्तम्—**परिमाणं मानव्यवहारकारणम्** (प्र० पा० भा० पृ० ३१४) इति। इदमेवोक्तमन्नम्भट्टेनाऽपि—**मानव्यवहाराऽसाधारणं कारण परिमाणम्** (तर्क-सग्रहे) इति।

**परिमाणस्य भेद —**

एतच्च परिमाण चतुर्विधम्, अणु-महद्-दीर्घ-ह्रस्व-भेदात्। अत्र—अणु-परिमाण द्विविधम्, नित्याऽनित्यभेदात्। तत्र नित्य परमाणुवृत्ति, अनित्य द्वय-णुकवृत्ति परिमाणम्। महत्परिमाणमपि द्विविधम्, नित्याऽनित्यभेदात्। नित्य-माकाशकालदिगात्मवृत्ति, अनित्य त्र्यणुकादिवृत्ति। दीर्घत्वह्रस्वत्वे चोत्पाद्ये महदणुत्वैकार्थसमवेते। समिदिक्षुवशादिष्वञ्जसा दीर्घेष्वपि तत्प्रकर्षभावाऽ-भावमपेक्ष्य भाक्तो ह्रस्वव्यवहार इति[1]। इदमेव मत पल्लवित विश्व-नाथेनाऽपि—

---

१. द्र० प्र० पा० भा० पृ० ३१४-३२०।

**परिमाणं भवेन्मानव्यवहारस्य कारणम् ।**
**अणु दीर्घं महद्ध्रस्वमिति तद्भेद ईरितः ॥**

भा० परि० १०९ ख ११० क इति ।

**अथ व्याकरणदृशा परिमाणम्—**

अथ व्याकरणदृशा परिमाणं विचार्य्यते । इमानि परिमाणपदघटितानि सूत्राणि । तथाहि—

**१—आर्हादगो — परिमाणाट्ठक्** पा० सू० ५।१।१९,
**२—प्रातिपदिकार्थ — परिमाण—** पा० सू० २।३।४६,
**३—गो — परिमाणा —** पा० सू० ५।१।३९,
**४—तदस्य परिमाणम्** पा० सू० ५।१।५७,
**५—जातरूपेभ्यः परिमाणे** पा० सू० ४।३।१५३,

धान्यादिद्रव्याणामुच्छ्रायविस्तारौ सर्वतो येन प्रमीयेते तत्परिमाणम् । एतच्च काष्ठनिर्मितं द्रोणखार्य्याढक-प्रस्थादिकमित्युच्यते[1] । एतैर्द्रोणादिभिर्यद् धान्यादिकं द्रव्यं प्रमीयते, तत्परिमेयमिति कथ्यते । अत एव **प्रातिपदिकार्थ-लिङ्गपरिमाणवचनमात्रे प्रथमा** पा० सू० २।३।४६ इति सूत्रस्थपरिमाणस्य **द्रोणो व्रीहिः**रित्युदाहरणं सङ्गच्छते । यतो हि काष्ठनिर्मितद्रोणेन व्रीहेः सर्वत उच्छ्रायविस्तारौ प्रमीयेते । यथोक्तं कैयटेन—**आरोहपरिणाहाभ्यां स्वगताभ्यां धान्यादि येन मीयते काष्ठादिमयेन तत्परिमाणं प्रस्थादिकमुच्यते** (प्र० ५।१।१९) ।

एवञ्च द्रोणादिभिर्यस्य द्रव्यस्योच्छ्रायविस्तारयोर्मानं भवति तद्द्रोणादि-परिमाणमिति कथ्यते । मूर्त्ता एव द्रोणादिभिः प्रमीयन्ते[2] नत्वमूर्त्ताः, तेषां सर्वतो मानत्वाऽभावात् । मूर्त्तेष्वपि यस्य सर्वतो मानं सम्भवति, तस्यैव परि-माणेन ग्रहणं भवति, न तु सर्वेषाम्[3] । विभूनि द्रव्याणि तु परिमाणेन न गृह्यन्ते, तेषां सर्वतो मानत्वाभावात् । विभूनां द्रव्याणां परिमाणवत्त्वव्यवहा-रस्तु गौणो, न तु मुख्यः । यथोक्तम्—**नन्वात्मन्यपि परममहत्परिमाणसत्त्वात् कथमपरिमाणमिति भाष्ये उक्तिः, द्रव्यस्य परिमाणवत्त्वनियमादिति चेन्न ? नियमस्य मूर्त्तद्रव्यविषयत्वात्, सर्वपरिमाणाऽभाववत्त्वेनैव तत्र परममहदा-दिव्यवहारस्य गौणत्वात्** (उद्० ५।१।१९) इति ।

---

१ द्र०—पाणिनिकालीन भारतवर्ष पृ० २४४-२४५ ।

२ उन्मान-प्रमाण-परिमाणानि तु मूर्त्तद्रव्यविषयाण्येवेति ।
प्र० ५।१।१९ ॥

३ तदपि=मूर्त्तमपि न सर्वमूर्त्तद्रव्यविषयमित्यपि बोध्यम्
उद्० ५।१।१९ ॥

**परिमाणस्य यौगिकत्वयोगरूढत्वयोः साधनम्—**

परिमीयतेऽनेनेति व्युत्पत्त्या **माङ् माने शब्दे च** (३।६) इति धातोः **करणाऽधिकरणयोश्च** (पा० सू० ३।३।११७) इति सूत्रेण ल्युटि परिमाणमिति सिध्यति। परिमाणशब्दो द्रोणाऽऽढकप्रस्थखारीषु रूढः, योगरूढपङ्कजादिवत्। अत एव परिमाणेन द्रोणाऽऽदय एव सङ्गृह्यन्ते। यथोक्तं पतञ्जलिना—**इह केचिच्छब्दा अक्तपरिमाणानामर्थानां[1] वाचका भवन्ति—य एते संख्याशब्दाः परिमाणशब्दाश्च पञ्च, सप्तेति, एकेनाऽप्यपाये न भवन्ति। द्रोणः, खारी, आढकमिति, नैवाऽधिके भवन्ति, नैव न्यूने** (म० भा० १।१।७२) इति। अपि चोक्तम्—**परिमाणशब्दः क्रियाशब्दत्वेऽपि विशिष्टपरिच्छेदहेतौ द्रोणाऽऽदौ रूढो, न सङ्ख्यामभिधेयत्वेन गृह्णाति। यथा पङ्कजशब्दः पद्ममेवाऽभिदधाति, न तु कुमुदाऽऽदिकमपि** (प्र० ५।१।१९) इति।

**परिमाणस्य भेदाः—**

परिमाणं चतुर्विधम्, अणुमहद्दीर्घह्रस्वभेदात्। यथोक्तं नागेशेन—**परिमाणं चतुर्द्धा—अणुमहद्दीर्घह्रस्वञ्चेत्यादावण्वादयः शब्दा अण्वादिवृत्तौ लाक्षणिका बोध्याः** (उद्० ५।१।१९) इति।

**सूत्रोपात्तस्याऽण्वादेः परिमाणस्योपन्यासः—**

**विभाषा तिल—अणु** (पा० सू० ५।२।४) इति सूत्रे **अणु शब्दः** पठ्यते। स चाऽणुपरिमाणवतो द्रव्यस्य बोधकः। ततो यत्खञ्प्रत्ययाभ्याम् (अणु+यत्) अणव्यम्, (अणु+खञ्) आणवीनम् (=चीना) इति भाषाया कथ्यते। सूक्ष्मपरिमाणवत्त्वादणुत्वेनैतस्य व्यवहारः। अत एव **अण्वादयः शब्दा अण्वादिवृत्तौ लाक्षणिका बोध्या** इत्युक्तं नागेशेन—**नाऽव्ययमहत्**—(पा० सू० ६।२।१६८) इति सूत्रे यो महच्छब्दः तस्य महत्परिमाणवद्द्रव्यमर्थः। **प्रिय—दीर्घ—** (पा० सू० ६।४।१५७) इति सूत्रे यो दीर्घशब्दः, तस्य दैर्घ्यपरिमाणवद्द्रव्यमर्थः **स्थूल—ह्रस्व—**(पा० सू० ६।४।५६) इति सूत्रे यो हि ह्रस्वशब्दः तस्य ह्रस्वपरिमाणवद्द्रव्यमर्थः। एवमेव **यत्तदेतेभ्यः परिमाणे वतुप्** (पा० सू० ५।२।३९) इति सूत्रेण निष्पन्नाः (यत्+वतुप्) **यावत्**, (तद्+वतुप्) **तावत्**, (एतद्+वतुप्) **एतावदित्यादि** शब्दा अपि परिमाणवद्द्रव्यं बोधयन्ति।

**परिमाणशब्दस्य नित्यगुणिपरत्वम्—**

केचिद् गुणवाचिनश्शब्दा नित्यं गुणाऽभिधायिनः। यथा—रूपम्, रस,

---

१—द्र० अक्तम्=नियतम्।

गन्धः, स्पर्श इत्यादय । अत एव घटस्य रूपम्, इक्षो रस , पृथिव्या गन्ध , वायोः स्पर्श इत्यादौ वैयधिकरण्येनैव प्रयोग , न तु रूप घट , इक्षू रस , पृथिवी गन्ध , वायु स्पर्श इत्यादौ सामानाऽधिकरण्येन, रूपाऽऽदीना नित्यगुणवचनत्वात् । केचिद् गुणवाचिनश्शब्दा गुणवचना गुणिवचनाश्च। यथा—शुक्लाऽऽदय । अत एव घटस्य शुक्ल , शुक्लो घट इति च । भवति हि कश्चिद् गुणो नित्य गुणि-वचन । यथा—परिमाणम् । अत एव अणुपरिमाणवद्द्रव्यमित्येव, एव महत्परिमाणवद्द्रव्यमित्येव, नत्वस्येद परिमाणम्, परिमाणस्य पार्थक्येन प्रतीतेरसत्त्वात् । अभेदे भेद प्रकल्प्याऽस्येद परिमाणमिति त्वौपचारिको न तु वास्तवो व्यवहारः । यथोक्त कैयटेन —**अणुमहद्दीर्घाऽऽदयो नित्य परिमाणिनि वर्त्तन्ते, न तु परिमाणमात्रे तेनैतेभ्यः परिमाणे गुणे भावप्रत्ययः** (प्र० ५।१। ११६) इति ।

किञ्च परिमाण शक्तिविशेष एव, शक्तिश्च नित्य द्रव्यपरतन्त्रा भवति । नहि शक्ति स्वतन्त्रतया प्रतीयते, किन्तु द्रव्याऽनतिरिक्तैव । परिमाणस्य शक्ति-विशेषत्वादेव घटाऽण्वोर्भेदव्यवहार. । यथोक्त हरिहेलाराजाभ्याम्—

**निर्भागात्मकता तुल्या परमाणोर्घटस्य च ।**
**भाग शक्त्यन्तर तत्र परिमाणञ्च यत्तयो ।।**

(वा० प० ३।६।१५) इति ।

**महदणुत्वप्रत्ययहेतुर्हि शक्तिविशेषः परिमाणम् । अत एव—परिमाण-विशेषाद्घटाऽण्वोर्विशेषः** (हेला० ३।६।१५) इति ।

एतेनाऽपि परिमाणस्य नित्यद्रव्यवचनत्वम्, तस्य शक्तिविशेषत्वादिति गम्यते ।

।। इति परिमाणम् ।।

## (७) पृथक्त्वम्

**पृथक्त्वस्य सिद्धिः—**

आदौ वैशेषिकस्य मतमुपन्यस्यते । तथा हि—भवति व्यवहारोऽयमिदमस्मात्पृथगिति । नह्यय व्यवहार किमपि कारणमन्तरा भवति । तथा च यत तादृशो व्यवहारो भवति, अतस्तस्य व्यवहारस्य किमप्यसाधारण कारणमस्तीति गम्यते । तच्च कारण पृथक्त्वमित्यवधार्य्यते । इदमेवाऽयमस्मात्पृथगिति बुद्धि जनयति । यथोक्त कणादेन—**तथा पृथक्त्वम्** (वै० सू०७।२।२) इति । सूत्रेऽस्मिन् तथा–यथा—रूपरसगन्धस्पर्शादिभ्योऽन्यदेकत्वमस्ति, तथैतेभ्योऽन्यत्पृथक्त्वमपि । इदमेव ब्रूते व्याख्याकारोऽपि—**अपोद्धारव्यवहारस्तावदस्ति, इदमस्मात् पृथगन्यदर्थान्तरमित्याकार, अपवृज्याऽवधिमपेक्ष्य य उद्धारो निर्धारणं स ह्यपोद्धारः, तत्र च न रूपादितन्त्रम्, व्यभिचारादवधिनिरूप्यत्वाच्च** (उप० ७।२।२) इति[1] । इदमेव विश्वनाथोऽपि विशदीकुरुते—

**पृथक्प्रत्ययाऽसाधारणं कारणं पृथक्त्वम्** (भा० परि० ११३) इति ।

**पृथक्त्वस्याऽनेकद्रव्यवृत्तित्वाऽऽदेः साधनम्—**

पृथक्त्व द्विविधम्, एकद्रव्यवृत्त्यनेकद्रव्यवृत्तिभेदात् । अत्रैकद्रव्यवृत्त्येकपृथक्त्वम्, अनेकद्रव्यवृत्ति द्विपृथक्त्वाऽऽदि । परमाणुवृत्त्येकपृथक्त्व नित्यम्, द्वयणुकाऽऽदिवृत्ति द्विपृथक्त्वाऽऽद्यनित्यम् । यतो ह्याश्रयनाशात्तद्वृत्तिगुणा अपि नश्यन्तीति । नहि परमाणोर्नाशो भवति, येन परमाणुवृत्त्येकपृथक्त्वस्य नाश स्यात् । द्वयणुकाऽऽदेस्तु समवाय्यसमवायिकारणाऽन्यतरनाशाद् द्वयणुकाऽऽदेर्नाश । तेन तद्वृत्तिद्विपृथक्त्वाऽऽदेरपि । एतेन द्विपृथक्त्वाऽऽदेरनित्यत्वम् । यथोक्तम्—**तत्पुनरेकद्रव्यमनेकद्रव्यञ्च । तस्य तु नित्यत्वाऽनित्यत्वनिष्पत्तय. संख्यया व्याख्याताः** (प्र० पा० भा० पृ० ३३२) इति । अत्र तत्=पृथक्त्वम् ।

**पृथक्त्वेषु सामान्याऽभावः—**

यथा—सख्यात्वरूपात् परसामान्यादतिरिक्तमेकत्वाऽऽदिसामान्यम्, तथैकपृथक्त्वाऽऽदि न सामान्यम्, सख्यया सहैव पृथक्त्वस्य व्यवहारो भवतीति दर्शनात् । यथोक्तम्—**एकत्वादिवदेकपृथक्त्वाऽऽदिष्वपरसामान्याऽभाव.**, सख्यया

---

१. द्र० प्र० पा० भा०, पृ० ३३२, तर्कसग्रहश्चाऽपि ।

**तु विशिष्यते तद्** विशिष्टव्यवहारदर्शनादिति (प्र० पा० भा० पृ० ३३३) इति ।[1]

**पृथक्त्वस्याऽतिरिक्तगुणत्वसाधनम्**—

घटात् पृथक् पट इत्यत्र यथा पृथक्त्व प्रतीयते, तथाऽत्राऽन्यो भिन्न इतर इत्यादीना योगेऽपि । तथा चैतेषा समानप्रतीते सत्त्वात्, पृथक्त्वमन्योन्याऽभावादतिरिक्त गुणान्तर नास्ति, प्रत्युताऽन्योऽन्याऽभाव एव पृथक्त्वम् । तथा सति घटो न पट इत्यत्र घटशब्दात्तथा पञ्चमी विभक्तिर्भवेद्, यथा—घटात् पृथक् पट इत्यत्र स्यादिति चेत् ? नाऽय दोष प्रसज्यते । यतो हि **अन्याऽऽरादितरर्त्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते** (पा० सू० २।३।२९) इति सूत्रेणाऽन्योऽन्याऽभावविशिष्टाऽर्थकेऽन्यादिपदयोग एव **पञ्चमी** विधीयते । यथा—अन्योऽभिन्न इतरो वा कृष्णादित्यत्र । घटो न पट इत्यत्राऽन्योऽन्याऽभावविशिष्टार्थकोऽन्यादिपदस्य योगो नाऽस्ति, अपि त्वन्योऽन्याऽभावाऽर्थकस्य नञ एव । अतोऽत्र पञ्चमी न स्यात् ।

अन्योऽन्याऽभावविशिष्टार्थकपदस्य योग एव **पञ्चमी** भवेच्चेत्तर्हि **घटाद् भेद** इत्यत्र **पञ्चमी** न स्यात्, तादृशपदयोगस्याऽसत्त्वात् । तथा चाऽन्योऽन्याऽभावार्थकपदस्य योगे न पञ्चमी, किन्तु भेदार्थकपदयोग एव । एव सति यथा घटाद् भेद इत्यत्र पञ्चमी, तथा घटो न पट इत्यत्राऽपि पञ्चमी स्यात्, भेदार्थकस्य नञ सत्त्वात् । तथा सति निपाताऽतिरिक्तभेदार्थकपदयोग एव पञ्चम्या प्रयोजकत्वम्, अनुशासनस्य प्रयोगाऽनुरोधित्वात् । अत एव **घटाद् भेद** इत्यत्र निपाताऽतिरिक्तपदस्य सत्त्वात्पञ्चमी, **घटो न पट** इत्यत्र निपाताऽतिरिक्तपदस्याऽसत्त्वान्न पञ्चमीत्याचक्षते नव्या । यथोद्धृत नव्याना मतम्—**अत्र नव्या अन्योऽन्याऽभाव एव पृथक्त्वम्, न तु गुणाऽन्तरम् । न च घटो नेत्यत्र पञ्चम्यापत्तिरन्योन्याऽभावविशिष्टार्थकपदयोग एवाऽन्याऽऽरादितरर्त्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते** (पा० सू० २।३।२७) **इति सूत्रेण पञ्चमीविधानात्, नञस्तु नाऽन्योऽन्याऽभावविशिष्टार्थकत्वम्, परन्त्वन्योऽन्याऽभावार्थकत्वमेव । यदि च घटाद् भेद इत्यादौ पञ्चम्यनुपपत्त्या भेदाऽर्थकपदयोगः पञ्चमीप्रयोजकतयाऽन्याऽऽरादिति सूत्रेण बोध्यत इति घटो न पट इत्यत्र पञ्चम्यापत्तिर्दुर्वारेति विभाव्यते, तथाऽपि निपाताऽतिरिक्ताऽन्योऽन्याऽभावार्थकपदयोगस्यैव पञ्चम्या. प्रयोजकत्वं कल्प्यते अनुशासनस्य प्रयोगाऽनुरोधित्वात्** (भा० परि० ११४ दिनकरी) इति ।

परन्त्वेतन्न समीचीनम्, यथाऽन्योऽन्याऽभाव एव पृथक्त्वम्, तथा पृथक्त्वमेव अन्योऽन्याऽभाव, इत्यपि कल्पयितु शक्यते विनिगमनाविरहात् । तथा च रूप न

---

१ द्र० उप० ४।२।२ ।

घट इति न स्यात् । यतो हि नहि रूपे गुणे घटाऽवधिक पृथक्त्वमस्ति, गुणे गुणाऽनङ्गीकारात् । घटे घटाऽवधिक पृथक्त्वमपि नाऽस्ति, येन परम्परासम्बन्धस्य कल्पना प्रसज्येत । यदि च घटवृत्ति पृथक्त्वमेकार्थसमवायेन रूपे वर्त्तत एव तथा च एकार्थसमवायेन घटनिष्ठ पृथक्त्व विषयीकृत्यैव तादृशप्रतीतिरुत्पत्स्यत इत्युच्यते तर्ह्यस्मादिद पृथक्, घटो न पट इत्यनयो प्रतीत्योर्वैलक्षण्यस्य सत्त्वात्परम्परासम्बन्ध कल्पयितु न शक्यते । न चाऽत्र शब्दकृत एव, नत्वर्थकृतो विलक्षणबोध इति न वक्तु शक्यते । तथा सति घटात् पृथगित्यत्रेव, घटो न पट इत्यत्राऽपि पञ्चमी स्यात् ।

किञ्चाऽन्योऽन्याऽभाव एव पृथक्त्व भवेच्चेत्तर्हि **अन्याऽऽरादितरर्त्तेदिगित्यनेनैव** पञ्चम्या सिद्धौ, **पृथग्विने**त्यादिना घटात् पृथक् पट इत्यादौ पञ्चमीविधान व्यर्थमेव स्यात् । यतो हि **अन्याऽऽरादितरर्त्तेदिगि**ति सूत्रे **अन्ये**ति पदमर्थपरम् । तेन यथा—भिन्नेतरभेदेत्यादीना योगे पञ्चमी, तथा पृथग्योगेऽपि स्यात् । नचैव दृश्यते । अतोऽन्योऽन्याऽभावादतिरिक्तमेव गुणाऽन्तर पृथक्त्वमस्तीति गम्यते । यथोक्त विश्वनाथेन—

> **अन्योऽन्याऽभावतो नाऽस्य चरितार्थत्वमिष्यते ।**
> **अस्मात्पृथगिद नेति प्रतीतिर्हि विलक्षणा ॥** भा० परि० ११४ इति [1] ।

इदमेवाऽऽह विवृत्तिकारोऽपि—**पृथक्त्वमपि संख्यावद्गुणाऽन्तरमेव, तत्रैव पृथक्त्वमेकत्वसंख्यातुल्यम्, द्विपृथक्त्वाऽऽदिकञ्च द्वित्वाऽऽदिसंख्यातुल्यम्** (वै० सू० ७।२।२। विवृ०) इति ।

**पृथक्त्वस्य समर्थनम्—**

अथ व्याकरणदृशा पृथक्त्व विचार्य्यते । इद पृथक्पदघटित सूत्रम् । तथा हि—

१—**पृथग्विनानानाभिस्तृतीयाऽन्यतरस्याम्** पा० सू० २।३।३२

शब्दशास्त्रे तदेव पृथक्त्वमाश्रीयते, यद्वैशेषिकैरुच्यते । तत किमपि वैशिष्ट्य नोपलभ्यते । तथा चाऽस्मादिद पृथगितिव्यवहारस्य यदसाधारण कारण तदेव पृथक्त्वमास्थित वैयाकरणैरपि । यथोक्त हेलाराजेन—**पृथक्त्ववशाद्धि द्रव्याणां पृथक्त्वेन व्यवहारः** (हेला० ३।११।१) इति ।

**पृथक्त्वैकत्वयोः तादात्म्यम्—**

**यत्पृथक्त्वम्, तदेवैकत्वम्** । **न च पृथक्त्वादतिरिक्तमेकत्वम्**, न वा एकत्वादतिरिक्तं पृथक्त्वम् । तथा च पृथक्त्वैकत्वयो तादात्म्येनैव प्रतीतिर्भवति ।

---

१—द्र० उप० ७।२।२

एव द्विपृथक्त्व द्वित्वसख्यादिना तादात्म्यमेवेति ।

यथोक्त भर्तृहरिणा—

> **परमार्थे तु नैकत्व पृथक्त्वाद् भिन्नलक्षणम् ।**
> **पृथक्त्वैकत्वरूपेण तत्त्वमेव प्रकाशते ॥**
> **यत्पृथक्त्वमसन्दिग्धं तदेकत्वान्न भिद्यते ।**
> **यदेकत्वमसन्दिग्धं तत्पृथक्त्वान्न भिद्यते ॥**

(वा० प० ३।७।३९-४०) इति ।

**पृथक्त्वमहिम्नैव शक्तिब्रह्मणोः पार्थक्यप्रतीतिः—**

शक्तिविशिष्टमेव ब्रह्म, न तु शक्तिव्यतिरिक्त ब्रह्म । यतो हि शक्तिशक्तिमतोरभेद इति सिद्धान्त । तथाऽपि शक्तिभ्य पृथग्ब्रह्मण प्रतीतिर्भवति पृथक्त्वबलात् । यथोक्त भर्तृहरिणा—

> **एकमेव यदाम्नात भिन्नशक्तिव्यपाश्रयम् ।**
> **अपृथक्त्वेऽपि शक्तिभ्य. पृथक्त्वेनेव वर्त्तते ॥**

(वा० प० १।२) इति ।

॥ इति पृथक्त्वम् ॥

## (८) संयोगः

**संयोगस्य सिद्धिः—**

अत्राऽऽदौ वैशेषिकस्य मतमुपन्यस्यते। तथा हि—पृथक्पृथगवस्थितानां वस्तूनां यदेकत्राऽवस्थानं दृश्यते, तत्र संयोगो भासते। यतो हि संयोगमन्तरा नानादिगवस्थितानां पदार्थानामेकत्राऽवस्थानं न सम्भवति। तथा चाऽप्राप्तिपूर्वको हि संयोगो भवति। यथोक्तम्—**अप्राप्तिपूर्विका प्राप्तिः संयोगः** (उप० ७।२।९) इति। इदमेवाऽऽह विश्वनाथोऽपि—

**अप्राप्तयोस्तु या प्राप्तिः सैव संयोग ईरितः** (भा० परि० ११५ क) इति।

एवञ्च संयुक्तप्रत्ययस्य यदसाधारणं कारणम्, तदेव संयोग इति कथ्यते। यथोक्तम्—**संयोगः संयुक्तप्रत्ययनिमित्तम्** (प्र० पा० भा० पृ० ३३५) इति।

**संयोगस्य भेदाः—**

स च संयोगस्त्रिविधः, अन्यतरकर्मजोभयकर्मजसंयोगजभेदात्। तत्राऽन्यतरकर्मजः—पर्वतपक्षिणोः संयोगः। अत्र पक्षिणः क्रियया संयोगः। उभयकर्मजः—द्वयोर्मेषयोर्द्वयोर्मल्लयोर्वा संयोगः। अत्रोभयोः क्रियया संयोगः। संयोगजः—अवयवस्य संयोगे सति यो ह्यवयविनः संयोगो भवति, स संयोगजः संयोग इति कथ्यते। यथा—हस्तपुस्तकसंयोगे सति कायपुस्तकयोः संयोगः। यथोक्तम्—**अन्यतरकर्मज उभयकर्मजः संयोगजश्च संयोगः** (वै० सू० ७।२।९) इति। इदमेव पुष्णाति विश्वनाथोऽपि—

> **कीर्तितस्त्रिविधस्त्वेष आद्योऽन्यतरकर्मजः।**
> **तथोभयक्रियाजन्यो भवेत् संयोगजोऽपरः॥**
> **आदिमः श्येनशैलादिसंयोगः परिकीर्तितः।**
> **मेषयोः सन्निपातो यः स द्वितीय उदाहृतः॥**
> **कपालतरुसंयोगात् संयोगस्तरुकुम्भयोः।**
> **तृतीयः स्यात्, कर्मजोऽपि द्विधैव परिकीर्तितः॥**
> **अभिघातो नोदनञ्च, शब्दहेतुरिहाऽऽदिमः।**
> **शब्दाऽहेतुर्द्वितीयः स्याद्,**
>
> (भा० परि० ११५ ख ११९ क) इति।

**अथ व्याकरणदृशा संयोगस्य समर्थनम्—**

अथ व्याकरणदृशा संयोगो विचार्यते। इमे संयोगपदघटिते सूत्रे—

१—**हलोऽनन्तराः संयोगः** पा० सू० १।१।७

२—**तस्य निमित्तं संयोगोत्पातौ**[१] पा० सू० ५।१।३८

सूत्रेऽस्मिन् सयोगस्य लक्षण ब्रुवाणेन पतञ्जलिना—यत्कर्म कृत्वा, तत्कर्म-जन्यस्य यस्य फलविशेषस्याऽधिगमो भवति, स एव सयोग इत्युक्तम् । यथा— पुत्रेष्टियागे कृते कर्मणि, पुत्रेष्टियागजन्येन पुत्रेण सयोगो लब्धो दशरथेनेति रामायणादवगम्यते । तथा हि भाष्यवाक्यम्—**सयोगो नाम स भवति इदं कृत्वेदमवाप्यते** (म० भा० ५।१।३८) इति । इदमेव कैयटेन विशदीकृतम्—**काम्यैर्यागैः पुत्रादयोऽवाप्यन्ते, तत्र सयुज्यते फलविशेषेण येन यागादिकर्मणा स यागादिरर्थः संयोग.** (प्र० पा० सू० ५।१।३८) इति । आह च हेलाराज —**अप्राप्तयोः प्राप्ति. सयोग इति पृथक्सिद्धपदार्थविषया सयोगबुद्धि** (हेला० ३।१।१७) इति । एतेन वैशेषिकै सयोगस्य यादृश लक्षणमास्थित तादृशमेव वैयाकरणैरपि स्वीक्रियत इति गम्यते ।

**संयोगस्य भेदा**—

सयोगस्य ये भेदा वैशेषिकैराम्नाता, त एव शाब्दिकैरप्यनुमन्यन्ते । अत्र द्वौ सयोगौ तु क्रियाजन्यौ स्त , एकस्तु क्रियाजन्यो नास्ति । तत्र क्रिया-जन्यौ—अन्यतरकर्मजोभयकर्मजौ स्त , सयोगजस्तु क्रियाजन्य । यथोक्त नागेशेन—**सयोगजो भिन्न. सयोग क्रियाजन्य** (उद्० पा० सू० १।३।२) इति ।

इदमेव भर्तृहरिरप्यनुमन्यते—

**उभावप्यध्रुवौ मेषौ यद्यप्युभयकर्मजे ।**
**विभागे प्रविभक्ते तु क्रिये तत्र विवक्षिते ॥**
**मेषान्तरक्रियापेक्षमवधित्व पृथक् पृथक् ।**
**मेषयोः स्वक्रियापेक्षं कर्तृत्वञ्च पृथक्-पृथक् ॥**

(वा० प० ३।७।१४०-१४१) इति ।

**सयोगस्य मूर्त्तवृत्तित्वसिद्धि** —

अयञ्च सयोगो मूर्त्तेष्वेव नत्वमूर्त्तेष्वाकाशाऽऽदिषु, आकाशाऽऽदीना हि सर्वमूर्त्तसयोगिना विभुत्वात् । तथा च यत सयोगो मूर्त्तेष्वेव, अतो नियतदेश-वृत्तिरेव सयोग , एव सयोगिनोऽपि तथाविधरूपा एव । यथोक्तम्—**सयोगस्तु मूर्तिपरिच्छिन्नवस्तुवृत्तिरिति सर्वदा प्रदेशवृत्तिरेव । अत संयोगस्य नियत-देशतया संयोगिनोऽपि नियतदेशवृत्तय इति** (हेला० वा० प० ३।१।१५) इति ।

॥ इति सयोग ॥

---

१ सयोग सम्बन्ध सि० कौ० पा० सू० ५।१।३८।

## (९) विभागः

**विभागस्य सिद्धि —**

आदौ वैशेषिकस्य मतमुपन्यस्यते । तथा हि सयोगस्य यानि कारणान्यपेक्षितानि, तान्येव कारणानि विभागस्याऽपि । अतः संयोग इव विभागोऽपि त्रिविध एव । अत एव सयोगस्य व्याख्यानेनैव विभागस्याऽपि व्याख्यान सञ्जातमेवेति । अत एवोक्त कणादेन—**एतेन विभागो व्याख्यातः** (वै० सू० ७।२।१०) इति । सूत्रेऽस्मिन्नेतेन=सयोगस्य व्याख्यानेन । तथा च सयोगस्य व्याख्यानादेव विभागोऽपि व्याख्यातो भवति । यतो हि यया क्रिययोत्तरदेशेन सह सयोग, तयैव क्रियया पूर्वदेशेन सह विभागोऽपि भवति । तथा च यथा—सयोगोऽप्राप्तिपूर्वको भवति तथा विभाग प्राप्तिपूर्वक, प्राप्ताना वस्तूना विभक्तप्रत्ययजननात् । यथोक्त प्रशस्तपादाऽऽचार्य्येण—**प्राप्तिपूर्विकाऽप्राप्तिर्विभाग** (प्र० पा० भा० पृ० ३६४) इति ।

**विभागस्य भेदाः—**

विभागोऽपि सयोगवत्त्रिविध, अन्यतरकर्मजोभयकर्मजविभागजविभागभेदात् । अत्राऽन्यतरकर्मजोभयकर्मजौ सयोगवत् स्त । विभागजस्तु द्विविध, कारणविभागात्, कारणाऽकारणविभागाच्च । अत्र कारणविभाग —यस्मिन् कपाले कर्म, तेन कर्मणा कपालद्वयस्य विभाग, अयमेव विभागः कारणविभाग इति कथ्यते । यतो हि घटाऽऽरम्भस्य कार्य्यस्य कपालद्वयस्य सयोगोऽसमवायिकारणमस्ति । कारणाऽकारणविभागस्तु हस्तकर्मणा कायपुस्तकयोर्विभाग । अत्र हस्तकर्मणा हस्तपुस्तकयोर्हि विभाग जात, स कारणजन्यो विभाग । तेन कायपुस्तकयोर्यो विभागो जात, स कारणजन्यो विभागो नास्ति । नह्यत्र हस्तक्रिया कारण भवितुमर्हति, व्यधिकरणत्वात् । इद पल्लवित विश्वनाथेन —

> **विभागोऽपि त्रिधा भवेत् ।**
> **एककर्मोद्भवस्त्वाद्यो द्वयकर्मोद्भवोऽपर ।।**
> **विभागजस्तृतीयः स्यात् तृतीयोऽपि द्विधा भवेत् ।**
> **हेतुमात्रविभागोत्थो हेत्वहेतुविभागज ।।**

(भा० परि० ११९ ख० १२०) इति[1] ।

**अथ व्याकरणदृशा विभागस्य समर्थनम्—**

अथ व्याकरणदृशा विभागो विचार्य्यते । इमानि विभागसम्बन्धीनि सूत्राणि तथा हि—

---

१ द्र० प्र० पा० भा० पृ० ३६२-३९०, उप० वै० सू० ७।२।१० ।

१—**ध्रुवमपायेऽपादानम्** पा० सू० ४।१।२४
२—**पञ्चमी विभक्ते** पा० सू० २।३।४२
३—**विभक्तिश्च** पा० सू० १।४।१०४

विभागस्य यादृश लक्षण यादृशा हि भेदाश्च वैशेषिकैराम्नाता. तादृशमेव लक्षणम्, तादृशा एव भेदाश्च वैयाकरणैरप्यनुमन्यन्त एव, अप्रतिषिद्धञ्चाऽनुमतमिति न्यायात् । अत एव **ध्रुवमपायेऽपादानम्** (पा० सू० ४।१।२४) इति सूत्रे—अपाय:=विश्लेष [1], विभाग., विभक्तपदमपि विभागमाह । यथोक्त नागेशेन—**विभागाऽर्थकविभक्तपदेन भेदस्य व्याख्यानात्** (लघुश० शे० पा० सू० २।३।४२) इति । शब्दादर्थस्य विभञ्जनाद् विभक्तिपदमपि तमाह[2] । भिदिर् विदारणे (७।२) इति धातुना योऽर्थोऽभिव्यज्यते, स ह्यर्थो विभाग इति कथ्यते ।

एवञ्च शब्दशास्त्रे विभागस्य यत् स्वरूप वैशेषिकैर्निर्णीत तद् एव शाब्दिकैरप्यनुमन्यते । यथोक्त हरिणा—

**उभावप्यध्रुवौ मेषौ यद्यप्युभयकर्मजे ।**
**विभागे प्रविभक्ते तु क्रिये तत्र विवक्षिते ।।**

(वा० प० ३।७।१४०) ।

।। इति विभाग ।।

---

१. द्र० सि० कौ० पा० सू० ४।१।२४ ।
२. अर्थस्य विभञ्जनाद्विभक्तय । कातन्त्रव्या० दु० वृत्ति २।१।

## (१०-११) परत्वाऽपरत्वे

**परत्वाऽपरत्वयोः सिद्धिः—**

अत्राऽऽदौ वैशेषिकस्य मतमुपन्यस्यते। तथा हि—परमिद वस्तु, अपरमिद वस्त्विति व्यवहार प्रवर्त्तते। एतयो परत्वाऽपरत्वयोर्व्यवहारयोरसाधारण कारण किमप्यवश्यमस्ति। यतो हि नहि कारणमन्तराऽपरमिद वस्तु परमिद वस्तु इति व्यवहार उत्पत्तु प्रभवति। तथा चैतयोर्व्यवहारयोरसाधारण कारण किम् ? इति चिन्ताया परत्वाऽपरत्वे अवधार्येते। यथाऽऽह कणाद —

**एकदिक्काभ्यामेककालाभ्या सन्निकृष्टविप्रकृष्टाभ्या परमपरञ्च** (वै० सू० ७।२।२१) इति।

सूत्रेऽस्मिन् **परमपरमिति** भावप्रधानो निर्देश [1]। तेन परमपरम्=परत्वाऽपरत्वम्। परत्वाऽपरत्वे द्विविधे दिक्कृते, कालकृते चेति। अत्र दिक्कृते कालकृते वा परत्वाऽपरत्वे अपेक्षाबुद्धिजन्ये भवत। एते दिक्कृतपरत्वाऽपरत्वे, कालकृतपरत्वाऽपरत्वे च क्रमेणोद्भ्रियेते। तथा हि—

प्रयागमवधि कृत्वा पाटलिपुत्रे परत्वम्=दूरत्वम्, भूयस्त्वसयोगाऽऽश्रयत्वात्। काश्यामपरत्वम्=समीपत्वम्, स्वल्पसयोगाऽऽश्रयत्वात्। एवम्—तमेवाऽवधि कृत्वा कालिकत्तानगर्यां परत्वम्, पाटलिपुत्रेऽपरत्वमपि। तथा चैतयो. परत्वाऽपरत्वयोरपेक्षाबुद्धिर्यत्र यत्र प्रवर्त्तते, तत्र तत्राऽपेक्षाबुद्धिजन्ये परत्वाऽपरत्वे उत्पद्येते। यथोक्तम्—**पिण्डयोरेकस्मिन् सयुक्तसयोगभूयस्त्वम्, अपरस्मिन् स्वल्पसंयुक्तसंयोगत्वञ्चाऽपेक्ष्य परत्वाऽपरत्वे चोत्पद्येते** (उप० वै० सू० ७।२।२१) इति।

कालिकपरत्वाऽपरत्वे युवस्थविराऽऽदिषु प्रवर्त्तेते। युवानमवधि कृत्वा स्थविरे परत्वम्=ज्येष्ठत्वम्, एव स्थविरमवधि कृत्वा यून्यपरत्वम्=कनिष्ठत्वम्। एतयोरुत्पत्ति सूर्यरश्मिसम्पर्क्कमहिम्ना भवति। यस्मिन् पिण्डे सूर्यस्य किरणसम्पर्क्कोऽधिको जात, तस्मिन् पिण्डे परत्वोत्पत्तिर्यस्मिन् पिण्डे सूर्यस्य किरणसम्पर्क्को न्यूनो भवति, तस्मिन् पिण्डेऽपरत्वोत्पत्ति। यथोक्तम्—**अल्पतरतपनपरिस्पन्दाऽन्तरितजन्यत्वबुद्धिरपरत्वे, बहुतरतपनपरिस्पन्दाऽन्तरितजन्यत्वबुद्धि परत्वे निमित्तकारणम्** (उप० ७।२।२१) वै० सू० इति। इदमेव पल्लवित विश्वनाथेनाऽपि—

---

१ परमपरञ्चेति भावप्रधानो निर्देश वै० सू० ७।२।२१,

परत्वञ्चाऽपरत्वञ्च द्विविध परिकीर्त्तितम् ।
दैशिकं कालिकञ्चापि मूर्त्त एव तु दैशिकम् ।।
परत्व मूर्त्तसयोगभूयस्त्वज्ञानतो भवेत् ।
अपरत्व तदल्पत्वबुद्धित स्यादितीरितम् ।।
(भा० परि० १२१-१२२) इति[1] ।

**व्याकरणदृशा परत्वाऽपरत्वयोः समर्थनम्—**

अथ व्याकरणदृशा परत्वाऽपरत्वे विचार्य्येते । तथा हि—वैशेषिकैर्यादृश-परत्वाऽपरत्वे स्वीक्रियेते, तादृशपरत्वाऽपरत्वे एव वैयाकरणैरपि । यथाऽऽहुर्हरि-हेलाराजनागेशा. । एतेषा वचन क्रमेणोद्ध्रियते । तथाहि—

**परत्वे चाऽपरत्वे च भेदे तुल्या श्रुतिर्यथा ।**
**सख्या शब्दाऽभिधेयत्व भेदहेतोस्तथा गुणे ।। वा० प० ३।११।४।।**

**इह देशसम्बन्धात् परत्वाऽपरत्वलक्षणौ गुणावपेक्षाबुद्धिप्रभावितौ द्रव्ये सम-वेतावुत्पद्येते । तथा चैताभ्या द्रव्यं परमपरमिति व्यवह्रियते** (हेला० ३।११।४) इति ।

**यद्यप्येकैकव्यक्तिव्यङ्ग्या जातिस्तथापि ज्ञापकेन विजातीयव्यक्त्यव्यवधाने यत्किञ्चिद्व्यक्तिद्वारक सामीप्यम्, यत्किञ्चिद्व्यक्तिद्वारकञ्च ततः परत्वमा-श्रीयते**[2] (उद्० १।२।१०) इति ।

एतेन वैशेषिकशाब्दिकयोर्नये परत्वाऽपरत्वे गुणौ स्त , एताभ्यामेव परमि-दमपरमिति व्यवहार प्रवर्त्तत इति निष्कर्ष. ।

।। इति परत्वाऽपरत्वे ।।

१. द्र० प्र० पा० भा०, पृ० ३९३-४१७ ।
२. दूरत्वम् ।

## (१२) बुद्धिः

**बुद्धेः स्वरूपम्—**

इह खलु जगति यानि कार्य्याणि भवन्ति, तानि नह्यबुद्धिपूर्वकाणि, प्रत्युत तत्पूर्वकाण्येव । यतो हि कार्यं कर्त्तुं यदा कश्चित्प्रवृत्तो भवति, तदा स जनो बुद्धया प्राङ्निश्चिनोति यन्ममेद कार्यम्, मयेद कर्त्तव्यम्, अनेन मम श्रेयो भविष्यतीति । अत एव सर्वव्यवहारहेतुर्बुद्धिर्ज्ञानमिति कथ्यते । यथोक्तमन्नम्भट्टेन—**सर्वव्यवहारहेतुर्गुणो बुद्धिर्ज्ञानम्** (तर्कसग्रह ) इति ।

**बुद्धेः पर्यायाः—**

सा च बुद्धिर्ज्ञानमुपलब्धिरित्याभ्यामपि[1] कथ्यते, अनर्थान्तरत्वात् । यथोक्त प्रशस्तपादाऽऽचार्य्येण—**बुद्धिरुपलब्धिर्ज्ञानं प्रत्यय इति पर्यायाः** (प्र० पा० भा० पृ० ४१०) इति । इदमेवाऽऽह गौतमोऽपि—**बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तरम्** (न्या० सू० १।१।१५) इति ।

**बुद्धेर्भेदाः—**

बुद्धिर्द्विधा, अनुभूतिस्मृतिभेदात् । तत्राऽनुभूतिर्द्विविधा प्रमाऽप्रमाभेदात् । अत्रेद रजतमितिवाक्याद्रजतत्ववति रजते रजतत्वप्रकारकम्, रजतविशेष्यक यज्ज्ञानमुत्पद्यते, तज्ज्ञान प्रमेति कथ्यते । यत्र च शुक्ताविद रजतमिति वाक्याद् रजतत्वाऽभाववति रजते रजतत्वप्रकारक रजतविशेष्यकमिति यज्ज्ञानमुत्पद्यते तज्ज्ञानमप्रमेति कथ्यते । एतेन ज्ञाने तिस्रो विषयभा भासन्त इति गम्यते । ताश्च विशेष्यविशेषणसम्बन्धाख्या । तद्यथा—**घटवद्भूतलमि**त्यत्र घटो विशेषणम्, भूतल विशेष्यम्, सयोगश्च सम्बन्धो भासते । एव **घट** इत्यत्र घटत्व विशेषणम्, घटो विशेष्य·, समवायश्च सम्बन्धो भासते ।

प्रमापि द्विविधा, अनुभूतिरनुमितिश्च । अत्राऽनुभूति पञ्चधा, चाक्षुषरासनघ्राणजत्वाचश्रावणभेदात् । अत एव चाक्षुष रूपम्, घ्राणजो गन्ध, रासनो रस, त्वाच स्पर्श, श्रावण शब्द इत्येवविधा अनुभवा ।

यत्परामर्शजन्य ज्ञान तदनुमितिरिति कथ्यते । परामर्शो यथा वह्निव्याप्यधूमवानयमिति ज्ञानम् । तेनैतेन पर्वतो वह्निमानित्यप्रत्यक्षस्य वह्नेरनुमितिर्जायते । अत्र धूमो व्याप्य, वह्निश्च व्यापक । धूमो न्यूनदेशवृत्तित्वाद् व्याप्य, वह्निरधिकदेशवृत्तित्वाद् व्यापक इति गम्यते । यतो हि तप्तलौहपिण्डे वह्ने सत्त्वेऽपि धूमस्याऽसत्त्व भवति । एतेन वह्नेरधिकदेशवृत्तित्वेन व्यापकत्वम्, धूमस्य स्वल्पदेशवृत्तित्वेन व्याप्यत्वञ्च सिध्यति ।

---

१. अपिना **प्रत्ययो** ग्रहीतव्य ।

संस्कारजन्यं यज्ज्ञानम्, तत्स्मृतिरिति कथ्यते[1]। अत्र पूर्वाऽनुभूतस्य वस्तुनः कालाऽन्तरे तद्वस्तु दृष्ट्वा **तदेवेदं वस्तु**, यद्वस्तु पूर्वमद्राक्षमिति प्रत्यभिज्ञाप्रत्ययो भवति। पूर्वाऽनुभूतस्य वस्तुनो यदात्ममनसो संयोगविशेषात् स्मरणं भवति, तदेव स्मृतिः। अत्र वस्तुनः सत्त्वे सा स्मृतिः, प्रत्यभिज्ञा त्वनुभूतस्याऽसत्त्व एव तदेवेदमितीयानेवैतयोर्भेदः।

उपमित्या विज्ञानमनुमितावेवाऽन्तर्भवतीति[2]।

**व्याकरणदृशा बुद्धेः स्वरूपम्—**

अथ व्याकरणदृशा बुद्धिर्विचार्य्यते। इमे बुद्धिपदं घटिते सूत्रे। तथा हि—

**गतिबुद्धि** —पा० सू० १।४।५२
**मतिबुद्धि**[3]—पा० सू० ३।२।१८८

अन्तःकरणमेव बुद्धिरिति शाब्दिकाः। यथा—नद्या तडागस्य वा जलं छिद्रान्निर्गत्य कुल्याऽऽत्मना केदारान् प्रविश्य चतुष्कोणाऽऽद्याकारं भवति। तथाऽन्तःकरणमेवेन्द्रियमार्गान्निःसृत्य तत्तदिन्द्रियेण सहैवाऽयं गौः, अयं घटः इति विषयाऽऽकारा बुद्धिः परिणमति।

स च परिणामश्चक्षुरादीन्द्रियेण सहैव भवति। अत एव रसनेन्द्रियगतपित्तदोषाऽन्वयेन गुडः कटुः, नयनगतपित्तदोषाऽन्वयेन शङ्खः पीत इत्यनुभूयते। अन्यथा गुडे कटुत्वाऽभावात्, शङ्खे पीतवर्णस्याऽभावाद् गुडः कटुः, शङ्खः पीत इति प्रतीतिर्नोत्पद्येत। यथोक्तं नागेशेन—**चित्तस्य विषयाऽऽकारपरिणामरूपा वृत्तिश्चेन्द्रियेण सहैव, अत एव रसनेन्द्रियगतपित्ताऽन्वयेन गुडः कटुरिति, नयनगतपित्ताऽन्वयेन च शङ्खः पीत इत्याद्युपपद्यते। सा च भ्रमप्रमोभयरूपा** (वै० सि० लघुम० पृ० २९८) इति।

पतञ्जलिनाऽपि तथैवाऽभ्यधायि—**प्राचीनं ग्रामादाम्राः। तस्य सर्वत्राऽऽम्रबुद्धिः प्रसक्ता। ततः पश्चादाह—ये क्षीरिणोऽवरोहवन्तः पृथुपर्णास्ते न्यग्रोधा इति। स तत्राऽऽम्रबुद्ध्या न्यग्रोधबुद्धिं प्रतिपद्यते। स ततः पश्यति—बुद्ध्या आम्रांश्चाऽपकृष्यमाणान् न्यग्रोधांश्चोपधीयमानान्। नित्या एव च स्वस्मिन् विषये आम्राः, नित्याश्च न्यग्रोधाः। बुद्धिस्त्वस्य विपरिणम्यते** (म० भा० १।१।५६) इति।

---

१. संस्कारजन्यं ज्ञानं स्मृतिः। तर्कसंग्रह।
२. द्र० प्रमाणपरिच्छेद।
३. मतिरिह इच्छा। बुद्धेः पृथग्ग्रहणात्। पा० सू० ३।२।१८८।

बुद्धेर्विपरिणामित्व योगभाष्येऽपि दृश्यते । तथा हि तद्भाष्यम्—**ज्ञाताऽज्ञातविषयत्वात्परिणामिनी हि बुद्धि·, तस्याश्च विषयो गवादिर्घटादिर्वा ज्ञातश्चाऽज्ञातश्चेति परिणामित्व दर्शयति** (व्या० भा० यो० सू० २।२०) इति । आह चाऽत्र वाचस्पति —**यदा खल्विय शब्दाद्याकारा भवति, तदा ज्ञातोऽस्याः शब्दादिलक्षणो भवति विषयः। तदनाकारत्वे त्वज्ञातः** (तत्त्ववै० यो० सू० २।२०) इति ।

एवञ्च वैशेषिकाणा नये यादृश बुद्धे स्वरूपम्, ततो भिन्नमेवैतस्या बुद्धे स्वरूप शाब्दिका मन्यन्ते । वैशेषिका इन्द्रियाऽर्थयो सयोगादात्मनि समवायेन घटपटादीना ज्ञानमुत्पद्यत इति कथयन्ति[1] । इदमेव मत गौतमोऽपि मन्यते । तथा हि—**इन्द्रियाऽर्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम्** न्या० सू० १।१।४ इति । उक्तमेव स्पष्टीकरोति वात्स्यायन । तथा हि—**इन्द्रियस्याऽर्थेन सन्निकर्षादुत्पद्यते यज्ज्ञान तत् प्रत्यक्षम्** । न्या० सू० वा० भा० १।१।४ इति । तदेव बुद्ध्युपलब्धिप्रत्ययाऽऽदिशब्दैरप्युच्यते । परन्तु साख्या शाब्दिकाश्च बुद्धिरेव विषयाऽऽकारेण भासत इति व्याचक्षते । एतेनैतयोर्नये बुद्धे स्वरूप सर्वथा भिन्नमेवोपलभ्यते । तथा च साख्याना मतमेव शाब्दिकैरास्थितमिति विज्ञायते ।

**बुद्धिसम्बन्धिनः केचन शब्दा**

**बुद्धि —**

बोधनमिति व्युत्पत्तौ **बुध अवगमने** (१।८४१) इति धातो **स्त्रियां क्तिन्** (पा० सू० ३।३।६४) इति सूत्रेण क्तिनि (बुध्+क्तिन्)=बुद्धिरिति निष्पद्यते । तस्या ज्ञानसामान्यमर्थ । यथोक्त दीक्षितेन—**सूत्रे ज्ञानसामान्याऽर्थानामेव ग्रहणम्, न तु तद्विशेषार्थानामिति ज्ञायतेऽनेन । तेन स्मरति जिघ्रतीत्यादीनां न ग्रहणं भवति, बुद्धिविशेषात्** (सि० कौ० पा० सू० १।४।५२) इति ।

**मति —**

मननमिति व्युत्पत्तौ **मन ज्ञाने** (४।६८) इति धातो **स्त्रियां क्तिन्** (पा० सू० ३।३।६४) इति सूत्रेण क्तिनि (मन्+क्तिन्)=मतिरिति भवति । मति =निश्चितधारणा, स्थिरो विश्वास । अस्याऽर्थस्य पोषणम्, **अस्ति नाऽस्ति दिष्ट मति** (पा० सू० ४।४।६०) इति सूत्रेण भवति ।

---

१. द्र० वै० सू० ३।१।२, ३।१।१८, इत्यनयो सूत्रयोरात्माऽधिकरणे व्याख्या ।

**ज्ञानम्—**

ज्ञायतेऽनेनेति व्युत्पत्तौ **ज्ञा अवबोधने** (६।३६) इति धातो **करणाऽधिकरणयोश्च** (पा० सू० ३।३।११७) इति सूत्रेण ल्युटि (ज्ञा+ल्युट्)=ज्ञानमिति निष्पद्यते। तस्य चक्षुरादीन्द्रियेण सहाऽर्थस्य सन्निकर्षादुत्पद्यमानमर्थं। अत एव चाक्षुषं रूपमित्यादिर्निश्चय[1], तेन प्रमेयानां निश्चयो भवति। यतो हि ज्ञानपूर्वक एव व्यवहार प्रवर्तते। नहि ज्ञानमन्तरा व्यवहार उत्पत्तु प्रभवति। यथोक्तम्—व्यवहारश्च ज्ञानं विना न सम्भवति, इति ज्ञानमार्थिकम्, ज्ञात्वा व्यवहरतीति फलितम् (बालमनोरमा पा० सू० १।३।४७) इति। एतेन ज्ञानवानेव नर· कार्याणि कर्तुं शक्नोति, स एव सफलताञ्च लभत इति गम्यते। यथोक्त कृष्णद्वैपायनेन—**ज्ञानवानेव कर्म्माणि कुर्वन् सर्वत्र सिध्यति** (म० भा० शा० प० २३८।१) इति।

**उपलब्धिः—**

उपलम्भनमिति व्युत्पत्तौ **डुलभष् प्राप्तौ** १।६५६ इति धातो **स्त्रियां क्तिन्** (पा० सू० ३।३।६४) इति सूत्रेण क्तिनि (उपलभ+क्तिन्)=उपलब्धिरिति भवति। उपलब्धि =प्राप्ति। सा च ज्ञानपूर्विका भवति। अत एव **बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तरम्** (न्या० सू० १।१।१५) इत्युक्त गौतमेन।

**प्रत्ययः—**

प्रत्येत्यनेनेति, प्रत्याययति वेति व्युत्पत्तौ **इण् गतौ** २।३४ इति धातो **एरच्**[2] (पा० सू० ३।३।५६) इति सूत्रेणाऽचि (प्रति+इण+अच्)=प्रत्यय इति सिध्यति। प्रत्यय =ज्ञानम्। यथोक्तम्—**बुद्धिरुपलब्धिर्ज्ञानं प्रत्यय इति पर्याया** (प्र० पा० भा० पृ० ४१०) इति।

**आलोचनम्—**

आलोच्यतेऽनेनेति व्युत्पत्तौ **लोच् दर्शने** १।१६२ इति धातो· **करणाऽधिकरणयोश्च** (पा० सू० ३।३।११७) इति ल्युटि (आ+लोच्+ल्युट्=अन)= आलोचनमिति निष्पद्यते। आलोचनम्=चाक्षुष ज्ञानम्। यथोक्तम्—**आलोचनं चक्षुर्विज्ञानम्** (काशिका पा० सू० ८।१।२५) इति। आलोचनमित्यस्य दर्शनमिति पर्याय,। अत एव दर्शनम्=उपलब्धि, अदर्शनम्=अनुपलब्धिरिति। यथोक्त पाणिनिना **अदर्शनं लोप·** (पा० सू० १।१।६०) इति।

---

१. द्र० काशिका पा० सू० १।३।३६,

२. भावेऽकर्त्तरि च कारक इति प्रकृतमनुवर्तते यावत् कृत्यल्युटो बहुलम् पा० सू० ३।३।१८

**वेदना—**

वेदयतेऽनयेति व्युत्पत्तौ **विद चेतनाऽऽख्याननिवासेषु** (१०।१७४) इति धातो **ण्यासश्रन्थो युच्** (पा० सू० ३।३।१०७) इति सूत्रेण युचि (वेदि+युच्)= वेदनेति सिद्ध भवति । अस्या अनुभवोऽन्तर्बोधश्चाऽर्थ । एतस्या एव चैत्तिक ज्ञानमिति नाम कथ्यते । अत एव वेदना=चेतनेति । चेतना चाऽन्त करण सुखादियुक्ता वृत्तिः । यथोक्त पाणिनिना—**सुखादिभ्यः कर्तृवेदनायाम्**[1] (पा० सू० ३।१।१८) इति । अपि चाऽऽह क्षीरतरङ्गिणीकार —**विद चेतनाऽऽख्याननिवासेषु** (१०।१७४ क्षीर०) इति ।

**विद्या—**

विदन्त्यनयेति व्युत्पत्तौ **विद ज्ञाने** (२।५४) इति धातो **सञ्ज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः** (पा० सू० ३।३।९९) इति सूत्रेण क्यपि (विद्+क्यप्) विद्येति सिद्धम् । विद्या=शास्त्रम् । ज्ञानस्य साधनत्वाच्छास्त्रमपि ज्ञानम् ।

वेदनमिति व्युत्पत्तौ भावनिष्पन्नोऽय विद्याशब्द. । एतन्मते विद्या= वेदनम्[2] । विद्या=विज्ञानम्[3] ।

**विद्यायोनि**सम्बन्धेभ्यो वुञ् (पा० सू० ४।३।७७) इति सूत्रे विद्या= विद्याकृतसम्बन्ध । यथा—आचार्य, उपाध्याय, यतो ज्ञानाऽधिगमो भवति ।

**तदधीते तद्वेद** (पा० सू० ४।२।५९) इति सूत्रेऽध्ययनवेदनयोर्भेद । तत्राऽध्ययनम्=अक्षराऽनुपूर्वीग्रहणम् । वेदनम्=अर्थज्ञानम् । यथोक्त नागेशेन— **शब्दपाठोऽध्ययनम्, तदर्थज्ञानं वेदनम्** (शब्देन्दुशे० पा० सू० ४।२।५९) इति ।

---

१. तत्र विज्ञानसयुक्ता त्रिविधा चेतना ध्रुवा ।
सुखदु खेति यामाहुरदु खामसुखेति च ॥ म० भा० शान्ति प० २१९।११ इति ।

अपि च— त्रिविधा वेदना चैव सर्वसत्त्वेषु दृश्यते ।
सात्त्विकी राजसी चैव तामसी चेति भारत ॥
सुखस्पर्श सत्त्वगुणो दु खस्पर्शो रजोगुण ।
तमोगुणेन सयुक्तौ भवतो व्यावहारिकौ ॥
सात्त्विको राजसश्चाऽपि तामसश्चाऽपि ते त्रय ।
त्रिविधा वेदना येषु प्रसूता. सर्वसाधना ॥
म० भा० शान्तिप० १९४।२०-३०, २१९ इति ।

२. दयानन्दकृताऽष्टाऽध्यायीवृत्ति —भाव इत्यनुवर्त्तते । पा० सू० ३।३।९९ ।

३. नि० दुर्गभा० १।२ख० ।

**विन्दुः**—

वेत्ति तच्छीलो विन्दुः । विन्दुः=वेदनशीलः । यथोक्तम्—**वेदनशीलो विन्दुः** (काशिका पा० सू० ३।२।१६९) इति । **वेदनञ्च दुःखात्मकं ज्ञानमेव । तथा च विन्दुरपि ज्ञानविशेषस्य प्रत्यायकः ।**

**सञ्ज्ञा**—

सपूर्वकज्ञाधातोः (सम्+ज्ञा=सञ्ज्ञा) प्रयोगः सम्यग् ज्ञाने प्रयुज्यते । अत एव **संज्ञोऽन्यतरस्याम्** (पा० सू० २३।२२) इति सूत्रस्य **मातरं सञ्जानीते**=सम्यग्जानीत इत्युदाहरणं प्रादायि दीक्षितेन ।

**उपज्ञा**—

उपज्ञायत इत्युपज्ञा=प्रथमज्ञानम् । अस्योल्लेखः पाणिनिना—**उपज्ञोपक्रमं तदाद्याचिख्यासायाम्** (पा० सू० २।४।२१) इति सूत्रेऽकारि । अस्योदाहरणम्—पाणिन्युपज्ञं व्याकरणम्, कालपरिभाषाशून्यम् । यथोक्तम्—**कालपरिभाषाशून्यं व्याकरणं पाणिनिना प्रथमं ज्ञातमिति** । द्र० माधवीयधातुवृत्तौ **ज्ञा अवबोधने** (९।३६) इति । अपि च **पाणिनेरुपज्ञानेन प्रथमतः प्रणीतमकालकं व्याकरणम्** (काशिका पा० सू० २।४।२१) इति ।

**उपज्ञातम्**—

उपदेशाऽनपेक्षितं ज्ञानमुपज्ञानम्=उपज्ञातमिति च कथ्यते । यथोक्तम्—**विनोपदेशेन ज्ञानमुपज्ञातम्=स्वयमभिसम्बद्धम्** (काशिका पा० सू० ४।३।११५) इति । अत एव पाणिनिनोपज्ञातं पाणिनीयं शास्त्रम् ।

**विद्यमानमेव ज्ञातमुपज्ञातम्** (काशिका पा० सू० ४।३।११६) इति । एतेन पूर्वोक्तोपज्ञातेन सह भेदः प्रदर्शितः । **उपज्ञातं प्रथमं ज्ञातम्** (बालमनोरमा पा० सू० ४।३।११५) । एतेनोपज्ञोपज्ञानयोरभेद इति व्याख्यातुं शक्यते । तत्त्वबोधिनीकृता तु **विनोपदेशेन ज्ञानमुपज्ञातमित्युक्तम्**[1] ।

**अविदर्थज्ञा**—

वेदनारहितज्ञानमविदर्थज्ञानमुच्यते । यथा—सर्पिषो जानीते । अत्र **ज्ञोऽविदर्थस्य करणे** (पा० सू० ६।३।५१) इति सूत्रेण करणे षष्ठी भवति । तेनैतेन सर्पिषो जानीते । अत्र=सर्पिषा प्रवर्त्तत इत्येतस्याऽर्थः । एतेन ज्ञाधातोः प्रवृत्तिरूपोऽर्थः सम्पद्यते । आहोस्विद् भ्रान्त्या जलमेव सर्पिर्मत्वा प्रवर्त्तते । तेनैतेन मिथ्याज्ञानमेव ज्ञोऽर्थः इति । यथोक्तम्—**अनेकार्थत्वाद् धातूनां प्रवृत्तिरिह ज्ञोऽर्थः अथवा भ्रान्त्या सर्वमुदकादिकं सर्पीरूपेण प्रतिपद्यत इति मिथ्याज्ञानं वा ज्ञोऽर्थः** (प्रक्रि० कौ० पा० सू० २।३।५१ प्र० टी०) इति । अपि च—**ज्ञानपूर्विकायां प्रवृत्तौ जानातेर्लक्षणा** (तत्त्वबो० पा० सू० २।३।५१) इति । अपि च—**सर्पिः**-

---

१ द्र० पा० सू० ४।३।११५ ।

**सम्बन्धिनी प्रवृत्तिरित्यर्थं जानातेः, प्रवृत्तौ लक्षणेत्याहुः** (बृहच्छब्देन्दु० पा० सू० २।३।५१) इति ।

**सज्ञा**—

सपूर्वकाज्ज्ञाधातो सम्यग्ज्ञानरूपेऽर्थे भावेऽङ्[1] प्रत्ययेन सञ्ज्ञेति शब्दो निष्पद्यते । सञ्ज्ञा=सम्प्रत्यय , अवगम इति च । अस्या सञ्ज्ञाया पाणिनिना **तदशिष्य सञ्ज्ञाप्रमाणत्वाद्** (पा० सू० १।२।५३) इति सूत्रे समुल्लेखोऽकारि ।

**अज्ञातः**—

यदा स्वरूपेण ज्ञातमपि वस्तु, अस्येदमिति विशेषरूपेण ज्ञात न भवति तदा ज्ञातमिति व्यवहार । यथोक्तम्—**स्वेन रूपेण ज्ञाते पदार्थविशेषरूपेणाऽज्ञाते प्रत्ययविधानमेतत् । कस्याऽयमश्व इति स्वस्वामिसम्बन्धेनाऽज्ञातेऽश्वे प्रत्यय. । एवमन्यत्राऽपि यथायोगमज्ञातता विज्ञेया** (काशिका पा० सू० ५।३।७३) इति ।

**प्रज्ञा**—

प्रज्ञानमिति व्युत्पत्तौ प्रपूर्वकाद् **ज्ञा अवबोधने** (९।३६) इति धातो आतश्चोपसर्गे (पा० सू० ३।३।१०६) इति सूत्रेण भावेऽङि (प्रज्ञा × अङ्)=प्रज्ञेति सिद्ध भवति । प्रज्ञा=बुद्धि । सा च हिताऽहितप्राप्तिपरिहाररूपा भवति । प्रज्ञाया दु खध्वस प्रति कारणत्वमुक्त व्यासेन । तथा हि—**प्रज्ञया मानस दुःख हन्यात्** (म० भा० शान्तिप० २०५।३) इति ।

अपि च—**प्रज्ञाप्रासादमारुह्य अशोचञ्छोचतो जनान् ।**
**जगतीस्थानिवाद्रिस्थो मन्दबुद्धीनवेक्षते ॥**
(शान्तिप० १७।२०) इति ।

**सम्बोधनम्**—

**सम्बुध्यतेऽनेनेति व्युत्पत्तौ** समिति पूर्वकाद् **बुध अवगमने** (१।८४३) इति धातोः **करणाऽधिकरणयोश्च** (पा० सू० ३।३।११७) इति सूत्रेण ल्युटि (सम्बुध +ल्युट्)=सम्बोधनमिति सिद्ध भवति । सम्बोधनम्=सम्यग्बोधनमेव सम्बोधनम्, समित्युपसर्गबलाल्लभ्यते ।

**सम्मति**—

सम्मननमिति व्युत्पत्तौ **समिति** पूर्वकात् **मन ज्ञाने** (४।६८) इति धातो. स्त्रियां क्तिन् (पा० सू० ३।३।९४) इति सूत्रेण भावे क्तिनि (सम्मन्+क्तिन्) =सम्मतिरिति सिद्ध भवति । सम्मति =परामर्श , पूजा च । अस्या उल्लेख **वाक्यादे. सम्मतिः** (पा० सू० ८।१।८) इति सूत्रे पाणिनिना प्रादर्शि ।

**सम्माननम्**—

सम्मान्यतेऽनेनेति व्युत्पत्तौ **सम्** पूर्वकात् **मान पूजायाम्** (१।९५३)

---

१. आतश्चोपसर्गे पा० सू० ३।३।१०६ ।

इति धातोः **करणाऽधिकरणयोश्च** (पा० सू० ३।२।११७) इति सूत्रेण करणे ल्युटि (सम्मान्+ल्युट्)=सम्माननमिति सिद्ध भवति। सम्माननम्=पूजनम्। पूजनञ्च ज्ञानवतामेव जनाना भवति। एतच्च स्पष्टीभवति व्याख्यानात्। तथा हि व्याख्यानम्—**नयते चार्वी लोकायत** इति। अस्य व्याख्यानमीदृश दृश्यते—**चार्वीः[1] तत्सम्बन्धादाचार्योऽपि चार्वी, स लोकायते शास्त्रे पदार्थान् नयते, उपपत्तिभिः स्थिरीकृत्य शिष्येभ्यः प्रापयति, ते युक्तिभिः संस्थाप्यमाना सम्मानिताः= पूजिता.=भवन्ति** (काशिका पा० सू० १।३।३६) इति।

**मत्यम्—**

मत+यत्=मत्यम्=ज्ञानस्य जननसाधनम्, ज्ञानजननक्रिया वा। यथोक्तम्—**मतम्—ज्ञानम्, तस्य करणं मत्यम्** (काशिका पा० सू० ४।४।९७) इति।

**विमतिः—**

विमति =विभिन्ना बुद्धि·। यथोक्तम्—**विमतिर्नानामति·, क्षेत्रे विवदन्ते, गेहे विवदन्ते, विमतिपतिता विचित्रं भाषन्ते** (काशिका पा० सू० १।३।४७) इति। अपि च **विविधा मतिर्यस्यासौ विमतिः** (गणरत्न० पा० सू० ७।३।९३)।

**साक्षाद् द्रष्टरि सञ्ज्ञायाम्—**

अत्र साक्षाद् दर्शनमेव ज्ञानम्। यथोक्तम्—**यः कर्मणि स्वयं न व्याप्रियते किन्तु कर्म क्रियमाणं पश्यति सोऽय साक्षीत्युच्यते** (बालमनोरमा पा० सू० ४।२।९१) इति।

**पश्यार्थैश्चाऽनालोचने—**

अत्र **पश्येत्यस्य** ज्ञानसामान्यरूपोऽर्थो गृह्यते। यथोक्तम्—**दर्शनं पश्यः, तच्चेह ज्ञानमात्रमदर्शन लोप इत्यत्र यथा, न तु चाक्षुषज्ञानमेवाऽनालोचन इति प्रतिषेधात्** (तत्त्वबो० पा० सू० ८।१।२५) इति।

अज्ञानार्थेऽपि दृशे क्वचित्प्रयोगो दृश्यते। यथा—**तमिवेमं पश्यन्ति जनाः, स इवाऽय पश्यति। ज्ञानविषयो भवतीत्यर्थाद् अज्ञानार्थादिति तु सङ्गच्छते। तत्र दृशेर्ज्ञानविषयत्वापत्तिमात्रवृत्तित्वे विषयीकरणाऽवृत्तित्वात्** (तत्त्वबो० पा० सू० ३।२।६०) इति। अपि च **दृशेरत्र विषयत्वापत्तिमात्रवृत्तित्वादज्ञानार्थता** (म० भा० पा० सू० ३।२।६०) इति[2]।

**उपदेश —**

उपदेशनमिति **व्युत्पत्तौ उपेत्युपसर्गपूर्वकात् दिश अतिसर्जने** (३।१) इति धातो **भावे** (पा० सू० ३।३।१८) इति सूत्रेण घञि (उपदिश+घञ्)=उपदेश इति सिध्यति। उपदेश =शब्दोच्चारणम्। यतो हि शब्देनैव कश्चित् काश्चि-

---

१ चार्वी =बुद्धि, प्रज्ञा, कान्ति, दीप्ति, सुन्दरस्त्री, इति कोष।

२. द्र० बालमनोरमाऽपि।

दुपदिशति । यथा—गौरयमित्युपदिष्टे सास्नादिमान् गोपदार्थ इति बुध्यते। शाब्दबोधस्य कारणत्वेनेदमपि ज्ञानम् ।

उपदेशश्च परार्थो, न तु स्वार्थो भवति । नहि कश्चित् स्वात्मान शब्देनोपदिशति । किन्तु बुद्धचा मननमेव कुरुते । यथाह—**उपदेशः परार्थः प्रयोग., स्वयमेव तु यदा बुद्धचा परामृशति, तदा नास्त्युपदेशः** (काशिका पा० सू० १।४।७०) इति। अपि च **साक्षात्कृतधर्माण ऋषयो बभूवुः, तेऽवरेभ्योऽसाक्षात्कृतधर्मभ्य उपदेशेन मन्त्रान् सम्प्रादुः** (नि० १।२० खं०) इति ।

**दिष्टम्—**

देशनमिति व्युत्पत्तौ (दिश+क्त)=दिष्टम्=प्रमाणाऽनुगा मति । अत एवोक्त पाणिनिना—**अस्ति नास्ति दिष्ट मतिः** (पा० सू० ४।४।६०) इति। अत्र काशिकायाम् **प्रमाणाऽनुपातिनी यस्य मतिः स दैष्टिक** इत्युक्तम् । एतेनोक्तोऽर्थो गम्यते ।

**आलोचनम्—**

आलोचनमिह चक्षुर्ज्ञान भवति । यथोक्तम्—**आलोचनमिह चक्षुर्विज्ञानमात्रमभिप्रेतम्** (न्यासः पा० सू० ३।२।६०) इति । अपि च—**नेह निशामनं ज्ञानमात्रम्, किन्तु चक्षु.साधन ज्ञानम् । शम, लक्ष, आलोचनमित्यस्य हीदं रूपम्, आलोचनञ्च चक्षुर्विज्ञाने प्रसिद्धम् । निशामनं चक्षुर्विज्ञानमिति स्थितम्** (माध० धा० वृ० १।५३५) इति ।

**विचारः—**

विचरणमिति व्युत्पत्तौ **वीत्युपसर्गपूर्वकात् चर गतिभक्षणयोः** (१।५४६) इति धातो **भावे** (पा० सू० ३।३।१८) इति सूत्रेण घञि (विचर+घञ्)=विचार इति सिद्ध भवति । **प्रमाणेन** वस्तुनस्तथ्याऽतथ्यनिरीक्षण विचार इति कथ्यते ।

यथोक्तम्—

> **प्रमाणेन वस्तुपरीक्षणं विचार** (काशिका पा० सू० ८।२।९७) इति ।
> **कोटिद्वयस्पृग्विज्ञान विचार इति कथ्यते ।**
> **विचार्यमाणस्तज्ज्ञानविषयीभूत उच्यते॥** (काशिकायाम् उद्० पा० सू० ८।२।९७) इति ।

**सम्भावनम्—**

सम्भाव्यतेऽनेनेति व्युत्पत्तौ (सम्भावि+ल्युट्) सम्भावनम्=योग्यताऽध्यवसाय, अस्तित्वाऽध्यवसायश्चेति ।

**आख्यातोपयोगे—**

आख्याता गुरुः शिष्याय शास्त्रमुपदिशति । शिष्यो गुरोरुपदिष्टं शब्दं श्रुत्वा ज्ञानं लभते । गुरुणोच्चरितः शब्दः शिष्यस्याऽन्तःकरणे श्रोत्रेण प्रविश्य ज्ञानाऽऽकारेण परिणमन् बोधं जनयति । अत एव **ज्योतिर्वज्ज्ञानानि भवन्ति** (पा० सू० १।४।४९) इति सूत्रभाष्ये पतञ्जलिना अभिहितम् ।

**द्वितीये चाऽनुपाख्येये—**

**अत्रोपाख्यानम्=प्रत्यक्षम्, तद्भिन्नेऽनुमेये** (शब्देन्दुशे० पा० सू० ६।३।८०) इति । यद्यपीदं ज्ञानं नास्ति, तथापि अनुमितिरूपेण ज्ञानेन सम्बद्धत्वाज्ज्ञानमेवेत्यवगम्यते ।

**सिध्यतेरपारलौकिके—**

अत्र सिध्यति =तपोजन्याऽऽविर्भूतप्रकाशरूपं ज्ञानम् । तच्च पारलौकिकं सुखजनकं भवति । यथोक्तम्—**सिध्यति तापसः आविर्भूतज्ञानलक्षणप्रकाशो भवतीति**[1] । अपि च—**तपो हि कृच्छ्रचान्द्रायणादिकमनुष्ठीयमानमनुष्ठातुर्विवेकविषयज्ञानाऽतिशयमुत्पादयति** (उद्० पा० सू० ६।१।४९) इति । अपि च **सिध्यति=पारलौकिके ज्ञानविशेषे वर्त्तते । तापसः सिध्यति = ज्ञानविशेषमापादयति** (काशिका पा० सू० ६।१।४८) इति ।

**शिक्षेर्जिज्ञासायाम्—**

विद्यासु शिक्षते, धनुषि शिक्षते । शिक्ष इति सन्नन्तं **शक्लृ शक्तौ** इति धातोर्निष्पन्नं । अथवा **शिक्ष विद्योपादाने** इति । तत्र प्रथमपक्षोऽङ्गीक्रियते चेत्तर्हि विद्यासु शिक्षते=विद्यां ग्रहीतुं जिज्ञासते, धनुषि शिक्षते=धनुर्विद्याविषयिका जिज्ञासा भवति । द्वितीयः पक्षः स्वीक्रियते चेत्तर्हि विद्यासु शिक्षते=विद्यामुपादत्ते, धनुषि शिक्षते=धनुर्विद्यां गृह्णाति । अनयोः प्रथमपक्ष एव ज्यायः । यथोक्तम्—**इह तु जिज्ञासाविषयः शकिर्गृह्यते=विद्यां जिज्ञासितुं घटते** (प्र० पा० सू० १।३।२१) इति ।

**उपयोगः—**

उपयोगः =नियमपूर्वकविद्याग्रहणम् । यथोक्तम्—**उपयोगशब्दस्यैवाऽयमर्थो नियमपूर्वकविद्याग्रहणम्** (प्र० पा० सू० १।४।२९) इति ।

उपरिप्रदर्शितेभ्य एतेभ्योऽन्येषामपि बुद्धिसम्बन्धिनां शब्दानां विशिष्टज्ञानवाचकत्वमस्तीति स्वयमूहनीयम् ।

॥ इति बुद्धिसम्बन्धिनः केचन शब्दाः ॥

---

१ अपि च प्रदीपः म० भा० पा० सू० ६।१।४९ ।

## (१३-१४) सुखदुःखे

आदौ वैशेषिकस्य मतमुपन्यस्यते । तथा हि—सुख हि मनस प्रमोद । स च प्रमोद इष्टस्य विषयस्य सान्निध्याद् भवति । यथा धनार्थिनो जनस्य धनस्याऽधिगमे मनस प्रमोदो भवति । एव पुत्रार्थिन पुत्रस्य लाभे मनसः प्रसाद । अनुकूलविषयस्याऽधिगमो नहि धर्म विना भवति । यथाऽऽह विश्वनाथ —**सुखं तु जगतामेव काम्य धर्मेण जायते** (भा० परि० १४५ क) इति ।

धर्मश्च शास्त्रविहितकृच्छ्रचान्द्रायणव्रतादिकर्माऽनुष्ठानेनैव भवति, तेनैतेन कर्मणा सुखोत्पादक आत्मनि धर्मो जायते । यथोक्तम्—**अनुग्रहलक्षण सुखम् । स्रगाद्यभिप्रेतविषयसान्निध्ये सतीष्टोपलब्धीन्द्रियाऽर्थसन्निकर्षाद् धर्माद्यपेक्षादात्ममनसो सयोगादनुग्रहाभिष्वङ्गनयनादिप्रसादजनकमुत्पद्यते तत्सुखम्** (प्र० पा० भा० पृ० ६३०-६१) इति । अत्राऽनुग्रह =अनुग्रहस्वभाव. अनुगृह्यतेऽनेनेति व्युत्पत्ते ।

दु ख हि मनसोऽप्रमोद । स चाऽप्रमोद प्रतिकूलविषयस्य सम्बन्धात् समुत्पद्यते । प्रतिकूलविषयस्याऽधिगमोऽधर्माद् भवति । अधर्म शास्त्रविहितप्रतिकूलकर्मानुष्ठानादुद्भवति । तथा चाऽधर्मजन्यविषया हि कण्टकशत्रुदर्शनाऽऽदय । अत एवैतेषा सान्निध्ये सति दु खमनुभूयते । यथोक्तम्—**उपघातलक्षणं दु.खम् । विषाद्यनभिप्रेतविषयसान्निध्ये सत्यनिष्टोपलब्धीन्द्रियाऽर्थसन्निकर्षादधर्माद्यपेक्षादात्ममनसोः सयोगाद्यदमर्षोपघातदैन्यनिमित्तमुत्पद्यते तद् दु.खम्** (प्र० पा० भा० पृ० ६३३) इति । विश्वनाथोऽप्याह—

**अधर्मजन्य दुःखं स्यात् प्रतिकूल सचेतसाम्** (भा० परि० १४५ ख) इति । सुखदु.खयो पार्थक्यस्य प्रकटीकरणाय अचिकीर्त्तत् कणाद —**इष्टाऽनिष्टकारणविशेषाद्विरोधाच्च मिथः सुखदु.खयोरर्थान्तरभावः** (वै० सू० १०।१।१) इति ।

अस्मिन् सूत्रे—इष्टम्=इष्यमाण स्रक्चन्दनवनिताऽऽदि, अनिष्टम्=अनिष्यमाणमहिकण्टकाऽऽदि । एतानि सुखदु खे प्रति करणानि भवन्ति ।

सुखदु खयोरनुभव आत्मेन्द्रियमनोऽर्थाना सम्बन्धाद् भवति । विषयस्य सत्त्वेऽपि मनसोऽनवस्थानात् सुखदु खे नाऽनुभूयेते । प्रत्युत मनसोऽवस्थानत्वादेव । यथोक्तम्—**आत्मेन्द्रियमनोऽर्थसन्निकर्षात्सुखदु खे** (वै० सू० ५।२।१५) इति ।

**व्याकरणदृशा सुखदुःखयोः समर्थनम्—**

अथ व्याकरणदृशा सुखदुःखे विचार्य्येते । इमानि सुखदुःखघटितानि सूत्राणि । तथा हि—

| | |
|---|---|
| १—**सुखप्रियादानुलोम्ये** | पा० सू० ५।४।६३ |
| २—**सुखादिभ्यः कर्तृवेदनायाम्** | पा० सू० ३।१।१८ |
| ३—**दुःखात्प्रातिलोम्ये** | पा० सू० ५।४।६४ |

सुखदुःखयोर्यादृश लक्षण वैशेषिकैरास्थितम्, तादृशमेव लक्षण शाब्दिकैरपि स्वीक्रियते। यतो हि दुःखस्य तदुत्पादकसामग्रीणाञ्च विघाते सति सुखम्, सुखस्य तदुत्पादकसामग्रीणाञ्च विघाते सति दुःखम्। यथोक्तम्—**सुखप्रतिघातेन दुःखम्, दुःखप्रतिघातेन च सुखम्** (म० भा० पा० सू० २।२।२९) इति। इद स्पष्टीभवत्येतद्व्याख्यानादपि—**सुखप्रतिबन्धिकायास्तन्नाशिकायाश्च सामग्र्या दुःखजनकत्वम्, दुःखप्रतिबन्धिकायास्तन्नाशिकायाश्च सामग्र्याः सुखजनकत्वम्** (उद्० पा० सू० २।२।२९) इति।

धर्माऽधर्मयो सुखदुःखे प्रति कारणत्वमस्तीति हेलाराजो ब्रूते। तथा हि तस्य वचनम्—**धर्माऽधर्मयोः सुखदुःखसवेदनम्** (हेला० ३।८।३०) इति।

एतेन सुखोत्पादकमनुकूलविषय प्रयच्छति धर्म, दुःखोत्पादक प्रतिकूलविषय प्रयच्छत्यधर्म इति गम्यते।

**अन्तःकरणस्य परिणामरूपे सुखदुःखे—**

इमे सुखदुःखे जनकसामग्रीसमवहिते अन्तःकरणपरिणामरूपे एव भवत। यथोक्तम्—**यदन्तःकरणाऽवयवपरिणामः सुखम्, तदतिरिक्ताऽवयवपरिणाम एव दुःखम्** (वै० सि० म० पृ० ३८१) इति।

**वैशेषिकशाब्दिकयोर्मतवैषम्यस्य प्रदर्शनम्—**

वैशेषिका 'आत्मनि समवायेन सुखदुःखे जन्येते, नत्वन्तःकरणस्य परिणामभूते एते स्त' इति व्याचक्षते। वैयाकरणास्तु स्फुटतयाऽन्तःकरणस्य परिमाणरूपे सुखदुःखे स्त इति मन्यन्ते। एतेनैतयोर्नये स्फुटो भेदोऽस्तीति गम्यते।

॥ इति सुखदुःखे ॥

## (१५) इच्छा

**इच्छायाः सिद्धिः—**

आदौ वैशेषिकस्य मतमुपन्यस्यते । तथा हि—स्वस्मै, परस्मै वाऽलभ्यलाभायाऽऽत्ममनसो सन्निकर्षादिच्छा जायते । यतो हि सर्वे प्राणिन. सुख कामयमाना अहर्निश यतन्ते । तथा च सर्वेषामात्मनि सुखायेच्छा जागर्ति । सुखविषयिणीच्छा न भवेच्चेत्तर्हि केऽपि जना कस्मिन्नपि कर्मणि प्रवृत्ता न स्यु । नहि प्रयोजनमन्तरा कस्यचित्प्रवृत्तिर्दृश्यते । यथोक्तम्—**प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्त्तत** इति । इच्छा हि प्रयोजनज्ञानपूर्विका भवति, प्रयोजनज्ञान विनेच्छाया अनुत्पादात् । यथोक्तम्—**स्वार्थं परार्थं वाऽप्राप्तप्रार्थनेच्छा । सा चाऽऽत्ममनसोः सयोगात् सुखाद्यपेक्षात्, स्मृत्यपेक्षाद्वोत्पद्यते** (प्र० पा० भा० पृ० ६३४) इति ।

**इच्छाया भेदाः—**

सा चेच्छा नैकविधा, अपि तु नानाविधेच्छा भवति । यथा—कस्यचित् स्त्रिया प्राप्तेरिच्छा, विषयस्य मुहुर्मुहुरुपभोक्तु काम , कस्यचित्कार्यस्य निष्पत्तये मानस सकल्प । आर्त्तस्य दु ख दृष्ट्वा तस्मात् तमुद्धर्त्तुं कर्मणि या कस्यचित्प्रवृत्ति सा कारुण्यमिति कथ्यते । विषयेषु दु ख दृष्ट्वा तेभ्यो विरति । परेषा वञ्चनमेवोपधेति कथ्यते । एवमेव चिकीर्षा, जिहीर्षा, जिगमिषा, पिपठिषेत्यादय इच्छाभेदा सन्तीति । यथोक्तम्—**कामोऽभिलाष, राग·, सङ्कल्पः, कारुण्यम्, वैराग्यम्, उपधाऽभाव इत्येवमादय इच्छाभेदाः** (प्र० पा० भा० पृ० ६३५) इति ।

इदमेवाऽऽह विश्वनाथोऽपि—

> **निर्दुःखत्वे सुखे चेच्छा तज्ज्ञानादेव जायते ।**
> **इच्छा तु तदुपाये स्यादिष्टोपायत्वधीर्यदि ।।**
>
> (भा० परि० १४६) इति ।

**व्याकरणदृशा इच्छायाः स्वरूपम्—**

अथ व्याकरणदृशा इच्छा विचार्य्यते । इमानीच्छाघटितानि तत्सम्बद्धानि च सूत्राणि । तथा हि—

| | |
|---|---|
| **१—इच्छा** | पा० सू० ३।३।१०१ |
| **२—धातोः—इच्छायां वा** | पा० सू० ३।१।७ |
| **३—मति[1] बुद्धिपूजार्थेभ्यश्च** | पा० सू० ३।२।१८८ |

---

१. मतिरिहेच्छा, बुद्धे पृथगुपादानात् । सि० कौ० पा० सू० ३।२।१८८ ।

यादृशमिच्छाया लक्षणम्, तस्या भेदाश्च वैशेषिकैरास्थिता, तादृशमेव लक्षणम्, तस्या भेदाश्च शाब्दिकैरप्यास्थीयन्ते। यतो हि नहि कुत्रचिद् वैशेषिकसम्मतेच्छाया कुत्रचिच्छब्दशास्त्रे विरोधो दृश्यते। तथा चेच्छाया विषये वैशेषिकवैयाकरणयोर्मत समानमेवोपलभ्यते। भेदस्त्वियानेव वर्त्तते यद्विषयस्य सान्निध्ये सति चित्तमेवेच्छादिरूपेण परिणमति। यथोक्तम्—**चित्तस्य द्रव्यरूपो वृत्त्याख्यपरिणाम इन्द्रियप्रणाल्या निर्गत्य विषयेण सयुज्य सूक्ष्माऽवस्थारूपविषयवासनावशात् तत्तद्विषयाऽऽकारेण परिणमते** (वै० सि० लघु० म० पृ० २११) इति।

॥ इति इच्छा ॥

## (१६) द्वेषः

**द्वेषस्य सिद्धिः—**

आदौ वैशेषिकस्य मतमुपन्यस्यते । तथा हि—विरोधिन उत्कर्षं दृष्ट्वा स्वस्याऽपकर्षञ्च कश्चिद् द्वेष्टि । स जनो विरोधिन पुरत स्थितमवेक्ष्य ज्वलितमिव स्वात्मानमनुभवति । यथा सङ्गिरते वाचस्पतिमिश्र —**परसम्पदुत्कर्षो हि हीनसम्पदं पुरुष दु.खाकरोति** (सा० का० २) इति । अत एवैताम्शमात्मसन्तापमसहमानोऽहमेन हन्मीति ब्रूते । यथा युधिष्ठिरस्योत्कर्षं निरीक्ष्य दुर्योधनो द्वेष्टि स्म येन त्रयोदशवर्षपर्यन्तमरण्यक्लेशमनुबभूवु पाण्डवा ।[1]

अथ द्वेषो द्वेष्टुरात्मनि समवायेनाऽऽत्ममनसो सन्निकर्षमहिम्ना उद्भवति । आत्ममनसो सन्निकर्षश्च दु खस्मृतेरपेक्षा[2] कृत्वैव द्वेष्टुरात्मनि द्वेष जनयितु प्रभवति । यथोक्तम्—**प्रज्वलनात्मको द्वेषः । यस्मिन् सति प्रज्वलितमिवाऽऽत्मान मन्यते स द्वेषः । स चाऽऽत्ममनसो. सयोगाद् दु खापेक्षात्स्मृत्यपेक्षाद्वोत्पद्यते** (प्र० पा० भा० पृ० ६३७) इति । इदमेवाऽऽह विश्वनाथ — **द्विष्टसाधनताबुद्धिर्भवेद् द्वेषस्य कारणम्** (भा० परि० १४९ क) इति ।

**द्वेषस्य भेदाः—**

स च द्वेषोऽनेकविध , क्रोधद्रोहमन्य्वक्षमाऽमर्षभेदात् । अत्र क्रोध —शरीरेन्द्रियाऽऽदिविकारहेतु, क्षणमात्रभावी द्वेषरूप । द्रोह —अलक्षितविकारश्चिरानुबद्धाऽपकाराऽवसानो द्वेषरूप । मन्यु —अपकृतस्य प्रतिकाराऽसमर्थस्याऽन्तर्निगूढो द्वेषरूप । अक्षमा—परगुणद्वेषरूप । अमर्ष —स्वगुणापरिभवसमुत्थो द्वेषरूप. । यथोक्तम्—**क्रोधो द्रोहो मन्युरक्षमाऽमर्ष इति द्वेषभेदा** (प्र० पा० भा० पृ० ६३७) इति ।

**व्याकरणदृशा द्वेषस्य समर्थनम्—**

अथ व्याकरणदृशा द्वेषस्य विवेचना प्रस्तूयते । इमे द्वेपघटिते सूत्रे, द्वेषसम्बद्धञ्च । तथा हि—

| | |
|---|---|
| १—**द्विषोऽमित्रे** | पा० सू० ३।२।१२१ |
| २—**द्विषश्च** | पा० सू० ३।४।११२ |
| ३—**क्रुधद्रुहेर्ष्यासूयार्थाना य प्रति कोप** | पा० सू० १।४।३७ |

द्वेषणमिति व्युत्पत्तौ **द्विष अप्रीतौ** (२।३) इति धातोः **भावे** (पा० सू० ३।३।१८) इति सूत्रेण भावे घञि (द्विष+घञ्)=द्वेष इति निष्पद्यते । अस्य लक्षण वैशेषिकैर्यादृशमास्थितम्, तादृशमेव शाब्दिकैरप्यनुमन्यते अप्रतिषिद्धञ्चाऽनुमत भवतीति न्यायात् । अस्य भेदा अपि वैशेषिकवच्छब्दशास्त्रेऽपि सन्तीत्यवधार्य्यते । ।। इति द्वेष ।।

१. द्र० म० भा० । २ स्मृतिरपि द्वेषादुपजायते, योऽस्य द्वेष्टि, स त सतत स्मरति । न्या० कन्दली टी० प्र० पा० भा० पृ० ६७७ ।

## (१७) प्रयत्नः

**प्रयत्नस्य सिद्धि.—**

अत्राऽऽदौ वैशेषिकस्य मत प्रदर्श्यते। तथा हि—अभिप्रेतस्य कस्यचिदपि वस्तुनोऽवाप्तये शरीराऽभ्यन्तर आत्ममनसो सन्निकर्षात् प्रयत्न उद्भवति येन प्राणिना हिताऽहितप्राप्तिपरिहाररूप कर्म प्रवर्त्तते। एतेन कर्मणाऽभिप्रेतस्य वस्तुनो ग्रहणम्, अनभिप्रेतस्य वस्तुन परिहारश्च भवति। अयमेव प्रयत्न उत्साहसरम्भाभ्यामपि गृह्यते।

**प्रयत्नस्य भेदाः—**

स च प्रयत्नो द्विविध, जीवनपूर्वकेच्छाद्वेषपूर्वकभेदात्। अत्र जीवनपूर्वक — सुषुप्त्यवस्थायामपि सुप्ताना प्राणिना प्राणाऽपानादिवायूना प्रवर्त्तक, जाग्रदवस्थायामन्त करणस्य चक्षुरादिभिरिन्द्रियान्तरै सह सम्बन्धनिमित्तकश्च। अस्य जीवनपूर्वकस्याऽऽत्ममनसो. सम्पर्काद्धर्माऽधर्मयोरपेक्षा कृत्वैवोत्पत्तिर्भवति।

इच्छाद्वेषपूर्वकस्तु प्रयत्नोऽभिप्रेताऽनभिप्रेतयोर्वस्तुनोर्ये प्राप्तिपरिहाराऽऽत्मिके क्रिये भवत, एतयो. क्रिययो प्रयोजन शरीरस्य स्थितेर्निमित्तकश्च। तच्चाऽऽत्ममनसो सन्निकर्षादिच्छाद्वेषयोरपेक्षा कृत्वैव समुत्पद्यते[1]। इद स्पष्ट भवति विश्वनाथस्य कारिकया—

**प्रवृत्तिश्च निवृत्तिश्च तथा जीवनकारणम्॥**
**एवं प्रयत्नत्रैविध्यं तान्त्रिकैः परिकीर्त्तितम्।**
**चिकीर्षा कृतिसाध्येष्टसाधनत्वमतिस्तथा॥**
**उपादानस्य चाऽध्यक्ष प्रवृत्तौ जनक भवेत्।**
**निवृत्तिस्तु भवेद् द्वेषाद् द्विष्टसाधनताधियः॥**
**यत्नो जीवनयोनिस्तु सर्वदातीन्द्रियो भवेत्।**
**शरीरे प्राणसञ्चारे कारणं परिकीर्त्तितम्॥**

(भा० परि० १४९ ख १५२) इति।

एते च सुखदुःखेच्छाद्वेषप्रयत्ना आत्मन सिद्धौ कारणानि भवन्ति। यथोक्त कणादेन—

**सुखदुःखेच्छाद्वेषप्रयत्नाश्चाऽऽत्मनो लिङ्गानि।**

(वै० सू० ३।२।४) इति[2]।

---

१. द्र०—प्र० पा० भा०, पृ० ६३८॥
२ गो० सू० १।१।७।

**व्याकरणदृशा प्रयत्नस्य समर्थनम्—**

अथ व्याकरणदृशा प्रयत्नो विचार्य्यते । इद प्रयत्नघटित सूत्रम् । तथा हि—

१—**तुल्यास्यप्रयत्न सवर्णम्** पा० सू० १।१।९

प्रयतनमिति व्युत्पत्तौ **यती प्रयत्ने** (१।३०) इति धातो. **यज-याच-यत-विच्छ प्रच्छ रक्षो नङ्** (पा० सू० ३।३।९०) इति सूत्रेण नङि (यत्+नङ्)= यत्नमिति सिध्यति । प्र+यत्नम्=प्रयत्नम् ।[1]

अस्य प्रयत्नस्य यादृश लक्षणम्, यादृशाश्च भेदा वैशेषिकैरास्थिता तादृशमेव लक्षणम्, तादृशा एव भेदाश्च वैयाकरणैरप्यभ्युपगम्यन्त एवेति निश्चीयते, अप्रतिषिद्धञ्चाऽनुमत भवतीति न्यायात् ।

॥ इति प्रयत्नः ॥

---

१. प्रकृष्टो यत्नः प्रयत्न ।

## (१८) गुरुत्वम्

**गुरुत्वस्य सिद्धिः—**

अत्राऽऽदौ वैशेषिकस्य मतमुपन्यस्यते । तथा हि—प्रक्षिप्तानां लोष्टाऽऽदीनामूर्ध्वगमनमधोगमनञ्च भवति । वृन्ते संलग्नस्य फलस्याऽधोगमनं न भवति, संलग्नताया अभावे त्वेतस्यैव फलस्य वृन्तादधःपतनम् । प्रयत्नवन्तः पक्षिणो नभस्युड्डीयमाना संलक्ष्यन्ते, प्रयत्नशून्याश्चैते तथा न । प्रक्षिप्ता अम्बुकणा ऊर्ध्वं गत्वाऽधः पतन्ति ।

एतेषामधःपतनस्य यदसाधारणं कारणम्, तदेव गुरुत्वम् । न हि गुरुत्वमन्तरा एतेषां पतनक्रिया सम्भवति । यथोक्तं कणादेन—**संयोगाऽभावे गुरुत्वात्पतनम्** (वै० सू० ५।१।७) इति । अत्र संयोगः=प्रतिबन्धकः । तस्याऽभावे सति गुरुत्वमहिम्ना कस्यचिद् वस्तुनः पतनक्रिया जायते । अत एव वृन्ते संलग्नस्य फलस्य तावत्पतनक्रिया न भवति, यावद् वृन्तफलयोः संयोगरूपस्य प्रतिबन्धकस्याऽभावो न भवति । एवं गगने समुड्डीयमानानां पक्षिणां प्रयत्न एव पतनस्य प्रतिबन्धकः । प्रक्षिप्तानां काण्डाऽऽदीनां वेगाख्यसंस्कार एव पतनस्य प्रतिबन्धकः । एतेषां प्रतिबन्धकानामभावे सति गुरुत्वं पतनक्रियां जनयत्येव । व्याख्यातञ्च शङ्करमिश्रेण—**संयोगपदेन प्रतिबन्धकमात्रमुपलक्षयति । तेन प्रतिबन्धकाऽभावे गुरुत्वादसमवायिकारणात्पतनम् =अधःसंयोगफलिका क्रिया जायते । अत्र गुरुत्ववति फलाऽऽदौ प्रतिबन्धकः संयोगः, विहङ्गमादौ तु विधारकः प्रयत्नः पतनप्रतिबन्धकः । काण्डाऽऽदौ क्षिप्ते संस्कार एव पतनप्रतिबन्धकः । एतेषामभावे गुरुत्वाऽधीनं पतनमित्यर्थः** (उप० ५।१।७) इति ।

अपि चाऽऽह कणादः—**संस्काराऽभावे गुरुत्वात्पतनम्** (वै० सू० ५।१८) इति । सूत्रेऽस्मिन् संस्काराऽभावः=वेगाख्यसंस्काराऽभावः, तस्मिन्निति । गुरुत्वात्पतनक्रिया जायते । यथा—प्रक्षिप्तलोष्टबाणाऽऽदीनां गुरुत्वात् पतनम् । इदमेवैतद्व्याख्यानादपि सिध्यति—**गुरुत्वं संस्कारेण प्रतिरुद्धं पतनं नाऽजीजनत् । अथ प्रतिबन्धकाऽभावे तदेव गुरुत्वं पतनं करोति** (उप० ५।१।१८) इति ।

अपि चाऽऽह कणादः—**अपां संयोगाऽभावे गुरुत्वात्पतनम्** (वै० सू० ५।२।३) इति । अस्मिन् सूत्रे संयोगाऽभावे=मेघसंयोगस्य नाशे सति । अपाम्=जलानाम्, गुरुत्वाद्=तदाख्याऽसमवायिकारणात् । पतनम्=अधोगमनम् । इदं स्पष्टं भवत्येतत्सूत्रस्य व्याख्यानाद्—**अपां यत्पतनं वर्षणरूपं तद्गुरुत्वाऽसम-**

वायिकारणम् । तत्संयोगस्य मेघसंयोगस्याऽभावे सति भवति । तेन संयोगाऽभावस्तन्निमित्तकारणम् (उप० ५।२।३) इति[1] ।

**गुरुत्वस्य प्रत्यक्षत्वाऽभाव —**

प्रत्यक्ष प्रति रूपत्वादिपञ्चकाऽन्यतम कारण भवति । अत एव यस्य द्रव्यस्य रूपत्वादिपञ्चकाऽन्यतमम्, तस्यैव द्रव्यस्य प्रत्यक्ष भवति । यथा घटाऽऽदीनाम् । गुरुत्वस्य प्रत्यक्ष न भवति, रूपत्वाऽऽदिपञ्चकाऽन्यतमत्वाऽभावात् । नहि गुरुत्वे रूपत्वादिपञ्चकाऽन्यतम व्यवतिष्ठते, **गुणे गुणाऽनङ्गीकारात्** । यथोक्त कणादेन—**तस्याऽभावादव्यभिचार** (वै० सू० ४।१।१०) इति । अस्मिन् सूत्रे तस्य=रूपत्वादे । अभावात्=रूपत्वादेर्गुरुत्वेऽसत्त्वात् । अव्यभिचार=अव्यतिरेक । स च रूपत्वाद्यन्यतमेष्वेव न त्वेतेभ्यो भिन्नेषु । तथा च गुरुत्वस्य रूपत्वाऽऽदिभ्यो बहिर्भूतत्वाद् व्यतिरेकत्वमेव । तस्मान्नैतस्य गुरुत्वस्य प्रत्यक्ष भवति रूपत्वाद्यन्यतमत्वाऽभावात् । इदमेवैतत्सूत्रव्याख्यानादपि स्पष्ट भवति । तथा ह्येतद् व्याख्यानम्—**एकैकेन्द्रियग्राह्यत्व प्रति रूपत्वादीना पञ्चानां जातीनामव्यभिचारो नियम एव यत्रैव रूपत्वादिपञ्चकाऽन्यतम तत्रैव बाह्यैकैकेन्द्रियग्राह्यत्व तद् व्यतिरेकात्** (उप० ४।१।१०) इति । इदमेवाऽऽह विश्वनाथोऽपि—

> **अतीन्द्रिय गुरुत्व स्यात् पृथिव्यादि द्वये तु तत् ।**
> **अनित्ये तदनित्य स्यान्नित्ये नित्यमुदाहृतम् ॥**
> **तदेवाऽसमवायि स्यात् पतनाख्ये तु कर्मणि ॥**
>
> (भा० परि० १५३-१५४ क) इति ।

**व्याकरणदृशा गुरुत्वस्य समर्थनम्—**

अथ व्याकरणदृशा गुरुत्व विचार्य्यते । तथा हि—तदेव गुरुत्व वैयाकरणै स्वीक्रियते, यद् वैशेषिकैरास्थितम् । प्रदर्श्यते चैतत् । कस्यचिद् द्रव्यस्य गुरुत्व तुलाया उच्चावचतयाऽस्य द्रव्यस्याऽन्यद् गुरुत्वमस्य द्रव्यस्याऽन्यद्गुरुत्वमिति विज्ञायते । यथाऽऽह पतञ्जलि—**इह समाने वर्ष्मणि परिणाहे चाऽन्यत्तुलाग्रं भवति लौहस्य, अन्यत्कार्पासाना यत्कृतो विशेषस्तद् द्रव्यम्** (म० भा० पा० सू० ४।१।११९) इति । अत्र यत्कृतो विशेष=गुरुत्वकृतविशेष । इदञ्च स्पष्टीकृत कैयटेन—**तुलाग्रस्याऽन्यथात्व नामोन्नामलक्षणम्, गुरुत्वभेदात् । गुरुत्वस्य समवायिकारणं द्रव्यम्** (प्र० पा० सू० ५।१।१।११९) इति ।

**द्रव्याणामधःपतनस्य गुरुत्वं कारणम्—**

गुरुत्वमहिम्नैव प्रक्षिप्तस्येषुलोष्टादेरध पत न भवति । यथोक्तम्—**स्थानेऽ-**

---

[1] द्र०—प्र० पा० भा०, पृ० ६४० ।

न्तरतमः (पा० सू० १।१।५०) इति सूत्रस्य भाष्ये पतञ्जलिना—लोष्ट प्रक्षिप्तो बाहुवेग गत्वा नैव तिर्यग्गच्छति, नोर्ध्वमारोहति। पृथिवीविकार पृथिवीमेव गच्छत्यान्तर्यत (म० भा० १।१।५०) इति। अत्राऽऽन्तर्यत = गुरुत्वाऽऽकर्षणात इति[1]।

इदमेवाऽऽह भर्तृहरिर्हेलाराजश्चाऽपि। तथा ह्येतयोर्वचनमुद्ध्रियते—

यथा तुलायां हस्ते वा नाना द्रव्य व्यवस्थितम्।
गुरुत्व परिमीयेत कालादेवं क्रियागति ॥ वा० प० ३।९।२८ इति ॥
अविनाशो गुरुत्वस्य प्रतिबन्धे स्वतन्त्रता।
दिग्विशेषादवच्छेद इत्याद्या भेदहेतव ॥ वा० प० ३।७।१५० इति ॥

सुवर्णरजताऽऽदिद्रव्यसमवेतं गुरुत्वमेक एव तुलादण्डो रेखासूत्रसम्बन्धोपहित-भेदो यथा पलादिभावेन परिच्छिनत्ति, तथा कालोऽपि स्वशक्तियोगाद् वैश्वरू-प्यमनुभवन् निमेषादिक्रियोपहितं नानात्व क्रियासन्तान चिराऽचिरादिभावेन परि-मिमीते, अभ्यासाऽतिशयवतां वणिजा हस्तो द्रव्याणा गुरुत्वविशेष परिच्छिनत्ति। (वा० प० हेला० ३।९।२८) इति।

पर्यङ्के शेत इति शयितुर्गुरुत्वप्रतिबन्धे स्वतन्त्र कर्त्ता आधारः। अन्यथा गुरुत्वात् पतनं भवेत् (वा० प० हे० ३।७।१५०) इति।

एतेन वैशेषिकशाब्दिकयोर्नये समानमेव गुरुत्वस्य विषये मतमस्तीति विज्ञायते।

॥ इति गुरुत्वम् ॥

---

१. क—अत्र गुणकृतमान्तर्यमादाय निर्दिष्टोऽर्थो ग्राह्य.।
ख—पृथिव्या विकारो हि लोष्टादिः। अत आन्तर्यत =पृथिव्या वैकार्यत इति।

## (१६) द्रवत्वम्

**द्रवत्वस्य सिद्धिः—**

अत्राऽऽदौ वैशेषिकस्य मतमुपन्यस्यते। तथा हि—वर्षर्त्तौजलस्य सूक्ष्मा― कणा परस्पर सयुज्य स्रोतोरूपेण प्रवहन्ति। नहि कारणमन्तरा अपा ये सूक्ष्मा―कणा, तेषा परस्पर सयोजिका स्यन्दनक्रिया प्रभवति। अत एतासामपा सूक्ष्माणा कणाना परस्पर सयोजक किमपि कारणमवश्यमेवाऽस्तीति गम्यते। तच्च कारण किम्? इति चिन्ताया द्रवत्वमित्यवधार्य्यते। यथोक्त कणादेन—**द्रवत्वात्स्यन्दनम्** (वै० सू० ५।२।४) इति। व्याख्यातमिद शङ्करमिश्रेण—**क्षितौ पतितानामपा बिन्दूना परस्परसंयोगेन महज्जलाऽवयविस्रोतोरूपं यज्जायते, तस्य यत् स्यन्दनं दूरससरण तद् द्रवत्वादसमवायिकारणादुत्पद्यते** (उप० ५।२।४) इति[1]।

**द्रवत्वस्य भेदाः—**

द्रवत्व द्विविधम्, नैमित्तिकसासिद्धिकभेदात्। अत्र नैमित्तिकम्=अग्निसयोगजन्यम्। यथा—घृतजतुमधूच्छिष्टताम्रसुवर्णादयोऽग्निसन्निकर्षाद् द्रवरूपा भवन्ति। यथोक्त कणादेन—**सर्पिर्जतुमधूच्छिष्टानामग्निसंयोगाद् द्रवत्वमद्भि. सामान्यम्** (वै० सू० २।१।६) इति। अस्य व्याख्यानादपि स्पष्ट भवति **सर्पिर्जतुमधूच्छिष्टानामग्निसयोगाद् द्रवत्वमस्ति, न तु सांसिद्धिकम्** (उप० २।१।६) इति। अपि चाऽऽह कणाद—**त्रपुसीसलोहरजतसुवर्णादीनामग्निसयोगाद् द्रवत्वमद्भि सामान्यम्** (वै० सू० २।१।७) इति। इदमेवोक्त व्याख्याकारेणाऽपि—**सुवर्णादीनामपि द्रवत्व नैमित्तिकमेव निमित्तस्याऽग्निसंयोगस्याऽन्वयव्यतिरेकसिद्धत्वात्** (उप० २।१।७) इति। एतेन त्रपुकास्यताम्रलोहरजतसुवर्णादयोऽग्निसन्निधानाद् द्रवन्तीति गम्यते।

सासिद्धिक द्रवत्वन्तु तद् भवति, यत् स्वत. प्रवहमाणम्। एतच्च सलिलमात्रवृत्ति। अत एव आप कस्यचित्प्रयत्नमन्तराऽपि स्वतः स्यन्दन्ते। यथोक्त कणादेन—**रूपरसस्पर्शवत्य आपो द्रवाः स्निग्धाः** (वै० सू० २।१।२) इति। सूत्रेऽस्मिन् आपो द्रवा=अपा द्रवत्व सासिद्धिकम्। यथाऽऽह शङ्कर-

---

१—द्रवत्व स्यन्दनकर्मकारणम्। प्र० पा० भा० पृ० ६४१।
आद्यस्यन्दनाऽसमवायिकारण द्रवत्वम्। तर्कसग्रह.।

मिश्र —**द्रवत्वञ्च सांसिद्धिकम्** (उप० २।१।२) इति[1]। इदमेवाऽऽह विश्व-नाथोऽपि—

> **सांसिद्धिकं द्रवत्वं स्यान्नैमित्तिकमथापरम् ॥**
> **सांसिद्धिकं तु सलिले द्वितीयं क्षितितेजसोः ।**
> **परमाणौ जले नित्यमन्यत्राऽनित्यमिष्यते ॥**
> **नैमित्तिकं वह्नियोगात्तपनीयघृतादिषु ।**
> **द्रवत्वं स्यन्दने हेतुर्निमित्तं सङ्ग्रहे तु तत् ॥** भा० परि० १५४ ख
> १५६ इति ॥

**व्याकरणदृशि द्रवत्वस्य समर्थनम्—**

अथ व्याकरणदृशा द्रवत्वं विचार्य्यते। इदं द्रवपदघटितं सूत्रम्, श्लोक-वार्त्तिकञ्च। तथा हि—

| | |
|---|---|
| १—द्रवमूर्त्तिस्पर्शयोः श्यः | पा० सू० ६।१।२४ |
| २—अद्रवं मूर्त्तिमत्स्वाङ्गं प्राणिस्थमविकारजम् | म० भा० पा० सू० ४।१।५४ श्लो० वा० इति। |

द्रवत्वस्य यादृशं लक्षणम्, यादृशाश्च भेदा वैशेषिकैरास्थिताः, तादृशमेव लक्षणम्, तादृशाश्च एव भेदाः शब्दशास्त्रेऽपि वर्त्तन्त इति पूर्वाचार्यकृतव्याख्यानादवगम्यते। यतो हि **अनुविपर्यभिनिभ्यः स्यन्दतेरप्राणिषु** (पा० सू० ८।३।७२) इति सूत्रस्य व्याख्यानं कुर्वता दीक्षितेन **अनुष्यन्दते—अनुस्यन्दते** वा जलमित्युदाहृतम्। तेनैतेन स्यन्दनक्रियाया आधारो जलम्। तस्य स्यन्दनं सांसिद्धिकम्।

किञ्च **स्यन्दू प्रस्रवणे** (१।८१०) इति धातुरपि जलस्य सांसिद्धिकं द्रवत्वं साधयति। यतो हि प्रस्रवणम्=संसरणम्। एतच्च जलस्यैव भवति। किञ्च **अद्रवमिति किमर्थम्? बहुलोहितिका** (म० भा० पा० सू० ४।१।५४) इति भाष्येण, **लोहितं रुधिरमुच्यते** (प्र० पा० सू० ४।१।५४) इति कैयटग्रन्थेन, **सुस्वेदा द्रवत्वात्** (सि० कौ० पा० सू० ४।१।५४) इति दीक्षितग्रन्थेन च रुधिर-श्रमबिन्द्वोः सांसिद्धिकं द्रवत्वं सिध्यति, जलीयांशत्वात्। श्रमबिन्दुस्तु जलमेव, जलीयांशत्वकथनन्तु रुधिरस्य कृते।

**द्रवमूर्त्तिस्पर्शयोः श्यः** (पा० सू० ६।१।२४) इत्यत्र **शीनं घृतमित्युदाहृतं** दीक्षितेन। एतेन वैयाकरणैर्घृतस्य नैमित्तिकं द्रवत्वमभ्युपेतं भवति, अग्नि-

---

[1] —सांसिद्धिकं द्रवत्वमपां विशेषगुणः। प्र० पा० भा० पृ० ६४२, सांसिद्धिकं जले। तर्कसंग्रह।

सयोगात्तस्य स्यन्दनात् । किञ्च **चार्थे द्वन्द्वः** (पा० सू० २।२।२९) इति सूत्रस्य प्रदीपे ताम्रस्याऽग्निसन्निकर्षाद् द्रवत्व भवतीत्युक्त कैयटेन। तथा हि तत्रत्य वचनम्—**वह्निसन्निधावेव ताम्रं द्रवरूपं भवति** (प्र० पा० सू० २।२।२९) इति ।

एतेन सुवर्णरजतलोहकास्यमधूच्छिष्टादीनामपि नैमित्तिकद्रवत्वम्, अग्नि-सनिकर्षादेतेषा स्यन्दनादिति गम्यते । तथा च वैशेषिकशाब्दिकयोर्नये द्रवत्व-विषयक मत समानमेवाऽस्तीति निश्चीयते ।

॥ इति द्रवत्वम् ॥

———

## (२०) स्नेहः

**स्नेहस्य सिद्धिः—**

अत्राऽऽदौ वैशेषिकस्य मतमुपन्यस्यते। तथा हि—गोधूमचूर्णसक्तुधूलिपटला, अपां संयोगे सति पिण्डीभवन्ति। एतेनाऽप्सु कश्चन गुणो वर्त्तते, यो विकीर्णानि चूर्णानि सङ्ग्रीकरोति। कः खलु स गुणः? इति चिन्तायां स्नेहाख्यो विशेषगुण एव निर्धार्य्यते। एष एव विकीर्णानामवयवानां पिण्डीं करोति। स्नेहो जलमात्र-वृत्तिरेव, न तु तैजसादिद्रव्यवृत्तिः। अत एव तैजसादिद्रव्यसंयोगे सत्यपि विकीर्णा अवयवा न पिण्डीभवन्ति, तत्र स्नेहाऽभावात्। यथोक्तं प्रशस्तपादाऽऽचार्य्येण—**स्नेहोऽपां विशेषगुणः संग्रहमृजादिहेतुः** (प्र० पा० भा० पृ० ६४५) इति।

स्नेहप्रकर्षाद् घृततैलवृत्तिस्नेहो वह्निं न नाशयति, प्रत्युत वर्द्धयत्येव। जल-वृत्तिस्नेहस्त्वग्निं नाशयति, स्नेहस्याऽपकृष्टत्वात्। यथोक्तम्—

**स्नेहो जले स नित्योऽणावनित्योऽवयविन्यसौ।**
**तैलाऽन्तरे तत्प्रकर्षाद् दहनस्याऽनुकूलता॥** (भा० परि० १५७) इति।

**व्याकरणदृशि स्नेहः—**

अथ व्याकरणदृशा स्नेहो विचार्य्यते। इमे स्नेहपदघटिते सूत्रे, तथा हि—
१—लीलोर्नुग्लुकावन्यतरस्यां स्नेहविपातने पा० सू० ७।३।३९
२—स्नेहने पिषः पा० सू० ३।४।३८

शब्दशास्त्रे स एव स्नेहः, यो वैशेषिकैः स्वीकृत इति पूर्वाचार्य्यस्य व्याख्या-नाद् गम्यते। यतो हि **लीलोरिति** सूत्रस्य, **स्नेहने पिष** इति सूत्रस्य च **विलीनयति, विलालयति वा** घृतम्, उदपेषं पिनष्टि=उदकेन पिनष्टि, इति क्रमेणोदाहरणं प्रदत्तं दीक्षितेन। तेनैतयोर्घृतजलवृत्तिः स्नेहोऽस्तीति निश्चीयते। इङ्गुदीप्रभृतीनां यो द्रवरूपो विकारः स स्नेहः[1]। तेनैतेन तैलवृत्तिः स्नेहोऽस्तीति गम्यते। घृत-तैलयोः स्नेहोऽस्तीति भर्तृहरिणाऽप्युक्तम्।

**स्नेहाऽन्तरादवच्छेदस्तथाऽऽसक्तेः प्रतीयते।**
**तैलेन भोजने प्राप्ते न त्वन्यदुपसेचनम्॥** वा० प० ३।१४।२९८ इति।

---

१—स्निह्यन्त्यनेनेति स्नेहो द्रवरूप इङ्गुदीनां विकारः। पदमञ्जरी, पा० सू० ३।४।३८।

उक्तमेव ब्रूते हेलाराजः—**भोजनमतैलेन विधेयमिति चोदिते तैलप्रतिषेधसामर्थ्यात्, सर्पिरादिस्नेहान्तराद्धेतोरवच्छेदो विशेषणं भोजनस्य प्रत्यासत्तेरेकजातीयत्वात् प्रतीयते, न दध्ना पयसा वा** (हेला० वा० प० ३।१४।२९८) इति ।

एतेन शब्दशास्त्रे वैशेषिकसम्मत एव स्नेहो गृह्यते, न तु ततो विलक्षण इति गम्यते ।

अत्रेदमपि विज्ञेय यद् **'ञिमिदा स्नेहने'** (१।७३०) इति, **'तिल स्नेहने'** (६।७३) इति, **'ष्णिह प्रीतौ'** (४।९२) इत्यादयो धातवश्चाऽपि स्नेहाऽर्थमाचक्षते ।

॥ इति स्नेह ॥

## धर्मः (२१)

**धर्मस्य विवेचना—**

अत्राऽऽदौ वैशेषिकस्य मतमुपन्यस्यते। तथा हि—सर्वे हि प्राणिन सुख कामयन्ते। एतेषा या. खलु प्रवृत्तयो दृश्यन्ते, तासा प्रवृत्तीनामसाधारण कारण सुखकामनैवाऽस्ति, सर्वेषामभिप्रेतत्वात्। यदि सुखकामना न स्यात्तर्हि कोऽपि जन कस्मिश्चिदपि कर्मणि न प्रवर्त्तेत। यतो हि नहि प्रयोजनमन्तरा कस्यचिदपि प्रवृत्तिर्भवति। प्रयोजनञ्चाऽत्र सुखकामनैव सर्वेषा प्राणिनामन्तर्हिततया परि-लक्ष्यते। अत एव प्रयोजनोद्देश्यमूलिका खलु प्रवृत्तय इति कथ्यन्ते[1]।

सुख ह्यात्ममनसो सन्निकर्षादात्मनि जायते। यदाऽऽत्ममनसो सम्बन्धो न भवति, तदा सुखस्याऽनुभूतिरपि न भवति। एतेनैतस्य जन्यत्व गम्यते। यतो हि जन्यस्यैव कदाचित्प्रतीति, कदाचिदप्रतीतिश्च भवति। तथा च यत सुखस्य जन्य-त्वम्, अतोऽस्य किञ्चित्कारणमप्यवश्यमेवाऽस्तीति निश्चीयते। यत्र कार्यमुत्पद्यते तत्रैव समानाऽधिकरणेन कारणमुपतिष्ठते। एतच्च कारण धर्म एव समानाऽधि-करण सम्भवति। यतो हि सुखस्याऽनुभव आत्मनि भवति तत्रैव धर्मोऽपि व्यव-तिष्ठते।

किञ्च यथा सुखस्य निमित्तकारण धर्म, तथा ज्ञानस्यापि। अत्र ज्ञानपदेन तत्त्वज्ञान गृह्यते। पदार्थाना तत्त्वज्ञानादेव **आत्यन्तिकी दु खनिवृत्तिर्भवति**। तया निश्श्रेयसस्याऽधिगम। तथा च तत्त्वज्ञानमूलकमेव **नि श्रेयस** भवति।

एवञ्च यस्मात्तत्त्वज्ञान नि श्रेयसाऽवाप्तिश्च भवति, स एव धर्म इति कथ्यते। एतदेवाऽभिप्रेत्य कणादो ब्रूते—**यतोऽभ्युदयनिश्श्रेयससिद्धिः स धर्मः** (वै० सू० १।१।२) इति। सूत्रेऽस्मिन्—अभ्युदय.=तत्त्वज्ञानम्। निश्श्रेयसम्= **आत्यन्तिकी दुःखनिवृत्तिः**। एतच्च स्पष्ट भवत्येतद्व्याख्यानाद्-**अभ्युदयस्तत्त्व-ज्ञानम्, निश्श्रेयसमात्यन्तिकी दु खनिवृत्तिः। तदुभय यतः स धर्मः। अभ्युदय-द्वारकं निश्श्रेयसम्** (उप० १।१।२) इति। इदमेवाऽऽह प्रशस्तपादोऽपि—**धर्मः पुरुषगुणः। कर्त्तु प्रियहितमोक्षहेतु, अतीन्द्रियः** (प्र० पा० भा० पृ० ६५६) इति। अत्र-प्रियम्=सुखम्। हितम्=सुखसाधनम्। मोक्ष=नवानामात्म-

१—प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते। वै० सि० लघुम० प्रभाटी० पृ० ३ उद्०, अपि च। साहि० दर्पणस्य विमलेति नाम्नी टी० पृ० ६ उद्०।

विशेषगुणानामत्यन्तोच्छेदस्तेषा हेतुः । यथोक्तम्—**प्रियं सुखम्, हितं सुखसाधनम्, मोक्षो नवानामात्मविशेषगुणानामत्यन्तोच्छेदस्तेषां हेतुः । कर्त्तुः प्रियादीनामेव यो हेतु स धर्मः** (न्या० कन्दली टी० पृ० ६६०) इति ।

**धर्मस्य जन्यत्वसिद्धि —**

यत धर्मोऽभ्युदयनिश्श्रेयसे जनयति, अत एतयोर्निमित्तकारण सोऽस्तीति । तथा धर्मोऽपि श्रुतिस्मृतिविहितकर्मणाऽऽत्मनि समवायेन जायते । **अत एव शास्त्रविहितकर्मजन्यो धर्म** इति कथ्यते । यथोक्तमन्नम्भट्टेन—**विहितकर्मजन्यो धर्म** (तर्कसग्रह ) इति । इदमेव व्याख्यायि विश्वनाथेनाऽपि—

**धर्माऽधर्मावदृष्टं स्याद्धर्मः स्वर्गाऽऽदिसाधनम् ।**
**गङ्गास्नानादियागादिव्यापारः स तु कीर्त्तितः ॥**

(भा० परि० १६१) इति ।

एतेन शास्त्रविहितयागादिकर्मणा धर्मो जन्यते । तेनैतस्य निमित्तकारण यागादिकर्मैवास्तीति निश्चीयते ।

**व्याकरणदृशि धर्मः—**

अथ व्याकरणदृशा धर्मो विचार्य्यते । इमानि धर्मपदघटितानि सूत्राणि । तथा हि—

१—धर्म चरति—पा० सू० ४।४।४१
२.—धर्मपथ्यर्थ—पा० सू० ४।४।९२
३—नौवयोधर्म—पा० सू० ४।४।९१
४—धर्मादनिच्—पा० सू० ५।४।१२४
५—धर्मशील—पा० सू० ५।२।१३२

शब्दशास्त्रेऽपि स एव धर्म यो वैशेषिकैरास्थित । स च धर्म प्राणिनामभ्युदय निश्श्रेयसञ्च साधयति । अस्य धर्मस्याऽऽविर्भावो यथा यागादिकर्मणा भवति, तथा साधुशब्दस्य ज्ञानपूर्वकप्रयोगादपि । व्याख्यातञ्चैतत् पतञ्जलिना—**किं पुन. शब्दस्य ज्ञाने धर्मः, आहोस्वित् प्रयोगे ? ज्ञाने धर्म इति चेत्तथाऽधर्मोऽपि प्राप्नोति । यो हि शब्दाञ्जानाति, अपशब्दानप्यसौ जानाति । यथैव शब्दज्ञाने धर्म एवमपशब्दज्ञानेऽप्यधर्म. । यद्यप्यपशब्दज्ञानेऽधर्मस्तथापि यस्त्वसौ शब्दज्ञाने धर्मस्तेन च स दोषो निर्घानिष्यते, भूयसा चाऽभ्युदयेन योगो भविष्यतीति** (म० भा० पस्पशा०) इति ।

किञ्चैकोऽपि शब्दो व्याकरणशास्त्रज्ञानपूर्वको यथावसर ताल्वादिस्थानैः केनचित् सम्यगुच्चारितो भवेच्चेदुच्चारयितुरात्मनि भूयासो धर्मा प्रभवन्ति ।

१—अस्य भाष्यवचनस्य नागेशेन मञ्जूषायामपि स्पष्टीकरण कृतम् । द्र० वै० सि० लघु म० पृ० ६५ ।

तेन स शब्द: प्रयोक्त्रे कामधुग् भवति। यथोक्त पतञ्जलिना—**एकः शब्द सम्यग्ज्ञातः, शास्त्रान्वित:, सुप्रयुक्त, स्वर्गे लोके च कामधुग्भवतीति**। **यद्येकः शब्दः सम्यग्ज्ञात शास्त्रान्वित:, सुप्रयुक्तः स्वर्गे लोके च कामधुग्भवति किमर्थं द्वितीयस्तृतीयश्च प्रयुज्यते? न वै कामाना तृप्तिरस्ति** (म० भा० पा० सू० ६।१।८४) इति[१]।

एवञ्च यस्याऽर्थस्याऽवबोधो यथा साधुशब्देन भवति, तथाऽसाधुशब्देनाऽपि। तथा चाऽभिप्रेतस्याऽर्थस्य साधुशब्देन बोध. क्रियते चेत् प्रयोक्ता महान्तमभ्युदय लभते। यथाऽऽह पतञ्जलि.—**समानायामर्थाऽवगतौ शब्देन चाऽपशब्देन च धर्मनियमः क्रियते—शब्देनैवाऽर्थोऽभिधेयो नाऽपशब्देनेति। एवं क्रियमाणमभ्युदयकारि भवति** (म० भा० १।१। पस्पशा०) इति।

**स्वमतपुष्टये शास्त्रान्तरमतस्योपन्यासः—**

मीमासकोऽपि स एव धर्म, यो यागादिकर्मणा जायत इति मन्यते। यागादिकर्मजन्यो धर्मो यागकर्त्तुरभ्युदय निश्श्रेयसञ्च साघ्नोति। यथोक्तम्—**चोदनालक्षणोऽर्थो धर्मः** (मी० सू० १।१।२) इति। अत्र-चोदना-**स्वर्गकामो यजेत, पुत्रेष्टिकामः पुत्रेष्टियागं कुर्य्यादिति विधिवाक्यबोधितो धर्म**:। स च धर्म स्वर्गादि सुख यागकर्त्रे प्रयच्छति। तेनैतेन यागादिकर्मकर्त्तु श्रेयो भवति। तथा च येन श्रेयसो निष्पत्तिर्भवति, स एव धर्म इति कथ्यते। यथाऽऽह शबरस्वामी **य एव श्रेयस्कर:, स एव धर्मशब्देनोच्यते** (शा० भा० १।१।२) इति।

किञ्च तत्त्वज्ञान निश्श्रेयसञ्च पारमार्थिक फल धर्मादेवाऽऽविर्भवति। यागादिकर्मणा जनितेन धर्मेण स्वर्गादिसुखञ्च निष्पद्यते। एतेभ्य फलेभ्य फलेप्सुना कृच्छ्चान्द्रायणव्रत यागादि कर्म च साध्यते। अत्र फलेप्सोर्या प्रवृत्तिर्भवति, एतस्यां प्रवृत्ते प्रवर्त्तक शास्त्रस्य वचनमेव[२]। एव शास्त्रस्य वचनादेव मासभक्षणादौ निषिद्धे कर्मणि प्रवृत्तस्य कस्यचित्पुरुषस्य मासभक्षणादिनिषिद्धकर्मणो निवृत्तिरपि। एतेन शास्त्रस्य वचनात्कस्मिंश्चित्कर्मणि प्रवृत्ति, कस्माच्चित् कर्मणो निवृत्तिश्च भवति। तथा च प्रवृत्तिनिवृत्ती एव धर्मौ स्त इति गम्यते। यथोक्तम्—**अलौकिकत्वाददृष्टार्थत्वादप्रवृत्ताना यज्ञादीनां शास्त्रात्प्रवर्त्तनम्, लौकिकत्वाददृष्टार्थत्वाच्च प्रवृत्तेभ्यश्च मासभक्षणादिभ्यः शास्त्रादेव निवारणं धर्मः** (कामसू० अधि० १ अ० २ सू० ७) इति।

॥ इति धर्म ॥

---

१ अस्य भाष्यवचनस्य नागेशेन मञ्जूषायामपि स्पष्टीकरण कृतम्।
द्र० वै० सि० लघुम० पृ० ६५

२. स्वर्गकामो यजेत, सन्तानकामो पुत्रेष्टि यजेतेत्यादिविधिवाक्यम्।

## (२२) अधर्म

**अधर्मस्य विवेचना—**

अत्राऽऽदौ वैशेषिकस्य मत प्रदर्श्यते। तथा हि यथाऽभ्युदयनिश्श्रेयसयोर्निमित्त कारण धर्म आत्मनो विशेषगुण, तथाऽधर्मोऽपि दुःखसाधनदु खयोर्निमित्त कारणमिति विज्ञायते। अत एव धर्मजन्य सुखमिवाऽधर्मजन्य दु खमनुभवन्ति लोका। स चाऽधर्मो नैकविध, प्रत्युत श्रुतिस्मृतिनिषिद्धहिंसाऽनृतस्तेयपरस्त्रीगमनादिकर्मजन्यो नानाविध। तथा च नानाविधा अधर्मा, नानाविधानि दु खानि जनयन्ति। अत एव यस्याऽऽत्मनि यादृशोऽधर्मोऽस्ति, तस्याऽऽत्मनि तादृशमेव दु.ख जायते। यथा क्षेत्रे यादृशो बीजस्य वपनम्, बीजादङ्कुरोत्पत्ति तादृश्येव भवति। तथाऽस्मिञ्छरीरक्षेत्रे यो यादृश कर्म करोति, तेनैतेन कर्मणा तादृशमेव सुख दु ख वा फल प्रादुर्भवति। अत एव नानाविधदु खेन दु खिता लोका दृश्यन्ते। यथोक्तम्—**अधर्मोऽप्यात्मगुण। कर्त्तुरहितप्रत्यवायहेतुरतीन्द्रियोऽन्त्यदुःखसविज्ञानविरोधी। तस्य तु साधनानि शास्त्रे प्रतिषिद्धानि धर्मसाधनविपरीतानि हिंसानृतस्तेयादीनि। विहिताऽकरण प्रमादश्चैतानि दुष्टाऽभिसन्धिञ्चाऽपेक्ष्याऽऽत्ममनसोः सयोगादधर्मस्योत्पत्तिः** (प्र० पा० भा० पृ० ६७७) इति। अत्र—अहितम्=दु खसाधनम्। प्रत्यवाय =दु खम्। एतयोरधर्मो हेतु। यथोक्त न्यायकन्दलीकारेण—**कर्त्तुरहितं दु.खसाधनम्, प्रत्यवायो दुःखम्, तयोरधर्मो हेतुरिति**। इदमेवाऽऽह विश्वनाथोऽपि—

> **अधर्मो नरकाऽऽदीना हेतुर्निन्दितकर्मज।**
> **प्रायश्चित्तादिनाश्योऽसौ जीववृत्ती त्विमौ गुणौ॥**
>
> (भा० परि० १६३) इति।

**व्याकरणदृशि अधर्मः—**

अथ व्याकरणदृशा अधर्मो विचार्य्यते। तथा हि—अधर्मस्य यादृश लक्षण वैशेषिकैरास्थितम्, तादृशमेव लक्षण वैयाकरणैरपि स्वीक्रियते। यतो ह्यप्रतिषिद्धञ्चानुमत भवतीति न्यायात्।

एवञ्च यथा श्रुतिस्मृतिविहितेन कर्मणा धर्मस्योत्पत्ति, श्रुतिस्मृतिनिषिद्धेन हिंसादिकर्मणाऽधर्मस्योत्पत्तिर्भवति, तथाऽपशब्दोच्चारणेनाऽपि भवतीति शाब्दिको व्याचष्टे। यथोक्त पतञ्जलिना—**यो हि शब्दाञ्जानात्यपशब्दानप्यसौ जानाति। यथैव हि शब्दज्ञाने धर्मः। एवमपशब्दज्ञानेऽप्यधर्म। अथवा भूयानधर्मः प्राप्नोति। भूयासोऽपशब्दाः, अल्पीयांस शब्दा इति (म० भा० पस्पशा०) इति।**

॥ इत्यधर्म ॥

———

## (२३) संस्कारः

**संस्कारस्य विवेचना—**

संस्कारो हि मूर्त्तद्रव्यवृत्त्यतीन्द्रियो[1] धर्मविशेषः । स च कार्येणाऽनुमीयते । तथा ह्येतस्य कार्याणि—एवं हि दृश्यते यल्लोष्टशरकन्दुकाः प्रक्षिप्ताः सन्तो दूरं गच्छन्ति । भवति हि दृष्टश्रुताऽनुमितानामर्थानां **संस्मरणम्, सोऽयमिति** प्रत्यभिज्ञा च । तरूणां शाखायां आकर्षणादधोभवनम्, परित्यागे यथावस्थितञ्च परिलक्ष्यते । एतेषामेवंविधा याः क्रियाः प्रवर्त्तन्ते, तासां प्रवर्त्तकं किञ्चित्कारणमवश्यमेवाऽस्ति । तथा च यत एता दूरगमनादिक्रियाः प्रवर्त्तन्ते, अत एतासां क्रियाणां प्रवर्त्तकमस्ति संस्काराख्यं कारणमित्यवधार्य्यते । यथोक्तं कणादेन— **नोदनादाद्यमिषोः कर्म तत्कर्मकारिताच्च संस्कारादुत्तरं तथोत्तरञ्च** (वै० सू० ५।१।१७) इति । अत्र संस्कारः=वेगाख्यः संस्कारः ।

**संस्कारस्य भेदाः—**

संस्कारस्त्रिविधः, वेगभावनास्थितिस्थापकभेदात् । अत्र वेगो लोष्टाऽऽदीनां प्रक्षेपाद् दूरगमनस्य कारणम्, भावनाऽदृष्टश्रुताऽनुमितानामर्थानां स्मृतेः प्रत्यभिज्ञायाश्च कारणम्, स्थितिस्थापकश्च तरूणामन्यथावस्थापितायाः शाखायाः पूर्वाऽवस्थितिप्राप्तौ कारणम् । यथोक्तं विश्वनाथेन—

> **संस्कारभेदो वेगोऽथ स्थितिस्थापकभावने ।**
> **मूर्त्तमात्रे तु वेगः स्यात्कर्मजो वेगजः क्वचित् ।।**
> **स्थितिस्थापकसंस्कारः क्षितौ केचिच्चतुर्ष्वपि ।**
> **अतीन्द्रियोऽसौ विज्ञेयः क्वचित्स्पन्देऽपि कारणम् ।।**
> **भावनाख्यस्तु संस्कारो जीववृत्तिरतीन्द्रियः ।**
> **उपेक्षा नात्मकस्तस्य निश्चयः कारणं भवेत् ।।**
> **स्मरणे प्रत्यभिज्ञायामप्यसौ हेतुरुच्यते ।**

(भा० परि० १५८-१६१ क इति ।

---

१—संस्कारो धर्मस्तदभिव्यक्तिहेतवो मन्वादिस्मृतयः पुराणानि च ।
वा० प० १।१०, अम्बाकर्त्री

**वेगस्य भेदोपन्यासः—**

वेगो द्विविध· कर्मजवेगजभेदात्[1]। तत्राऽऽद्यो लोष्टाऽऽदीना प्रक्षेपादाद्येन कर्मणा लोष्टादौ समानाऽधिकरणेनोत्पद्यते वेगाख्य. सस्कारस्तेनैव कर्मणा स **वीचितरङ्ग** इव पूर्वपूर्वोपमर्दनेनोत्तरोत्तर आविर्भवति । अत एव **संस्कारादुत्तरं तथोत्तरमुत्तरञ्चेत्युक्त** कणादेन[2] । **अस्य** सस्कारस्य परिशेषो यदा भवति, तदा लोष्टाऽऽदीना दूरगमनक्रिया न प्रवर्त्तते, प्रत्युत तस्याऽभावात्तेषा लोष्टादीना भूमौ निपतनमेव भवति, गुरुत्वात् । सति वेगे लोष्टाऽऽदीना भूमौ निपातो न भवति यतो हि वेगो गुरुत्व प्रतिरुन्धे । अत एव नैको वेगाख्य सस्कार, तथा सति कदापि शरादेर्भूमौ निपतन न स्यात् । यत क्षितौ निपातो भवति शराऽऽदीनाम्, अत शरादावुत्तरोत्तरो नानाविधो वेगो जायते । तथा चैतस्याऽभावाद् गुरुत्वाल्लोष्टादीनामधोगमनमेव । यथोक्त कणादेन—**सस्काराऽभावे गुरुत्वात्पतनम्** (वै० सू० ५।१।१८) इति । इद व्याख्यायि शङ्करमिश्रेण—**ननु संस्कार एक एव चेत् कर्मसन्तानजनकः तदा कदाचिदपि शरपातो न स्यात्, कर्मजनकस्य सस्कारस्य सत्त्वादिति । अत आह** सस्काराऽभाव इति । **गुरुत्वं तावत्पतनकारणमनुवर्त्तमानमेव । तच्च गुरुत्वं संस्कारेण प्रतिरुद्धं पतन नाऽजीजनत् । अतः प्रतिबन्धकाऽभावे तदेव गुरुत्व पतन करोति**' (उप० ५।१।१८) इति ।

अपि च—**शराऽऽदौ हि नोदनजनितेन कर्मणा वेगो जन्यते, तेन च पूर्वनाशस्तत उत्तरं कर्म** (सि० मु० भा० परि० १५८) इति ।

द्वितीयस्तु—वेगवता कपालेन जनिते घटे यो वेगाख्य सस्कारो जन्यते स वेग इति कथ्यते । यथाऽऽह विश्वनाथ **यत्र वेगवता कपालेन जनिते घटे वेगो जन्यते स वेगजो वेगः** (सि० मु० भा० परि० १५८) इति ।

**भावना—**

आत्मनो विशेषगुणो भावना । सा च दृष्टश्रुताऽनुभूतानामर्थाना स्मृतिप्रत्यभिज्ञयोर्निमित्तकारणम् । अत एव केनचित्कश्चिद् दृष्ट, श्रुतोऽनुभूतो वाऽऽत्ममनसो. सयोगविशेषात्, सस्काराच्च दृष्टस्य, श्रुतस्याऽनुभूतस्य च स्मृतिरूपा बुद्धिर्जायते, दृष्टादीनामर्थाना सति सान्निध्ये सोऽयमिति प्रत्यभिज्ञाप्रत्ययोऽपि । यथोक्त कणादेन—**आत्ममनसो. संयोगविशेषात्मसस्काराच्च स्मृतिः** (वै० सू० ९।२।६) इति । सूत्रेऽस्मिन् आत्ममनसो. सयोगविशेष =प्रणिधानादिसन्निधानम् । एतस्मादात्मनि स्मृति· =विद्याविशेष उत्पद्यते । सस्कार =भावनाख्य सस्कार । एतस्मादपि स्मृति । व्याख्यातञ्च प्रशस्तपादाचार्य्येणाऽपि—**भावनासज्ञकस्त्वात्मगुणो दृष्टश्रुताऽनुभूतेष्वर्थेषु स्मृतिप्रत्यभिज्ञानहेतुर्भवति** (प्र० पा० भा० पृ० ६४.) इति ।

---

१—कर्मजवेगजभेदाद् वेगो द्विविध । सि० मु० भा० परि० १५८। ।
२—द्र० वै० सू० ५।१।१७,

**स्थितिस्थापक —**

अथ सस्कार स्पर्शवद्द्रव्येष्वेव तिष्ठति । अवयविनोऽन्यथाऽवस्थितोऽप्यवयवो यथावस्थितो भवति । यथा वृक्षादीनामवयविनामवयवभूताया शाखाया आकर्षणादधो गमन दृश्यते, परित्यागे च सति यथावस्थितमपि भवति । एवविधो व्यापारो नहि कारण विना भवति । एतस्य व्यापारस्य यत् कारण तदेव **स्थितिस्थापकाख्यः सस्कार** इत्युच्यते । यथाऽऽह प्रशस्तपादाचार्य्यः— **स्थितिस्थापकस्तु स्पर्शवद्द्रव्येषु वर्त्तमानो घनाऽवयवसन्निवेशविशिष्टेषु कालान्तराऽवस्थायिषु स्वाश्रयमन्यथाकृत यथावस्थितं स्थापयति** (प्र० पा० भा० पृ० ६५८) इति ।

**व्याकरणदृशि संस्कारः—**

अथ व्याकरणदृशा सस्कारो विचार्य्यते । इमानि सस्कारसम्बद्धानि सूत्राणि । तथा हि—

१—स्यदो जवे पा० सू० ६।४।२८ (जवो वेग.—सि० कौ०)
२—जु चङ्क्रम्य पा० सू० ३।२।१५० (वेगार्थको जुरिति सौत्रोऽय धातु )
३—वेदवेगवेष्टबन्धा. करणे । गणपाठ पा० सू० ६।१।१६०

य एव सस्कारो वैशेषिकैराम्नात , स एव वैयाकरणैरपि गृह्यते । तस्य ये भेदा वैशेषिकैरास्थिता , त एव शाब्दिकैरप्युररीक्रियन्ते । तथा च वेगाख्यस्य सस्कारस्य समुल्लेख पतञ्जलिना प्रादर्शि । तथा हि—**लोष्ट प्रक्षिप्तो बाहुवेगं गत्वा** नैव तिर्यग्गच्छति नोर्ध्वमारोहति । पृथिवीविकार पृथिवीमेव गच्छत्यान्तर्यत (म० भा० १।१।५०) इति । भाष्येऽस्मिन् वेग =वेगाख्य सस्कार ।

भावनाख्यसस्कारस्योल्लेख पुण्यराजेन प्रादर्शि—**बुद्धौ यदाहितं** पदार्थमात्रमनुभववशाद् बीज वासनारूप सस्कारस्वभावम् (वाक्यप० २।२६ टी०) इति। अत्र वासना=भावना । सा च सस्कार एवेति ।

यथा कस्यचिद्वस्तुनो दर्शनादात्मनि वस्तुनो भावनाख्य सस्कारो जायते, तथा शब्दस्य श्रवणादपि । यथोक्त भर्तृहरिणा—
**शब्देनाऽर्थस्य संस्कारो दृष्टाऽदृष्टप्रयोजनः** । वा० प० ३।३।३५ इति । व्याख्यातञ्च हेलाराजेन—**योऽर्थ शब्दात्प्रतीयते, स एव संस्कारनिमित्तम्** (हेला० ३।१४। १३९) इति ।

किञ्च—यथा स्मृतौ भावनाख्यसस्कारस्य कारणत्वम्, तथा **सुरभिचन्दनमि**त्यादौ ज्ञानलक्षणासन्निकर्षे सत्यपि **सोऽयमिति** प्रत्यभिज्ञाजन्यबोधेऽपि कारणत्वमस्तीति विज्ञायते । यथोक्तम्—**स्मृताविव सस्कार एव प्रत्यासत्तिः । सुरभि**

**चन्दनम्, सोऽयमित्यादि च संस्कारश्चक्षु.सन्निकर्षाद्युभयजन्य ज्ञानाऽन्तरमेवेति न स्मृतित्वानुभवत्वयोस्तत्र सङ्करः** (वै० सि० लघुम० पृ० २१८) इति ।

किञ्च यस्य वस्तुन कदाचिदनुभवो भवति, तस्यैव पश्चात्स्मृतिर्भवति । यथोक्त कैयटनागेशाभ्याम्—**पूर्वाऽनुभवाऽऽहितसस्कारोपजनितस्मृतिः** (प्र० ७।१।२१) इति । अपि च—**अनुभवसदृशवस्त्वन्तरग्रहणादिसस्कारोद्बोधश्च स्मृतिहेतुः** (उद्० ४।१।३) इति ।

यद्यपि स्थितिस्थापकसस्कारस्य सम्बन्धे शब्दशास्त्रे कश्चिदुल्लेखो न दृश्यते, तथापि तस्य प्रतिषेधोऽपि नाऽवलोक्यते । अतोऽप्रतिषिद्धञ्चाऽनुमत भवतीति न्यायेन शाब्दिकोऽनुमन्यत एवेति निश्चीयते ।

॥ इति सस्कार ॥

## (२४) शब्दः

**शब्दस्य सिद्धिः—**

अत्राऽऽदौ वैशेषिकस्य मत प्रदर्श्यते । तथा हि—शब्दो हि श्रोत्रेण गृह्यते । अत एव **श्रावणः शब्द** इति कथ्यते । यथोक्त कणादेन—**श्रोत्रग्रहणो योऽर्थः स शब्द.** (वै० सू० २।२।२१) इति[1] ।

सूत्रेऽस्मिन्=अर्थ=धर्मी । तेनैतेनाऽश्रुतस्य शब्दत्वस्य श्रोत्रेणाऽगृहीतत्वान्नाऽव्याप्ति॰, **येनेन्द्रियेण या व्यक्तिर्गृह्यते, तेनैव तद्गतो धर्मोऽपीति**-न्यायेन शब्दत्वस्याऽपि श्रोत्रगृहीतत्वात् । सत्त्वगुणत्वाऽऽदिकमादाय नाऽस्य गुणान्तरेष्वतिव्याप्ति श्रोत्रगृहीतत्वाऽभावात् । तथा च श्रोत्रेन्द्रियजन्यलौकिकप्रत्यक्षविषयवृत्तिगुणत्वव्याप्यजातिमत्त्वमेव शब्दलक्षणमस्तीत्यवधार्य्यते । यथोक्तम्—**श्रोत्रेण गृह्यतेऽसौ श्रवणेन्द्रियजन्यलौकिकप्रत्यक्षविषयः । शब्दत्वादेरपि तादृशत्वादर्थ इति जातिमानिति तदर्थः । तथा च श्रवणेन्द्रियजन्यलौकिकप्रत्यक्षविषयवृत्तिगुणत्वव्याप्यजातिमत्त्वमेव शब्दलक्षणं पर्यवसितम् । तेनाऽश्रुतशब्दे नाऽव्याप्तिर्न वा सत्त्वगुणत्वाऽऽदिकमादाय गुणान्तरेष्वतिव्याप्तिः । इत्थञ्च प्रत्यक्षसिद्धः शब्दो धर्मी न शक्योऽपलपितुम्** (वै० सू० २।२।२१ विवृ०) इति ।

**शब्दस्य भेदः—**

शब्दो द्विविध वर्णध्वनिभेदात् । य शब्द श्रुत्वाऽर्थस्याऽवगतिर्भवति, स शब्दो वर्णात्मक इत्युच्यते । यथा—गौरिति । एतेन सास्नालाङ्गूलककुदखुरविषाण्यर्थं प्रतीयते । य शब्द श्रुत्वा कस्यचिदप्यर्थस्याऽवगतिर्न भवति, स शब्दो ध्वनि । यथा—शङ्खाऽऽदीना शब्द । एतेषु ध्वनिमात्रस्यैव बोध, न तु कश्चिदर्थोऽवबुध्यते । यथोक्तम्—**स शब्दो द्विविधो वर्णलक्षणो ध्वनिलक्षणश्च । तत्राऽकारादिवर्णलक्षणः, शङ्खाऽऽदिनिमित्तो ध्वनिलक्षणश्च** (प्र० पा० भा० पृ० ६९३) इति । अपि चोक्तमन्नम्भट्टेन—**स शब्दो द्विविधो ध्वन्यात्मको वर्णाऽऽत्मकश्च** । तत्र ध्वन्यात्मको भेर्य्यादौ, वर्णात्मक सस्कृतभाषारूप इति (तर्कसग्रहः) ।

महाभारते शान्तिपर्वणि चतुरशीत्युत्तरशततमेऽध्याये (=१८४) शब्दस्य भेदो दर्शित । तथाहि—

---

१. द्र० प्र० पा० भा० पृ० ६९१, तर्कसङ्ग्रह ।

तत्रैकगुणमाकाशं शब्द इत्येव तत्स्मृतम् ।
तस्य शब्दस्य वक्ष्यामि विस्तरं विविधात्मकम् ॥
षड्ज ऋषभगान्धारौ मध्यमो धैवतस्तथा ।
पञ्चमश्चापि विज्ञेयस्तथा चापि निषादवान् ॥
एष सप्तविधः प्रोक्तो गुण आकाशसम्भवः ।
ऐश्वर्येण तु सर्वत्र स्थितोऽपि पटहादिषु ॥
मृदङ्गभेरीशङ्खानां स्तनयित्नो रथस्य च ।
य कश्चिच्छ्रूयते शब्दः प्राणिनोऽप्राणिनोऽपि वा ॥
एतेषामेव सर्वेषां विषये सम्प्रकीर्त्तितः ।
एवं बहुविधाकारः शब्द आकाशसम्भव ॥
आकाशजं शब्दमाहुरेभिर्वायुगुणै सह ।
श्लो० स० ३८-४२ इति ।

**शब्दस्योत्पत्तौ कारणानि—**

शब्दस्योत्पत्तौ कारण त्रिविधम्, सयोगविभागशब्दजभेदात् । तत्र सयोग.—कमप्यर्थमभिधातु विवक्षया आत्ममनसोः सयोगादिच्छा समुदेति । इच्छाया जाताया तदनुकूल प्रयत्न प्रवर्त्तते । तत कोष्ठस्थिते वायौ कम्पनक्रिया जायते । क्रियाप्रेरितो वायुर्नाभिप्रदेशादुत्थितो मूर्धानि सस्पृशन्, पुन. प्रतिनिवृत्त उर कण्ठताल्वादिस्थानान्निर्गच्छन् **क** इति, **ख** इति च रूपेण परिणमति, भेरीदण्डाद्यभिघाताख्यसंयोगाद् ध्वनिरूपस्य च शब्दस्योत्पत्तिर्भवति ।

विभाग —यदा कश्चिद्वशाऽऽदिकाष्ठ परशुना छिनत्ति, तदा वशे पाट्यमाने तस्य द्वयोर्दलयोर्विभागाद् ध्वनिरूपः शब्दो जायते । मेघाद् विद्युतो विभागात् **कड़-कड़** इत्येवविध शब्द उत्पद्यते ।

**शब्दजः—**

दूरदेशे वीणावेणुमृदङ्गाऽऽदावुत्पद्यमान शब्दो **वीचितरङ्ग** इव कर्णशष्कुल्यवच्छिन्नश्रोत्रप्रदेशमासादयति । तेन वीणाया अय शब्द, वेणोर्वेत्यय शब्द इति बोधो जायते । वीचितरङ्ग इव शब्दसन्तानो न स्याच्चेत्तर्हि दूरदेसे समुत्पन्न. शब्दो न श्रूयेत । तथा च यतो दूरदेशे समुत्पन्न· शब्द· श्रूयते, अत उत्पन्न शब्द शब्दसन्तानमहिम्ना श्रोत्रपर्य्यन्त समायाति । यथोक्त कणादेन—**संयोगाद्विभागाच्च शब्दनिष्पत्तिः** (वै० सू० २।२।२१) इति[1] । व्याख्यातञ्च शङ्करमिश्रेण—**यत्र च दूरे वीणाऽऽदावुत्पन्नः शब्द·, तत्र सन्तान-**

१. द्र०—प्र० पा० भा० पृ० ६९२-६९६ ।

**क्रमेणोत्पद्यमानः शब्दः कर्णशष्कुल्यवच्छिन्नमाकाशदेशमासादयन् गृह्यते, तेन शब्दादपि शब्दनिष्पत्तिः** (उप० २।२।२१) इति । एतच्च स्पष्टीभवति विश्वनाथस्य कारिकयाऽपि—

> **शब्दो ध्वनिश्च वर्णश्च मृदङ्गाऽऽदिभवो ध्वनिः ।**
> **कण्ठसंयोगाऽऽदिजन्या वर्णास्ते काऽऽदयो मताः ।**
> **सर्वः शब्दो नभोवृत्तिः श्रोत्रोत्पन्नस्तु गृह्यते ॥**
> **वीचितरङ्गन्यायेन तदुत्पत्तिस्तु कीर्तिता ।**
> **कदम्बगोलकन्यायादुत्पत्तिः कस्यचिन्मते ॥**
>
> (भा० परि० १६४ ख० १६६) इति ।

शब्दस्याऽनित्यत्वसिद्धिः—

शब्दो न नित्यः, उत्पत्तिवचनात् । यः खलु नित्यः, तस्योत्पत्तिर्न भवति । यथा—आकाशाऽऽदीनां विभुद्रव्याणाम् । शब्दस्तु कण्ठताल्वाद्यभिघातादाविर्भवति । तेनैतस्याऽनित्यत्वं गम्यते । यदि कण्ठताल्वाद्यभिघातात्प्राक् सन्नेव शब्दः कण्ठताल्वाद्यभिघातेनाऽभिव्यञ्जकेनाऽभिव्यज्यते तर्हि तस्य सत्त्वे किमपि प्रमाणमुपलभ्यते । तथा च यतः कण्ठाद्यभिघातरूपादभिव्यञ्जकात्प्राक्स्थिते शब्दस्य सत्त्वे किमपि प्रमाणं नास्ति, अतः कार्य एव शब्दो नत्वकार्यं इत्यवधार्य्यते । यथोक्तं कणादेन—**सतो लिङ्गाऽभावात्** (वै० सू० २।२।२६) इति । व्याख्यातञ्चैतच्छङ्करमिश्रेण—**यदि ह्युच्चारणात्प्रागूर्ध्वं शब्दः सन् स्यात्तदा सतोऽस्य लिङ्गप्रमाणान्तरं स्यात् । न चाऽश्रवणदशायां शब्दसत्त्वे प्रमाणमस्ति, तस्मात् कार्य एवाऽयं न व्यङ्ग्यः** (उप० २।२२६) ॥

किञ्च नित्यः स भवति, यो नोत्पद्यते, न च विनश्यति । यथाऽऽकाशाऽऽदयोऽमूर्त्ताः । शब्दश्च उत्पत्तिध्वंसवान् । दृश्यते हि शब्दस्य कण्ठताल्वाद्यभिघातादुत्पन्नस्य शब्दस्य तृतीयक्षणे ध्वंसश्च । उत्पत्तिश्च तस्यैव भवति, यः स्वोत्पत्तिकारणात्प्राङ् न भवति, पश्चाद् भवति ।

यथा—कपालात् प्रागसन् घटः पश्चादाविर्भवति, तन्तोः प्रागसन् पटः पश्चादाविर्भवति । तथा—कण्ठताल्वाद्यभिघातात्प्रागसन्नेव शब्दः, सति कण्ठताल्वाद्यभिघाते प्रादुर्भूतः सन् श्रूयते, पश्चान्न श्रूयते । यतः शब्दस्योत्पत्तिर्विनाशश्च भवति । अतोऽस्याऽनित्यत्वमेव । यथोक्तम्—**यदभूत्वा न भवति, तद् विनाशधर्मकम् । नैतावुत्पत्तिविनाशौ नित्यधर्मौ स्तः, न वै नित्यमनुत्पत्तिधर्मकम्, न खल्वपि विनाशधर्मकम् । शब्दस्त्वभूत्वा भवतीत्युत्पत्तिधर्मकः, भूत्वा च न भवतीति विनाशधर्मकः, तस्मान्नित्यवैधर्म्यादनुपलब्धिकाले नास्तीति** (वै० सू० २।२।२८ भाष्यम्) इति ।

किञ्च कुड्यादिना व्यवहितेऽपि चैत्रमैत्राऽऽदौ, एतयो शब्द श्रुत्वा चैत्रीयोऽय शब्द मैत्रीयोऽय शब्द इत्यनुमिनोति कश्चिदभिज्ञश्चैत्रादिस्वरसयोगस्य। न चैवविध सम्प्रत्ययोऽभिव्यङ्ग्याऽभिव्यञ्जकभावेन भवति। यतो हि नह्यभिव्यङ्ग्येन घटादिनाऽभिव्यञ्जकस्य प्रदीपाऽऽदेरनुमान भवति। अभिव्यङ्ग्याभिमतेन शब्देन तु चैत्रमैत्राऽऽदयोऽनुमीयन्ते। अतः शब्दो नाऽभिव्यङ्ग्यः, प्रत्युत कारणेनोत्पाद्य एव। यथोक्त कणादेन—

**नित्यवैधर्म्यात्** (वै० सू० २।२।२७) इति। व्याख्यातञ्चैतच्छङ्करमिश्रेण—**नित्येन सहाऽस्य शब्दस्य वैधर्म्यमुपलभ्यते। यतश्चैत्रो वक्ति, मैत्रो वक्तीत्यत्र भित्त्यादिभिर्व्यवहितोऽपि चैत्रमैत्राऽऽदिर्वचनेनाऽनुमीयते, न च व्यञ्जक प्रदीपाऽऽदिर्व्यङ्ग्येन घटाऽऽदिना क्वचिदनुमीयते। तस्माज्जन्य एवाऽयम्, न व्यङ्ग्य** (उप० २।२।२७) इति।

किञ्च यो हि कारणादुत्पद्यते, सोऽनित्यो भवति। यथा घटपटौ कपालात् तन्तोश्च कारणादुत्पद्येते। अत इमौ घटपटौ न नित्यौ स्त। किन्तु तावनित्यावेव। तथा शब्दोऽपि कण्ठताल्वाद्यभिघातादुत्पद्यते, अतोऽस्योत्पत्तिवचनत्वेनाऽनित्यत्व गम्यते। यथोक्त कणादेन—**अनित्यश्चाऽयं कारणत** (वै० सू०२।२।२८) इति। व्याख्यातञ्चैतच्छङ्करमिश्रेण—**उपलभ्यते हि भेरीदण्डसयोगाऽऽदिभ्यः प्रादुर्भवञ्छब्द। तथा चोत्पत्तिमत्त्वादनित्योऽयमिति शब्दः** (उप० २।२।२८) इति। एतत्स्पष्टीभवति विश्वनाथस्य कारिकयाऽपि—

> **उत्पन्नः को विनष्ट क इति बुद्धेरनित्यता।**
> **सोऽय क इति बुद्धिस्तु साजात्यमवलम्बते॥**
> **तदेवौषधमित्यादौ सजातीयेऽपि दर्शनात्।**
> **तस्मादनित्या एवेति वर्णाः सर्वे मत हि न॥**
>
> भा० परि० १६७-१६८ इति॥

**शब्दस्य गुणत्वम्—**

यद्द्रव्य भवति, तन्नैकद्रव्यवृत्ति, प्रत्युताऽनेकद्रव्यवृत्त्येव। यथा—घटो द्वयो कपालयो, पटो बहुषु तन्तुषु समवायेन वर्त्तते। तथा च घटपटाऽऽदीना यत्समवायिकारणम्, तदेकद्रव्य समवायिकारण नाऽस्ति, परन्तु बहुद्रव्यमेव समवायिकारणमस्तीति। नैवविध शब्दो दृश्यते। यतो हि शब्दस्य समवायिकारण यदाकाश तदेकमेव। तथा च यत शब्दस्यैकमेव समवायिकारणमाकाशम्, अत शब्दो द्रव्यं न भवितुमर्हति, द्रव्येण सहास्य वैधर्म्यात्। अत एवोक्त कणादेन—**एकद्रव्यत्वान्न द्रव्यम्** (वै० सू० २।२।२३) इति। व्याख्यातञ्चैतच्छङ्करमिश्रेण—**एक द्रव्य समवायिकारण यस्य तदेकद्रव्यम्, द्रव्यञ्च किम्-**

## द्वितीय सर्ग

वाली का वध और भगवान् श्रीराम के साथ उसका सम्भाषण

श्रीमहादेव उवाच

इत्थं स्वात्मपरिष्वङ्गनिर्धूताशेषकल्मषम् । रामः सुग्रीवमालोक्य सस्मितं वाक्यमब्रवीत् ॥१॥
मायां मोहकरीं तस्मिन्वितन्वन् कार्यसिद्धये । सखे त्वदुक्तं यत्तन्मां सत्यमेव न संशयः ॥२॥
किन्तु लोका वदिष्यन्ति मामेवं रघुनन्दनः । कृतवान्किं कपीन्द्राय सत्यं कृत्वाग्निसाक्षिकम् ॥३॥
इति लोकापवादो मे भविष्यति न संशयः । तस्मादाह्वय भद्रं ते गत्वा युद्धाय वालिनम् ॥४॥
बाणेनैकेन तं हत्वा राज्ये त्वामभिषेचये । तथेति गत्वा सुग्रीवः किष्किन्धोपवनं द्रुतम् ॥५॥
कृत्वा शब्दं महानादं तमाह्वयत वालिनम् । तच्छ्रुत्वा भ्रातृनिनदं रोषताम्रविलोचनः ॥६॥
निर्जगाम गृहाच्छीघ्रं सुग्रीवो यत्र वानरः । तमापतन्तं सुग्रीवः शीघ्रं वक्षस्यताडयत् ॥७॥
सुग्रीवमपि मुष्टिभ्यां जघान क्रोधमूर्च्छितः । वाली तमपि सुग्रीव एवं क्रुद्धौ परस्परम् ॥८॥
अयुद्ध्येतामेकरूपौ दृष्ट्वा रामोऽति विस्मितः । न मुमोच तदा बाणं सुग्रीववधशङ्कया ॥९॥
ततो दुद्राव सुग्रीवो वमन् रक्तं भयाकुलः । वाली स्वभवनं यातः सुग्रीवो राममब्रवीत् ॥१०॥
किं मा घातयसे राम शत्रुणा भ्रातृरूपिणा । यदि मद्धनने वाञ्छा त्वमेव जहि मां विभो ॥११॥

श्रीमहादेवजी बोले—हे पार्वति ! इस तरह अपने संसर्ग से सब पाप दूर हो गये हैं, उस सुग्रीव को देखकर श्रीरघुनाथजी कार्य सिद्ध करने के लिये उसपर मोह उत्पन्न करनेवाली अपनी माया का विस्तार करते हुए मुस्कुराकर बोले—हे मित्र ! तू जो कहे हो वह निःसन्देह ठीक है ॥ १२– ॥ किन्तु लोग कहेंगे कि श्रीरघुनाथजी वानरराजसुग्रीव से अग्नि की साक्षी कर मित्रता किये, परन्तु वे उस सुग्रीव का कौन कार्य सिद्ध किये ? ॥ ३ ॥ इस प्रकार संसार में निःसन्देह मेरी निन्दा होगी। अत-एव तुम्हारा कल्याण हो, तुम अभी जाकर युद्ध के लिये वाली को ललकारो ॥ ४ ॥ उसे एक ही बाण से मारकर मैं तुम्हें राजपद-पर अभिषिक्त कर दूँगा। "तथा-इति" यह कहकर वह शीघ्र किष्किन्धापुरी के उपवन में गया और अति-घोर शब्द कर गर्जते हुए वाली को युद्ध के लिये ललकारा। भाई का यह सिंहनाद सुनकर उसके नेत्र क्रोध से लाल हो गये और वह तत्काल अपने घर से निकलकर वानरराज सुग्रीव के पास आया। उसे आते ही उसके वक्षःस्थल में सुग्रीव मारा ॥५–७॥ वाली भी क्रोधातुर हो सुग्रीव को अपने दोनों घूँसों से प्रहार किया और सुग्रीव वालीपर आक्रमण किया। इस प्रकार वे दोनों अति क्रोधपूर्वक एक दूसरे से लड़ने लगे। युद्ध में उन दोनों को एक रूप देखकर आश्चर्य चकित हो सुग्रीव के वध की आशङ्का से श्रीरामचन्द्रजी बाण नहीं छोड़े ॥८–९॥ अन्त में सुग्रीव भय से व्याकुल होकर रक्त वमन करता हुआ भागा और वाली अपने घर पर चला गया। तदनन्तर सुग्रीव श्रीरामचन्द्रजी से बोला—हे राम ! आप इस भ्रातारूपी

एवं मे प्रत्ययं कृत्वा सत्यवादिन् रघूत्तम । उपेक्षसे किमर्थं मां शरणागतवत्सल ॥१२॥
श्रुत्वा सुग्रीववचनं रामः साश्रुविलोचनः । आलिङ्ग्य मास्म भैषीस्त्वं दृष्ट्वा वामेकरूपिणौ १३॥
मित्रघातित्वमाशङ्क्य मुक्तवान्सायकं न हि । इदानीमेव ते चिह्नं करिष्ये भ्रमशान्तये ॥१४॥
गत्वाह्वय पुनः शत्रुं द्रक्ष्यसि वालिनम् । रामोऽहं त्वां शपे भ्रातर्हनिष्यामि रिपुं क्षणात् १५॥
इत्याश्वास्य स सुग्रीवं रामो लक्ष्मणमब्रवीत् । सुग्रीवस्य गले पुष्पमालामामुच्य पुष्पिताम् ॥१६॥
प्रेषयस्व महाभाग सुग्रीवं वालिनं प्रति । लक्ष्मणस्तु तदा बद्ध्वा गच्छ गच्छेति सादरम् १७॥
प्रेषयामास सुग्रीवं सोऽपि गत्वा तथाकरोत् । पुनरप्यद्भुतं शब्दं कृत्वा वालिनमाह्वयत् ॥१८॥
तच्छ्रुत्वा विस्मितो वाली क्रोधेन महतावृतः । बद्ध्वा परिकरं सम्यग्गमनायोपचक्रमे ॥१९॥
गच्छन्तं वालिनं तारा गृहीत्वा निषिषेध तम् । न गन्तव्यं त्वयेदानीं शङ्का मेऽतीव जायते ॥२०॥
इदानीमेव ते भग्नः पुनरायाति सत्वरः । सहायो बलवांस्तस्य कश्चिन्नूनं समागतः ॥२१॥
वाली तामाह हे सुभ्रु शङ्का ते व्येतु तद्गता । प्रिये करं परित्यज्य गच्छ गच्छामि तं रिपुम् २२॥

शत्रु से मुझे मरवाना चाहते हैं क्या ? हे प्रभो ! मुझे मरवाने की ही यदि आपकी ईच्छा है तो स्वयं आप ही मुझे मार दीजिये ॥११॥

हे सत्यवादी शरणागतवत्सल श्रीरघुनाथजी ! मुझे विश्वास दिलाकर इस प्रकार आप उपेक्षा क्यों करते हैं ॥१२॥ सुग्रीव की यह बात सुनकर श्रीरामचन्द्रजी हृदय से लगा लिये और सजलनेत्र हो बोले—भाई ! तुम डरो मत, तुम दोनों को एक रूप देखकर मैं मित्र का वध न हो जाय इस आशङ्का से बाण नहीं छोड़ा । इस भ्रम को दूर करने के लिये मैं तुम्हारे शरीर में अब कोई एक चिन्ह दूँगा ॥१३–१४॥ पुनः एकबार जाकर शत्रु को पुकारो, तुम वाली को मरा हुआ देखोगे । भाई ! मैं राम तुम्हारी शपथ कर कहता हूँ कि इस बार मैं क्षणभर में तुम्हारे शत्रु को मार दूँगा ॥१५॥ इस प्रकार सुग्रीव को आश्वासन देकर श्रीरामचन्द्रजी लक्ष्मण से बोले—लक्ष्मण ! खिले हुए फूल की एक माला सुग्रीव के गले में डाल दो ॥ १६ ॥ हे महाभाग ! सुग्रीव को वाली से लड़ने के लिये भेज दो । तब लक्ष्मणजी सुग्रीव के गले में माला डालकर आदरपूर्वक बोले कि भाई ! तुम जाओ, यह कहकर लक्ष्मणजी सुग्रीव को लड़ने के लिये भेज दिये । सुग्रीव वहाँ पहुँचकर पुनः अद्भुत शब्द कर वाली को पुकारा ॥१७–१८॥

यह सुनकर वाली अति विस्मित हुआ और अति क्रोधपूर्वक अपना कमर कसकर चलने के लिये तैयार हो गया ॥१९॥ उसे जाते हुए देखकर उसकी स्त्री उसका हाथ पकड़कर रोकी और बोली—देव ! मेरे हृदय में बड़ी आशङ्का हो रही है, इस समय आप मत जाइये ॥२०॥ तत्क्षण ही यह आप से पराजित होकर भागा था और शीघ्र ही पुनः लौट आया । प्रतीत होता है कि निश्चय उसे कोई बलवान् सहायक मिल गया है ॥२१॥ तब वाली बोला—हे सुन्दर भृकुटी वाली ! तुम यह आशङ्का मत करो । हे प्रिये ! तू मेरा हाथ छोड़कर घर लौट जाओ; मैं अभी जाकर इस शत्रु को मारकर आता हूँ, उसका सहायक भला कौन हो

णेन विजानाति। यतो हि सर्वाऽर्थाऽभिधानसमर्थः शब्दो भवति, शब्दाऽभिधेयश्च सर्वोऽर्थः। यथा—यदा कश्चित्पुरोवर्तिनं सास्नादिमन्तं पिण्डं पश्यति, तदा स गौरयमिति ब्रूते। तेनैतेन सास्नालाङ्गूलककुदखुरविषाण्यर्थः प्रतीयते। एवमेवाऽस्य घट इति शब्दोच्चारणेन कम्बुग्रीवादिरूपोऽर्थः संलक्ष्यते। तथा च येनोच्चारितेन यस्याऽर्थस्याऽभिव्यक्तिर्भवति, स एव शब्द इति निष्कर्षः। स च वाचकः। यथाऽऽह पतञ्जलिः—**येनोच्चारितेन सास्नालाङ्गूलककुदखुरविषाणिनां सम्प्रत्ययो भवति स शब्दः** (म० भा० पस्पशा०) इति। **स्वं रूपं शब्दस्याऽशब्दसञ्ज्ञा** (पा० सू० १।१।६८) इति सूत्रे कैयटेनाऽपि—**सर्वार्थप्रत्यायनशक्तियुक्तो हि शब्दः, सर्वशब्दप्रत्याय्यशक्तियुक्तश्चार्थः** इत्युक्तम्। एतेनाऽर्थस्य वाचकः शब्दः, शब्दस्य वाच्यो ह्यर्थ इति गम्यते। इदमेवोक्तं भर्तृहरिणाऽपि—

**शब्दादर्था प्रतायन्ते[1] स भेदानां विधायकः।**

(वा०प० ३।१४।१६६क) इति[2]।

**ध्वनिरूपः शब्दः—**

श्रोत्रेण गृहीतो यः शब्दो वर्त्तते, स एव शब्दो ध्वनिरिति कथ्यते। एष एव वैखरी वागित्युच्यते। जगति यावन्तः खलु आदानप्रदानाऽऽदिरूपा व्यवहाराः, सर्वे ह्येते वैखरीनादेनैव प्रवर्त्तन्ते। लौकिको हि जनः इममेव शब्दत्वेनाऽवगच्छति। अत एव स्वाऽभिप्रेतं शब्दं श्रुत्वा शब्दस्य विरामो न स्यादित्याशङ्क्य शब्दोच्चारणकर्त्तारं प्रति कश्चिद् ब्रूते—**त्वं शब्दं कुर्विति**। अनभिप्रेतं शब्दं श्रुत्वा शब्दोच्चारयिता शब्दं न कुर्यादिति बुद्ध्या—**मा शब्दं कार्षीरि**ति विधिनिषेधौ कुरुते। प्रतिषेधे क्रियमाणेऽपि शब्दोच्चारयिता शब्दं कुर्वन्नेव लक्ष्यते चेत्तर्हि तं प्रति **शब्दकार्ययं माणवक** इति तेनोच्यते। तथा च श्रोत्रगृहीतो यो हि ध्वनिः, स एव शब्द इति निर्धार्य्यते। यथोक्तं पतञ्जलिना—**अथवा प्रतीतपदार्थको लोके ध्वनिः शब्द इत्युच्यते। तद्यथा शब्दं कुरु, मा शब्दं कार्षीः, शब्दकार्ययं माणवकः, इति ध्वनिं कुर्वन्नेवमुच्यते। तस्माद् ध्वनिः शब्दः** (म० भा० पस्पशा०) इति। व्याख्यातञ्च नागेशेनाऽपि—**लोके व्यवहर्तृषु पदार्थबोधकत्वेन प्रसिद्धः, श्रोत्रेन्द्रियग्राह्यत्वाद्वर्णरूपध्वनिसमूह एव शब्दः। ध्वनिपदेनाऽत्र नादवैखरी** (उद्० म० भा० पस्पशा०) इति।

**स्फोटस्य द्वैविध्यम्—**

एतेन शब्दशास्त्रे शब्दस्य द्विविधं स्वरूपमस्तीति गम्यते। अत्र वाचको यः शब्दः, स आन्तरस्फोटरूपः, श्रोत्रग्राह्यो यः स ध्वनिरूपो बाह्य-

१. 'प्रतीयन्ते' इति पाठान्तरम्।

२. तस्य वाचकः प्रणवः यो० सू० १।२७।
वाच्य ईश्वरः प्रणवस्य व्या० भा० १।२७।

स्फोटरूप । यतो हि श्रोत्रेण गृहीत एव शब्द आन्तरस्फोटमवद्योतयति। द्योतित सन्नान्तर स्फोटोऽर्थानभिव्यनक्ति । यथा—स्फटिको जपाकुसुमाद्युपरञ्जकसम्पर्कादेव तदाकारेण भासते, तथा—श्रोत्रगृहीतगवादिध्वन्युपरञ्जकादान्तर स्फोटोऽपि गोघटादिरूपेण भासमान मास्नाद्यर्थं, कम्बुग्रीवाद्यर्थञ्च प्रत्याययति । यथोक्त भर्तृहरिणा—

> **द्वावुपादानशब्देषु शब्दौ शब्दविदो विदुः ।**
> **एको निमित्त शब्दानामपरोऽर्थे प्रयुज्यते** ।। वा० प० १।४४ इति ।

**अस्याऽयमर्थ.**—

उपादीयते—स्वरूपेऽध्यारोप्यते येनाऽर्थ, स उपादानो वाचक. शब्द । एतस्मिन्नुपादाने द्वौ शब्दौ स्त इति वैयाकरणा मन्यन्ते । एतयोर्मध्ये श्रोत्रगृहीतो यो हि बाह्य. स्फोट, स आन्तरस्फोटाऽभिव्यञ्जने कारणम्, अभिव्यञ्जित आन्तर स्फोटोऽर्थप्रकाशने कारणञ्चेति निर्धार्य्यते। यथाऽऽह रघुनाथशर्मा—**स्फोटात्मकशब्दाऽभिव्यञ्जको ध्वनिविशेषरूप एक. शब्द, अर्थप्रत्यायकश्च स्फोटपदाऽभिधेयोऽपर इति द्वौ शब्दौ** (वा० प० १।४४ अम्बाकर्त्री) इति ।

अत्र यो ह्यान्तर स्फोटरूप शब्द, स हृदयदेशाऽवच्छिन्नाकाशदेशस्थ, आन्तरत्वात् । अयमेवाऽऽन्तर स्फोटो मध्यमानादेनाऽपि कथ्यते । यथोक्त नागेशेन—**स्फोटपदेनाऽभिव्यक्तकत्वादिको मध्यमास्थ आन्तर शब्द उच्यते** (उद्० म० भा० पस्पशा०) इति[1] ।

ध्वनिरूपो यो हि बाह्य स्फोट, स बहिराकाशदेशस्थ श्रोत्रेण गृह्यमाणत्वात् । यथोक्त पतञ्जलिना—**श्रोत्रोपलब्धिर्बुद्धिनिर्ग्राह्य. प्रयोगेणाऽभिज्वलित आकाशदेशः शब्दः** (म० भा० मा० सू० १) इति । अत्र श्रोत्रोपलब्धिः कत्वखत्वादि श्रोत्रेन्द्रियेण गृह्यमाण शब्द. । बुद्धिनिर्ग्राह्य —बुद्धौ शब्दस्य पौर्वापर्य्यज्ञानम् । तेनैतेन **सरो रसः, कुब्जखञ्ज. खञ्जकुब्जः, दीनो नदी,** इत्यादौ न विपर्ययो भवति । यतो हि येन क्रमेण शब्दस्य ग्रहण भवति, तेनैव क्रमेण बुद्धौ सस्कारोऽपि । अतो यादृश शब्दस्य सस्कार, तादृशमेव शब्दस्य पौर्वापर्यज्ञान भवति । यथोक्त भर्तृहरिणा—

> **नादैराहितबीजायामन्त्येन ध्वनिना सह ।**
> **आवृत्तपरिपाकाया बुद्धौ शब्दोऽवधार्य्यते** । वा० प० १।८४ इति ।

---

१. अयञ्च शब्द.=ध्वनिव्यङ्ग्यो वाचक शब्द । तत्तत्प्राणिहृदयदेशाऽवच्छिन्नाऽऽकाशदेशस्थ, सर्वसमष्टेर्विराजो हृदयरूपबाह्याऽऽकाशदेशस्थश्च । वै० सि० लघुम० पृ० १६३ ।

बिभेद स शरो वक्षो वालिनः कम्पयन्महीम् । उत्पपात महाशब्दं कुर्वन्स निपपात ह ॥४७॥
तदा मुहूर्तं निःसंज्ञो भूत्वा चेतनमाप सः ।
ततो वाली ददर्शाग्रे रामं राजीवलोचनम् । धनुरालम्ब्य वामेन हस्तेनान्येन सायकम् ॥४८॥
बिभ्राणं चीरवसनं जटामुकुटधारिणम् । विशालवक्षसं भ्राजद्वनमालाविभूषितम् ॥४९॥
पीनचार्वायतभुजं नवदूर्वादलच्छविम् । सुग्रीवलक्ष्मणाभ्यां च पार्श्वयोः परिसेवितम् ॥५०॥
विलोक्य शनकैः प्राह वाली रामं विगर्हयन् । किं मयापकृतं राम तव येन हतोऽस्म्यहम् ॥५१॥
राजधर्ममविज्ञाय गर्हितं कर्म ते कृतम् । वृक्षखण्डे तिरोभूत्वा त्यजता मयि सायकम् ॥५२॥
यशः किं लप्स्यसे राम चोरवत्कृतसङ्गरः । यदि क्षत्रियदायादो मनोर्वंशसमुद्भवः ॥५३॥
युद्धं कृत्वा समक्षं मे प्राप्स्यसे तत्फलं तदा । सुग्रीवेण कृतं किं ते मया वा न कृतं किमु ॥५४॥
रावणेन हृता भार्या तव राम महावने । सुग्रीवं शरणं यातस्तदर्थमिति शुश्रुम ॥५५॥
बत राम न जानीषे मद्बलं लोकविश्रुतम् । रावणं सकुलं बद्ध्वा ससीतं लङ्कया सह ॥५६॥
आनयामि मुहूर्ताद्वाद्यदि चेच्छामि राघव । धर्मिष्ठ इति लोकेऽस्मिन् कथ्यसे रघुनन्दन ॥५७॥

वक्षःस्थल को बेध दिया। बाण के लगते ही घोर शब्द करता हुआ वह उछलकर पृथ्वी पर गिर पड़ा जिससे पृथ्वी कम्पायमान हो उठी ॥ ४७ ॥

उस समय वह एक मुहूर्त्त संज्ञा-शून्य ( मूर्च्छित ) हो गया, पुनः जब उसे चेतना हुई तो वह अपने सामने कमलनयन श्रीरघुनाथजी को खड़ा देखा। वे बायें हाथ धनुष का सहारा कर दायें हाथ में बाण लिये हुए थे और शरीर में चीरवस्त्र था तथा शिर पर जटाओं का मुकुट धारण किये थे। उनका विशाल वक्षःस्थल मनोहर वनमाला से विभूषित था ॥ ४८–४९ ॥ उनकी भुजायें स्थूल, सुन्दर और लम्बी थीं, उनके शरीर की कान्ति नव दूर्वादल के समान श्यामवर्ण की थी। उनके दोनों तरफ सुग्रीव और लक्ष्मण सेवा में तत्पर थे ॥ ५० ॥ श्रीरामचन्द्रजी को देखकर वाली उन्हें तिरस्कृत करता हुआ धीरे से कहा—हे राम! मैं आपका कौन सा अनिष्ट किया था कि आप मुझे मारे ॥ ५१ ॥ राजनीति न जानने के कारण आप ऐसा निन्दनीय कर्म किये हैं। इस प्रकार वृक्ष की आड़ में छिपकर मेरे ऊपर बाण छोड़ते हुए ॥ ५२ ॥ चोर के समान युद्ध करने से क्या आप यश प्राप्त करेंगे? यदि आपका जन्म मनु के वंश में हुआ है, आप क्षत्रिय कुमार हैं, तो मेरे समक्ष आकर युद्ध करते तो आपको उसका फल भी मिलता; सुग्रीव आपका कौन सा कार्य किया है और मैं आपका कौन सा कार्य नहीं किया ॥ ५३–५४ ॥ हे राम! महावन में रावण आपकी भार्या सीता का हरण किया है, उसी लिये आप सुग्रीव के शरण में आये हैं ॥ ५५ ॥ परन्तु विश्वविख्यात मेरे बल को आप नहीं जानते हैं। हे राघव! मैं कुलसहित रावण को बाँधकर सीता और लङ्का के सहित आधे मुहूर्त्त में ले आता। हे रघुनन्दन! इस संसार में आप बड़े धर्मात्मा कहे जाते हैं ॥ ५६–५७ ॥

वानरं व्याधवद्धत्वा धर्मं कं लप्स्यसे वद ! अभक्ष्यं वानरं मांसं हत्वा मां किं करिष्यसि ।५८।
इत्येवं बहु भाषन्तं वालिनं राघवोऽब्रवीत् । धर्मस्य गोप्ता लोकेऽस्मिंश्चरामि सशरासनः ॥५९।
अधर्मकारिणं हत्वा सद्धर्मं पालयाम्यहम् । दुहिता भगिनी भ्रातुर्भार्या चैव तथा स्नुषा ।६०।
समा यो रमते तासामेकामपि विमूढधीः । पातकी स तु विज्ञेयः स वध्यो राजभिः सदा ६१
त्वं तु भ्रातुः कनिष्ठस्य भार्यायां रमसे बलात् । अतो मया धर्मविदा हतोऽसि वनगोचर ६२।
त्वं कपित्वान्न जानिषे महान्तो विचरन्ति यत् । लोकं पुनानाः सञ्चारैरतस्तान्नातिभाषयेत् ।६३॥
तच्छ्रुत्वा भयसन्त्रस्तो ज्ञात्वा रामं रमापतिम् । वाली प्रणम्य रभसाद्रामं वचनमब्रवीत् । ६४॥
राम राम महाभाग जाने त्वां परमेश्वरम् । अजानता मया किञ्चिदुक्तं तत्क्षन्तुमर्हसि ॥६५॥
साक्षात्त्वच्छरघातेन विशेषेण तवाग्रतः । त्यजाम्यसून्महायोगिदुर्लभं तव दर्शनम् ॥६६॥
यन्नाम विवशो गृह्णन् म्रियमाणः परं पदम् । याति साक्षात्स एवाद्य मुमूर्षोर्मे पुरः स्थितः ।६७
देव जानामि पुरुषं त्वां श्रियं जानकीं शुभाम् । रावणस्य वधार्थाय जातं त्वां ब्रह्मणार्थितम् ।६८।
अनुजानीहि मां राम यान्तं त्वत्पदमुत्तमम् । मम तुल्यबले बाले अङ्गदे त्वं दयां कुरु ।६९॥

व्याध के समान एक वानर को मारकर आपको कौन सा धर्म होगा ? वानर का मांस अभक्ष्य होता है। पुनः मुझे मार कर आप क्या करेंगे ? ॥ ५८ ॥

वाली के यह कहने पर श्रीरघुनाथजी बोले—धर्म की रक्षा करने हेतु मै संसार में धनुष धारण कर विचरण करता हूँ। ५९ ॥ मै अधर्म करनेवालों को मारकर सद्धर्म का पालन करता हूँ।

दुहिता, बहन, अनुजवधू, पुत्रवधू ये समान हैं। जो मूढ व्यक्ति इनमें से किसी भी एक के साथ रमण करता है उसे महापातकी जानना चाहिये और राजा को उसे मार देना चाहिये ॥ ६०–६१ ॥ रे वनचर ! तू अपने छोटे भाई की स्त्री को बलात्कार से रमण करता था। अत-एव मुझ धर्मात्मा ने तुझे मारा ॥ ६२ ॥ वानर होने से तू यह नहीं जानता कि महान् लोग जहाँ विचरण करते हैं वहाँ अपने आचरणों से संसार को पवित्र करते हैं। अत-एव उनसे इस प्रकार नहीं बोलना चाहिये ॥ ६३ ॥

यह सुनकर वह भयभीत हो गया और उन्हें साक्षात् रमापति श्रीनारायण जानकर शीघ्रता से प्रणाम कर बोला ॥ ६४ ॥ हे राम ! हे राम ! हे महाभाग ! आप साक्षात् परमेश्वर को मैं समझ गया। अज्ञान-वश मैं जो कुछ कहा हूँ उसे आप क्षमा करें ॥ ६५ ॥ आपका दर्शन योगियों को दुर्लभ है, मैं साक्षात् आपके बाण लगने से विशेषरूप से आपके सामने प्राण छोड़ रहा हूँ ॥ ६६ ॥ मृत्यु के समय जिनका नाम लेने से प्राणी परमपद को प्राप्त करता है, वही आप इस अन्तिम समय में आज साक्षात् मेरे सामने उपस्थित हैं ॥ ६७ ॥ हे देव ! यह मैं जानता हूँ कि आप साक्षात् परमपुरुष नारायण हैं और जानकीजी श्रीलक्ष्मीजी हैं। ब्रह्माजी की प्रार्थना करने से आप रावण का वध करने के लिये अवतार लिये हैं ॥ ६८ ॥ हे राम ! मैं अब आपके उत्तम धाम को जा रहा हूँ। आप मुझे आज्ञा दीजिये। मेरे ही समान बलशाली मेरा

दृश्यते। अतो वर्णातिरिक्तो वर्णाऽभिव्यङ्ग्यो हृदयदेशस्थितो मध्यमाया यो नादांशो भागः, स एव स्फोट शब्द। स चैकोऽखण्ड प्रतिवर्णेनाऽभिव्यज्यते, तथापि चरमवर्णेनाऽभिव्यक्तो य स्फोट स एव सम्प्रत्ययस्य कारण भवति, न तु प्रतिवर्णेनाऽभिव्यक्त स्फोट। अत एवैकवर्णजाऽभिव्यक्तिजातोऽपि स्फोटो नाऽर्थमभिव्यनक्ति। किन्तु चरमवर्णाऽभिव्यक्त एव स्फोटोऽर्थबोधने समर्थो भवति। स्फोटो ह्यभिव्यञ्जकरूपप्रतिबिम्बनात्तद्रूपरूषित एव प्रत्यवभासते। यथा—जलचाञ्चल्येन चन्द्रप्रतिबिम्बोऽपि चलत्वेनैव गृह्यते। यथा वा स्फटिको जपाकुसुमाद्युपरागात्तदाकारेणैव भासते। एवमेव यथा—मणिकृपाणदर्पणाद्यभिव्यञ्जकाना सान्निध्यान्मुखमपि दैर्घ्यवर्त्तुलाकारेण प्रत्यवभासते, तथा स्फोटोऽप्यभिव्यञ्जकोपरागात्तदाकारेणैव प्रतीयते। येन क्रमेण व्यञ्जकरूपारूषितता, तेनैव क्रमेण तस्येति स्वीकारान्न **सरो रस**, **दीनो नदी**, **खञ्जकुब्जः**, **कुब्जखञ्ज** इत्यादीनामविलक्षणबोध। अयञ्च स्फोट आन्तरत्वाच्छ्रोत्रग्राह्यवैखरीसस्कृताऽन्त करणग्राह्य एवेति निर्धार्य्यते।[1] यथोक्त पतञ्जलिना—**स्फोट शब्द**, **ध्वनिः शब्दगुण**. (म० भा० पा० सू० १।१।७०) इति। एतादृश स्फोटस्य शब्दस्य स्वीकारादेव **कृपो रो ल** (पा० सू० ८।२।१८) इति सूत्रेण **कल्पत** इत्यादौ रेफस्य लत्वविधि सिध्यति। यथोक्त पतञ्जलिना—

**अथवोभयत. स्फोटमात्र निर्दिश्यते—रश्रुतेर्लश्रुतिर्भवतीति** (म० भा० मा० सू ० ३-४) इति।

इदमेवाऽऽह भर्तृहरिरपि—

> **प्रतिबिम्ब यथाऽन्यत्र स्थितं तोयक्रियावशात्।**
> **तत्प्रवृत्तिमिवाऽन्वेति स धर्म· स्फोटनादयोः॥**
> **नादैराहितबीजायामन्त्येन ध्वनिना सह।**
> **आवृत्तपरिपाकाया बुद्धौ शब्दोऽवधार्य्यते॥**

(वा० प० १।४६,८४) इति।

**दर्शनान्तरदृशा स्फोटस्य समर्थनम्—**

श्रोत्रग्राह्येण वर्णेनाऽभिव्यञ्जित. स्फोट एव शब्दोऽर्थाना वाचकोऽस्ति, स्फुटत्यर्थो यस्मादिति व्युत्पत्ते। स च वर्णाऽतिरिक्तो निर्भागश्चरमवर्णाऽभिव्यङ्ग्य पदरूपो वाक्यरूपश्चेति। अत एव **शब्दार्थप्रत्ययानामितरेतराऽध्यासात् सङ्करस्तत्प्रविभागसंयमात् सर्वभूतरुतज्ञानम्** (यो० सू० ३।१७) इति सूत्रभाष्ये, तत्त्ववैशारद्या मणिप्रभानाम्न्या टीकायाञ्च स्फोट एव शब्द इति

---

१ द्र०-वै० सि० लघुम० पृ० १५१।

साधित सिद्धान्तितश्च। एतेषा वाक्यं क्रमेणोद्ध्रियते—**तत्र वाग्वर्णेष्वेवार्थवती। श्रोत्रञ्च ध्वनिपरिणाममात्रविषयम्। पद पुनर्नादानुसहारबुद्धिनिर्ग्राह्यमिति** (व्या० भा० ३।१७) इति।

**यथा—प्रतीतिसिद्धान्तादान्वर्णान्प्रत्येकं गृहीत्वाऽनु पश्चाद्या संहरत्येकत्वमापादयति गौरित्येतदेकं पदमिति, तया पदं गृह्यते। यद्यपि प्राच्योऽपि बुद्धयो वर्णाकारं पदमेव प्रत्येक गोचरयन्ति, तथापि न विशदं प्रथते। चरमे तु विज्ञाने तदतिविशदमिति नादानुसहारबुद्धिनिर्ग्राह्यमित्युक्तम्।** (तत्त्ववै० ३।१७) इति।

**वर्णाऽतिरिक्तो वर्णैर्व्यङ्ग्यो नित्यो निर्भागः शब्दः स्फोट.। स च द्विविधः गौरित्येक पदमिति श्रोत्रग्राह्य. पदस्फोट., गामानयेत्येक वाक्यमिति ग्राह्यो वाक्यस्फोट.।** (मणिप्रभा यो० सू० २।१७) इति। तत्त्वबिन्दावपि स्फोटात्मक शब्द एव वाचक इत्युपपादित वाचस्पतिमिश्रेण[1]।

**बाह्यस्फोटस्य भेदाः—**

श्रोत्रोपलब्धिरूपो य खलु बाह्यस्फोट, सोऽष्टविध। स्फोटस्य वर्णपदवाक्यरूपरूषितस्य भानाद् वणस्फोट, पदस्फोट, वाक्यस्फोटश्चति त्रिविध। स पुनर्जातिभेदेन त्रिविध वर्णजातिस्फोटः, पदजातिस्फोट, बाक्यजातिस्फोट इति। पदवाक्ययो सखण्डत्वाऽखण्डत्वभेदादखण्डपदस्फोट, अखण्डवाक्यस्फोटश्चेति द्वौ। तथा चैनेषा स्फोटाना सङ्कलनयाऽष्टसख्यकत्वमस्तीति निर्धार्य्यते[2]।

एतेषामन्यतमो वाक्यस्फोट एव मुख्य, निराकाङ्क्षतयार्थस्य प्रत्यायकत्वात्। यद्यपि पदस्फोटोऽप्यर्थ प्रकाशयति, तथापि स निराकाङ्क्षतया न, प्रविश, पिण्डीमित्यादावाकाङ्क्षाया जायमानत्वात्। अत्र **पिण्डीमित्युक्ते, भुङ्क्ष्वेति** क्रियाया, **प्रविशेत्युक्ते गेहमिति** कर्मणश्चाऽऽकाङ्क्षा समुदेति। यतो हि पिण्डी भुङ्क्ष्व, गेह प्रविशेति वाक्येनैव निराकाङ्क्षतयाऽर्थस्य ज्ञान भवति। अतो वाक्यस्फोटो मुख्य इति। यथोक्तम्—**तत्र वाक्यस्फोटो मुख्यो लोके तस्यैवाऽर्थबोधकत्वात्तेनैवाऽर्थसमाप्तेश्च** (वै० सि० लघुम० पृ० १) इति।

वाक्यस्फोटेन निराकाङ्क्षाऽर्थबोधकत्वादेव **न सामयिकत्वाच्छब्दाऽर्थसम्प्रत्ययस्य** (गौ० सू० २।१।५४) इति सूत्रभाष्ये वात्स्यायनेनाऽपि **पदसमूहो वाक्यमर्थ-**

---

१ द्र०-तत्त्वबिन्दु, पृ० १४-१६।

२ द्र०-यद्यपि—वर्णस्फोट, पदस्फोट, अखण्डपदवाक्यस्फोटौ, वर्णपदवाक्यभेदेन त्रयो जातिस्फोटा इत्यष्टौ पक्षा सिद्धान्तसिद्धा इति। वै० भू० सार स्फोटनि० का० स० १।

**समाप्तावित्युक्तम्** । एतेनाऽपि वाक्यस्य मुख्यत्वमर्थसमाप्ते कारणत्वञ्च गम्यते ।

**आन्तरस्फोटस्य भेदाः—**

आन्तरस्फोटस्त्रिविध॰, परापश्यन्तीमध्यमाभेदात् । **अत्र परा वाक्** प्राणिना मूलाऽऽधारस्थिता सूक्ष्मतमा । सा च वाक वक्तुरर्थविवक्षया कोष्ठस्थितेन वायुना प्रेर्य्यमाणा सती नाभिदेशपर्यन्तमागच्छन्ती **पश्यन्ती वागिति** कथ्यते । एषा सूक्ष्मतरा, मनोविषयत्वात् । एते परापश्यन्त्यौ वाचौ योगिभि समाधौ साक्षात्क्रियेते । एतयो सविकल्पनिर्विकल्पज्ञाने योगिनामेव भवत, सूक्ष्मतमसूक्ष्मतरत्वात् । कोष्ठस्थितेन वायुना प्रेर्य्यमाणा हृदयदेशपर्यन्तमागच्छन्ती **वाङ्मध्यमेति** कथ्यते । इय वाक् सूक्ष्मा । अस्या कर्णपिधाने सूक्ष्मतरवाय्वभिघातेन श्रवण भवति । एषा कण्ठताल्वाद्यभिघातेन **वैखरीरूपेण** परिणमति । यथोक्त हरिणा—

> **वैखर्य्या मध्यमायाश्च पश्यन्त्याश्चैतदद्भुतम् ।**
> **अनेकतीर्थभेदायास्त्रय्या वाचः परम्पदम्** ॥ वा० प० १।१४२ ॥

अत्र त्रय्या वाच—पश्यन्त्येव पराऽपरभेदेन द्विविधा । अत एव परा वागित्याख्यायते । अपरा या वाक् सैव पश्यन्तीत्युच्यते । पराऽपरयोर्वाचोरैक्यमादाय **त्रय्या वाच** इति व्यवहार । एतयोर्भेदे तु चतस्रो वाचो निष्पद्यन्ते ।[1] यथाऽऽह—**पश्यन्ती तु पराऽपरा चेति द्विविधा** (अम्बाकर्त्री १।१४१) इति ।

**शब्दब्रह्मणः सिद्धिः—**

एतासु चतसृषु वाक्षु **परा तु वाक्छब्दब्रह्मे**ति गीयते । सा च शब्दतत्त्वमित्यपि कथ्यते । शब्दब्रह्मणो विवर्त्तरूपेणैवेद जगत् प्रत्यवभासते । **रव-पराऽऽदिशब्देनाऽप्य**भिधीयते । यथोक्तम्—

> **बिन्दोस्तस्माद्भिद्यमानाद्रवोऽव्यक्तात्मकोऽभवत् ।**
> **स एव (=रवः) श्रुतिसम्पन्नैः शब्दब्रह्मे ति गीयते ॥**

(प्रपञ्चसार श्लो० ४३) इति ।

**इदमेव पुष्णाति भर्त्तृहरिः—**

> **अनादिनिधन ब्रह्म शब्दतत्त्वं यदक्षरम् ।**
> **विवर्त्ततेऽर्थभावेन प्रक्रिया जगतो यत.** । वा० प० १।१ इति ।

---

१. चत्वारि वाक् परिमिता पदानि, तानि विदुर्ब्राह्मणा ये मनीषिण ।
गुहा त्रीणि निहिता नेङ्गयन्ति, तुरीय वाचो मनुष्या वदन्ति ॥
(ऋ० १।१६४।४५) इति ।

**अस्यार्थः—**

आद्यन्तरहित यच्छब्दतत्त्वम्, तदेव ब्रह्म, अक्षरत्वात्, व्याप्तिमत्त्वाच्च। एतदेव ब्रह्म विवर्त्ततया जगद्रूपेण प्रत्यवभासते। यथा—सुवर्णस्य कुण्डलम्, मृदो घट इत्यादौ सुवर्णस्य मृदः कुण्डल घटो वा तात्त्विकः परिणाम, एव पयसो दधिभाव तात्त्विक परिणाम, सतत्त्वतोऽन्यथा प्रथा परिणाम इत्युदीरितत्वात्। यतो हि कुण्डल, घटो वा, सुवर्णस्य मृदो वा यत्स्वरूपमस्ति, तत्स्वरूप न जहाति। एवमेव सुवर्णस्य मृदश्च क्रमशो रुचककटकस्वस्तिकादीन्याभूषणानि, कुण्डिकाशरावकपालाऽऽदीनि पात्राणि च नानाविधामाकृतिं गृह्णन्त्यपि स्वोपादानस्य यत् तत्त्व (=स्वरूपम्) तन्न त्यजन्ति॥ यथा सङ्गिरते पतञ्जलि —**एव हि दृश्यते लोके मृत्कयाचिदाकृत्या युक्तः पिण्डो भवति, पिण्डाऽऽकृतिमुपमृद्य घटिकाः क्रियन्ते, घटिकाऽऽकृतिमुपमृद्य कुण्डिकाः, तथा सुवर्णं कयाचिदाकृत्या युक्त पिण्डः, पिण्डाऽऽकृतिमुपमृद्य रुचका क्रियन्ते, रुचकाऽऽकृतिमुपमृद्य कटका क्रियन्ते, कटकाऽऽकृतिमुपमृद्य स्वस्तिकाः क्रियन्ते। पुनरावृत्तः सुवर्णपिण्डः पुनरपरयाकृत्या युक्तः खदिराङ्गारसवर्णे कुण्डले भवतः। आकृतिरन्या चाऽन्या च भवति, द्रव्य पुनस्तदेव। आकृत्युपमर्दन द्रव्यमेवाऽवशिष्यते** (म० भा० पस्पशा०) इति। अत्र कैयटोऽपि स्पष्टीकरोति—**असत्योपाध्यवच्छिन्न ब्रह्मतत्त्वं द्रव्यशब्दवाच्यमित्यर्थ। आकृतिः=सस्थानमिति। ब्रह्मदर्शने च गोत्वादिजातेरप्यसत्यत्वादनित्यत्वम्, आत्मैवेद सर्वम्** (छान्दो० ७।२५।२) इति श्रुतिवचनादवसीयते[१]। **अमुमेवाऽऽशयमुपनिषदपि विवृणोति—यथा—सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञात स्याद् वाचारम्भण विकारो नामधेय मृत्तिकेत्येव सत्यम्** छा० ६।१।४ इति। **तथा**—शब्दब्रह्मण इद जगद् विवर्त्तरूपम्, अतत्त्वतोऽन्यथा प्रथा विवर्त्त इत्युदाहृतत्वात्। अत एव जगत प्रातिभासिकी सत्ता ब्रह्मणस्तु वास्तवी सत्ता, **ब्रह्म सत्य जगन्मिथ्येति** श्रुते। अत्र विवर्त्ततेऽर्थभावेन=स्वरूपादप्रच्युत सदर्थरूपतया प्रतीयत इत्यर्थ। इद शब्दतत्त्व **येनोच्चारितेन सास्नालाङ्गूलककुदखुरविषाणिनां सम्प्रत्ययो भवति स शब्द** इति भाष्यग्रन्थेन प्रत्यतिष्ठिपत् पतञ्जलि।

**वैखरीरूपस्य बाह्यस्फोटात्मकस्य शब्दस्य नित्यत्वसिद्धिः—**

आन्तरस्य शब्दब्रह्मणोऽ**नादिनिधन ब्रह्म शब्दतत्त्वं यदक्षरमिति** भर्तृहरिकारिकया नित्यत्वस्योपपत्तावपि वैखरीरूपो य शब्द सोऽपि नित्य एव। यतो हि यो ह्यनित्यो भवति, स स्वकारणादुत्पद्यते, विनश्यति च। तथा—घटादिकार्याणि स्वोपादानकारणात्कपालादुत्पद्यमानानि ध्वसमानानि च परिलक्ष्यन्ते। किञ्चाऽनित्ये वस्तुनि कुर्वित्यादेर्विधिवाक्यस्य प्रतीतिसाक्षिको व्यवहार प्रवर्तते।

१. इदमुद्धृत नागेशेन।

यथा कश्चित्कञ्चित्तन्तुवायं प्रति ब्रूते **कुरु पटमहमेन[1] परिधास्यामि**। **तथा कुलालञ्च प्रति ब्रूते कुरु घटमहमनेन** कार्यं करिष्यामीति=जलमाहरिष्यामीति। नैवंविधो व्यवहारः शब्दस्य भवति--**कुरु शब्दमिति**। प्रत्युत यमर्थमभिधातुमिच्छा भवति, तस्मिन्नर्थे यः शब्दः सङ्केतितो वर्त्तते, तं शब्दमादाय प्रयुञ्जते लोकाः। यथाऽऽह पतञ्जलिः--

**यल्लोकेऽर्थमर्थमुपादाय शब्दान् प्रयुञ्जते, तेषां निर्वृत्तौ यत्नं कुर्वन्ति। ये पुनः कार्या भावा निर्वृत्तौ तावत्तेषां यत्नः क्रियते। तद्यथा घटेन कार्यं करिष्यन् कुम्भकारकुलं गत्वाऽऽह—कुरु घटं कार्यमनेन करिष्यामीति। न तद्वच्छब्दान् प्रयोक्ष्यमाणो वैयाकरणकुलं गत्वाह—कुरु शब्दान् प्रयोक्ष्येऽहमिति। तावत्येवार्थमुपादाय शब्दान् प्रयुञ्जते** (म० भा० पस्पशा०) इति। एतेन शब्दस्य नित्यत्वं निर्धार्य्यते। अत एव वार्त्तिककारः **सिद्धे शब्दार्थसम्बन्धे** इत्याह। अत्र सिद्ध=नित्यः शब्दः, नित्योऽर्थः, एतयोः सम्बन्धोऽपि नित्यः। शब्दस्य नित्यत्वं महता कण्ठरवेण समुद्घोषितं पतञ्जलिना—**युक्तं पुनर्यन्नित्येषु नाम शब्देषु आगमशासनं स्यात्। न नित्येषु नाम शब्देषु कूटस्थैरविचालिभिर्वर्णैर्भवितव्यमनपायोपजनविकारिभिः। आगमश्च नामापूर्वः शब्दोपजनः** (म० भा० १।१।४५) इति। इदमेव मतं पुष्णाति भर्त्तृहरिरपि—

**नित्याः शब्दार्थसम्बन्धास्तत्राऽऽम्नाता महर्षिभिः।**
**सूत्राणां सानुतन्त्राणां भाष्याणाञ्च प्रणेतृभिः॥**
(वा० प० १।२३) इति।

अपि च—

**उपायाः शिक्षमाणानां बालानामपलापनाः।**
**असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते॥**
(वा० प० २।२३८)

**सर्वे सर्वपदादेशा दाक्षिपुत्रस्य पाणिनेः।**
**एकदेशविकारे हि नित्यत्वं नोपपद्यते॥** (व्या० स० उद्०)

शब्दार्थसम्बन्धानां नित्यत्वं मीमांसकोऽपि मन्यते। यथाऽऽह जैमिनिः **औत्पत्तिकस्तु शब्दस्याऽर्थेन सम्बन्धस्तस्य ज्ञानमुपदेशो व्यतिरेकश्चाऽर्थेऽनुपलब्धे**

---

१ कश्चित्कञ्चित्तन्तुवायमाह—अस्य सूत्रस्य शाटकं वय इति। स पश्यति यदि शाटको न वातव्यः। अथ वातव्यो न शाटकः, शाटको वातव्यश्चेति विप्रतिषिद्धम्, भाविनी खल्वस्य सञ्ज्ञाऽभिप्रेता, स मन्ये वातव्यो यस्मिन्नुते शाटक इत्येतद्भवति। म० भा० १।१।४५

**तत्प्रमाणं बादरायणस्याऽनपेक्षितत्वात्** (मी० सू० १।१।५) इति । अत्रौत्पत्तिक =नित्य । अत्राऽऽह शबरस्वामी—**औत्पत्तिकस्तु नित्य. । अवियुक्तः शब्दार्थयोर्भाव. सम्बन्धः । नोत्पन्नयो पश्चात्सम्बन्ध = औत्पत्तिक शब्दस्यार्थे सम्बन्ध** इति । अपि चाऽऽह जैमिनि —**नित्यस्तु स्याद् दर्शनस्य परार्थत्वाद्** (मी० सू० १।१।१८) इति । एतत् स्पष्टीभवत्येतद्व्याख्यानाद्—**नित्यः शब्दो भवितुमर्हति । कुतो दर्शनस्य परार्थत्वात् । दर्शनमुच्चारणम्, परार्थम्=परमर्थम् =प्रत्याययितुम्** (शा० भा० १।१।१८) इति ।

एवञ्च शब्दो नित्य , अर्थो नित्य , एतयो सम्बन्धोऽपि नित्य एवेति निर्धार्य्यते । यदा शब्द उच्चारितो भवति, तदाऽर्थाकारा बुद्धि प्रत्यवभासते । यथोक्त कैयटेन—**बुद्धिप्रतिभासः शब्दाऽर्थो यदा यदा शब्द उच्चरितस्तदा तदाऽर्थाकारा बुद्धिरुपजायते** (प्र० १।१ पस्पशा०) इति । एतेन शब्दस्य स्वरूपतो नित्यत्वम्, अर्थस्य च प्रवाहनित्यता । यथाऽऽह रघुनाथशर्मा—**इदन्त्ववधेयम्—शब्दार्थयोर्नित्यत्वे समानेऽप्यर्थाना प्रवाहरूपेण नित्यत्वम्, शब्दानान्तु स्वरूपत.** (अम्बाकर्त्री १।१) इति ।

**शब्दस्य विभुत्वसिद्धि.—**

यद् विभु भवति, तद् व्याप्तिमत्त्वात्सर्वत्रोपलभ्यते । तद्यथाऽऽकाशम् । एवमेव कालदिगात्मानोऽपि, एतेषा सर्वमूर्त्तसयोगित्वेन सर्वत्रोपलब्धिर्भवति । मूर्त्तस्तु क्वचिदुपलभ्यते, क्वचिन्न । यथा—वयमेव मूर्त्तत्वेन क्वचिदुपलभेमहि, क्वचिन्न ।

शब्दोऽपि विभुरस्ति, यतो हि एकत्रोच्चरित शब्द· तदन्यदेशस्थितोऽपि जनः त शब्द शृणोति । यथाहर्निश दूरप्रक्षेपणयन्त्रेण, (=Loud Speaker) इति प्रसिद्धेन, शब्दाकर्षकयन्त्रेण (=WIRELESS, TELEVISION, RADIO) इति प्रसिद्धेन च सर्वैर्जनै शब्द श्रूयते । तथा च यतः शब्द सर्वत्राऽनुभूयते, अतः शब्दो विभुर्वर्त्तत इति निर्धार्य्यते ।

यो विभुर्भवति, स एक एव, न तु नाना भवति यथाकाशम्, तथा शब्दोऽपि । अत एवाऽऽह पतञ्जलि —**एक एवेन्द्रशब्दः क्रतुशते प्रादुर्भूतो युगपत् सर्वयागेष्वङ्गं भवति** (म० भा० १।२।६४) इति । अत्रैक एवेन्द्रशब्दः शतसंख्यकेष्वपि यागेषूच्चरित एककालाऽवच्छेदेनैवोपस्थितो भवति व्याप्तिमत्त्वाच्छब्दस्य । अत एवाऽधुनाऽप्यनुभूयते लोकैर्यस्मिन्नेव काल एकत्रोच्चरित शब्द तस्मिन्नेव काले सर्वत्र श्रूयत इति भाष्यस्याऽयमाशय स्फुटीभवति । एतत्स्पष्टीकृत नागेशेनाऽपि—**अयञ्च शब्दस्तत्तत्प्राणिहृदयदेशाऽवच्छिन्नाऽऽकाशदेशस्थः सर्वसमष्टेर्विराजो हृदयरूपबाह्याऽऽकाशदेशस्थश्च । स च लाघवादेक एव विभु । यथैकत्र श्वेतद्रव्ये रूपं व्यापकम्, तथाऽस्याप्याकाश-**

**देशस्थस्य तथात्वमुचितम्** (वै० सि० लघुम० पृ० १६३) इति।

**शब्दस्याऽभिव्यक्तौ त्रयाणां कारणानामुपन्यासः —**

**वायोः परिणामभूतः शब्दः—**

यदा वक्ता कमप्यर्थमभिधातुमिच्छति, तदा तस्याऽऽत्मनि आन्तरः प्रयत्नः समुदेति। तेन कोष्ठस्थिते वायौ कम्पो जायते। कम्पयुक्तः स वायुः स्वस्थानादूर्ध्वं गच्छन् मूर्धानमधिरोहति। ततः प्रतिनिवृत्तस्य वायोरुरःकण्ठताल्वादिस्थानैः सह स्पर्शो भवति। तेनोरःकण्ठताल्वादिस्थानेभ्योनिर्गच्छन् वायुः शब्दाकारतया परिणमति। यथा—मेघस्थमुदकं प्रतिकूलवातसहकृतेनोदकान्तरेणाऽभिहतं विद्युद्रूपतया परिणमति, तथा वायुरपि कण्ठताल्वादिस्थानैरभिहन्यमानः शब्दरूपं गृह्णाति। यथोक्तं हरिणा—

> **लब्धक्रियः प्रयत्नेन वक्तुरिच्छानुवर्तिना।**
> **स्थानेष्वभिहतो वायुः शब्दत्वं प्रतिपद्यते॥** वा० प० १०८ इति

अत्रैको घनीभूतो वायुः कथं नानाविधशब्दाकारेण परिणमतीति चेदुच्यते—यथा—लोष्टादेः पाषाणोपरि जवेन पोथने सति लोष्टादेरवयवा विकीर्णा भवन्ति, तथा घनीभूतस्य वायोरपि कण्ठादिस्थानैरभिघातात्तस्य विशीर्यमाणा अवयवा एव नानाविधशब्दाकारेण परिणमन्ति[1]।

**यथोक्तं भर्तृहरिणा—**

> **तस्य कारणसामर्थ्याद् वेगप्रचयधर्मणः।**
> **सन्निपाताद्विभज्यन्ते सारवत्योऽपि मूर्त्तयः॥** वा० प० १।१०६॥

**अपि चोक्तं शिक्षाकारेणाऽपि—**

> **आत्मा बुद्ध्या समेत्यार्थान् मनो युङ्क्ते विवक्षया।**
> **मनः कायाग्निमाहन्ति स प्रेरयति मारुतम्॥**
> **सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः।**
> **वर्णान् जनयते** (पा० शि० ६-९) इति।

अत्र ब्रूते भर्तृहरिः—

> **स मनोभावमापद्य तेजसा पाकमागतः।**
> **वायुमाविशति प्राणमथासौ समुदीर्य्यते॥**
> **अन्तःकरणतत्त्वस्य वायुराश्रयतां गतः।**
> **तद्धर्मेण समाविष्टस्तेजसैव विवर्त्तते॥**

---

१. द्र०-वै० सि० लघुम० टि० पृ० १५४।

**विभजन् स्वात्मनो ग्रन्थीन् श्रुतिरूपैः पृथग्विधैः ।**
**प्राणो वर्णानभिव्यज्य वर्णेष्वेवोपलीयते ॥**
**अजस्रवृत्तिर्यः शब्दः सूक्ष्मत्वान्नोपलभ्यते ।**
**व्यजनाद्वायुरिव स स्वनिमित्तात् प्रतीयते ॥**
**तस्य प्राणे च या शक्तिर्या च बुद्धौ व्यवस्थिता ।**
**विवर्त्तमाना स्थानेषु सैषा भेदं प्रपद्यते ॥**
(वा० प० ११३—११७) इति ।

**परमाणुपरिणामभूतः शब्दः—**

जैनाः पुद्गलस्य परिणाम शब्द इति सङ्गिरन्ते । ते कथयन्ति यद् विकीर्णा एव परमाणव प्रयत्नप्रेरिता भवन्ति । तेनैतेन परमाणव एव शब्दाकारेण परिणमन्ति । यथा गगने विकीर्णान्येवाऽभ्राणि वायुना प्रचीयन्ते, तथा प्राण-वायुना विकीर्णा एव परमाणव सङ्घीभवन्त शब्दत्व प्रतिपद्यन्ते । यथोक्तम्— **शब्दः पुद्गलपर्याय स्कन्धः छायाऽऽतपादिवत्** (सि० वि० टी० ६।२) इति । अत्र पुद्गल =परमाणु । अपि चोक्त हरिणा—

**अणवः सर्वशक्तित्वाद् भेदसंसर्गवृत्तयः ।**
**छायाऽऽतपतमःशब्दभावेन परिणामिनः ॥**
**स्वशक्तौ व्यज्यमानाया प्रयत्नेन समीरिताः ।**
**अभ्राणीव प्रचीयन्ते शब्दाख्या परमाणवः ॥**
वा० प० १।११०-११ इति ।

**ज्ञानस्य परिणामभूतः शब्दः—**

ज्ञानस्य परिणाम शब्द इति पतञ्जलिर्मनुते । स कथयति यदा उपाध्यायः शिष्यमध्यापयति, तदा—उपाध्यायस्याऽऽत्मनि विद्यमानानि ज्ञानान्येव शब्दत्व प्रतिपद्यन्ते । यतो हि उपाध्यायेनोच्चरित शब्द शिष्यस्याऽऽत्मनि ज्ञान जन-यति । अतो ज्ञानस्य परिणामोऽय शब्द इति निर्धार्य्यते । यथोक्त पतञ्ज-लिना—**ज्योतिर्वज्ज्ञानानि भवन्ति** (म० भा० पा० सू० १।४।२९) इति । अपि चोक्त कैयटेन—**यथा ज्वालारूप ज्योतिरविच्छेदेनोत्पद्यमान सादृश्यात्तत्त्वेनाऽ-ध्यवसीयमानं सन्ततम्, तथैवोपाध्यायज्ञानानि भिन्नानि भिन्नशब्दरूपतामापद्य-मानानि सन्ततान्युच्यन्ते । ज्ञानस्य शब्दरूपापत्तिः** (प्र० १।४।२९) इति । अपि चोक्त हरिणा—

**अथाऽयमान्तरो जातः सूक्ष्मो वागात्मनि स्थितः ।**
**व्यक्तये स्वस्य रूपस्य शब्दत्वेन विवर्त्तते ॥** वा० प० १।११२ इति ॥

एतेषा मतानामुल्लेखोऽधोनिर्दिष्टकारिकया भवति—

**वायोरणूना ज्ञानस्य शब्दत्वापत्तिरिष्यते ।**
**कैश्चिद्दर्शनभेदो हि प्रवादेष्वनवस्थितः ॥**

(वा० प० १।१०७ इति)

**ध्वनि॰**

ध्वनिर्द्विविध. प्राकृतवैकृतभेदात् । तत्र प्राकृतेन ध्वनिना स्फोटोऽभिव्यज्यते । वैकृतेन ध्वनिनाऽभिव्यञ्जितस्य स्फोटस्य स्थितिकाल परिलक्ष्यते ।

**यथोक्त** हरिणा—

**स्फोटस्याऽभिन्नकालस्य ध्वनिकालानुपातिनः ।**
**ग्रहणोपाधिभेदेन वृत्तिभेद प्रचक्षते ॥**
**स्वभावभेदान्नित्यत्वे ह्रस्वदीर्घप्लुतादिषु ।**
**प्राकृतस्य ध्वनेः कालः शब्दस्येत्युपचर्यते** ॥ वा० प० १।७५-७६ इति ॥

एतेनैवैतद्व्याख्यातम्—**इह द्विविधो ध्वनि—प्राकृतो वैकृतश्च । तत्र प्राकृतो नाम येन विना स्फोटरूपमनभिव्यक्त न परिच्छिद्यते । वैकृतस्तु येनाऽभिव्यक्त स्फोटरूपं पुन. पुनरविच्छेदेन प्रचिततरकालमुपलभ्यते** (स्वोप० वृत्ति ) इति । एवमेवाऽऽह सग्रहकारोऽपि—

**शब्दस्य ग्रहणे हेतु. प्राकृतो ध्वनिरिष्यते ।**
**स्थितिभेदे निमित्तत्व वैकृतः प्रतिपद्यते ॥ इति ॥**

(उद्०, स्वोप० वृत्ति १।७६)

**प्राकृतध्वनिः—**

प्राकृतो ध्वनिः स भवति य श्रोत्रेण प्रथम गृहीतो वर्त्तते । एष ध्वनि स्फोटात्पार्थक्येन न गृह्यते, प्रत्युताऽपार्थक्येनैव । यथोक्त हरिणा—

**स्फोटरूपाऽविभागेन ध्वनेर्ग्रहणमिष्यते ।**
**कैश्चिद् ध्वनिरसवेद्यः स्वतन्त्रोऽन्यै. प्रकाशित. ।**

(वा० प० १।८१) इति ।

किञ्च प्राकृतो ध्वनि स्फोटात्मकस्य शब्दस्य ह्रस्वत्व-दीर्घत्वप्लुतत्वानाञ्च निमित्त कारण वर्त्तते । यथाऽऽह भर्त्तृहरि —

**द्रव्याऽभिघातात् प्रचितौ भिन्नौ दीर्घप्लुतावपि ।**
**कम्परूपेण ते जाता नादा वृत्तेर्विशेषकाः ॥**

(वा० प० १।१०५) इति ।

अपि चाह रघुनाथशर्मा—**प्राकृतो नादः स्फोटस्य ह्रस्वत्वादिधर्मभेद-प्रयोजकः** (अम्बाकर्त्री १।१०५) इति।

**वैकृतो ध्वनि —**

शब्दसन्तानक्रमेण यत् मुहुर्मुहुरनुरणन स एव वैकृतो ध्वनि । अस्याऽनुरणनात्मकस्य ध्वने स्पष्टसम्प्रत्यय—कास्यपात्रस्य प्रतिघातजनितेन ध्वनिना परिलक्ष्यते । अत एव द्रुतमध्यमविलम्बितवृत्तीना प्रयोजको ध्वनिर्वैकृत इति कथ्यते । यथाह रघुनाथशर्मा—**वैकृतो द्रुतादिवृत्तिभेदव्यवस्थाहेतु** (अम्बाकर्त्री १।१०५) इति । उक्तभेदो भर्तृहरे—कारिकयाऽपि स्पष्टीभवति ।

> **य संयोगविभागाभ्या करणैरुपजन्यते ।**
> **स स्फोटः शब्दजाः शब्दा ध्वनयोऽन्यैरुदाहृता ॥**
> **अल्पे महति वा शब्दे स्फोटकालो न भिद्यते ।**
> **परस्तु शब्दसन्तान. प्रचयाऽपचयात्मकः ॥**
> **दूरात् प्रभेव दीपस्य ध्वनिमात्र तु लक्ष्यते ।**
> **घण्टादीनाञ्च शब्देषु व्यक्तभेद. स दृश्यते ।**

(वा० प० १।१०२-१०४) इति

**शब्दस्य द्रव्यत्वसिद्धिः—**

शब्दो हि वायो—परिणाम , परिणामपरिणामिनोर्नहि तत्त्वान्तर दृश्यते । यथा—दुग्धस्य दधिरूप—परिणाम , नवनीतस्य घृतरूप—परिणाम. । तथा च यतो दुग्धस्य परिणामभूत दधि नहि तत्त्वान्तर भवति, अतो वायो—परिणाम-भूतस्य शब्दस्याऽपि तदेव तत्त्वम्, यद्वायो । एतेन वायोर्द्रव्यत्वाच्छब्दस्याऽपि द्रव्यत्व निर्धार्य्यते ।

किञ्च पुद्गलस्य परिणामश्शब्द , पुद्गलश्च परमाणु । स च शब्द-तन्मात्रमेव । एतदेव कण्ठताल्वाद्यभिघातजनितेन वायुना प्रचीयमान स्थूल शब्दश्श्रोत्रग्रहणयोग्यो भवति । शब्दतन्मात्ररूपस्य पुद्गलस्य द्रव्यत्वादेतस्य परिणामभूतश्शब्दोऽपि द्रव्यमेवेति निश्चीयते[1] ।

**शब्दस्य गुणत्वसिद्धि —**

ज्ञानस्य परिणामश्शब्द इति पतञ्जलिनाऽभिहितम् । एतेन शब्दस्य गुणत्व सिध्यति, ज्ञानस्य गुणत्वात् । किञ्चाऽऽकाशरूपद्रव्याऽऽश्रितत्वाच्छब्दस्य गुणत्वम् । यथोक्त नागेशेन—**आकाशरूपद्रव्याश्रितत्वाच्छब्दस्य गुणत्वम्** (वै० सि० लघुम० पृ० १८६) इति । किञ्च ध्वनिरूपस्य शब्दस्य गुणत्वमुक्त पतञ्जलिना । तथा ह्येतस्य वचनम्—**स्फोटः शब्द । ध्वनिः शब्दगुण** (म० भा० पा० सू० १।१।७०) इति ।

॥ इति शब्द ॥

---

१. शब्दस्य द्रव्यत्वसाधिका युक्तय साव्यवहारिकद्रव्याऽधिकरणेऽपि प्रदर्शिताः । तत्र द्रष्टव्यम् ।

# अथ पञ्चमः परिच्छेदः

## कर्म

**वैशेषिकदृशा कर्मणः स्वरूपम्—**

अथ कर्मपदार्थो विचार्य्यते। अत्राऽऽदौ वैशेषिकस्य मत प्रस्तूयते। तथाहि—यत्कर्म यस्मिन् द्रव्ये तिष्ठति, तत्कर्म तदाश्रितमेव भवति। यथा—चैत्रवृत्ति यद् गतिकर्म वर्त्तते तन्मैत्रे न भवति। अत एव गतिमति चैत्रे मैत्रो गतिमान् न भवति। यदि चैत्रवृत्ति कर्म मैत्रेऽपि स्यार्त्तह् गतिमति चैत्रे मैत्रोऽपि गतिमान् भवेत्[1]। न च तथा दृश्यते। इत्थ हि सूत्रकार कर्म लक्षयति—**एकद्रव्यमगुणं सयोगविभागेष्वनपेक्षकारणमितिकर्मलक्षणम्** (वै० सू० १।१।१७) इति। अत्रेय विवृत्ति—**एक द्रव्यमाश्रयो यस्य तदेकद्रव्यम्। यथावयविद्रव्यम्। संयोगादिगुणाश्चाऽनेकाश्रितास्तथा किमपि कर्म नाऽनेकाश्रितम्। तथा चाऽनेकाश्रिता वृत्तिः सत्ता साक्षाद् व्याप्यजातिमत्त्व कर्मणो लक्षणम्** (वै० सू० १।१।१७ विवृ०) इति।

किञ्च यद् यस्मिन्नाश्रित भवति, तत्तस्मात् पृथक् प्रतीयते। यथा—चैत्राऽऽश्रित कर्म, चैत्रतः पृथक् प्रतीयते। द्रव्याऽऽश्रितो गुणो न ततः पृथक् प्रतीयते, प्रत्युताऽपृथगेव। यथा—घटस्य रूप घटादपृथग्रूपेणैव भासते।

किञ्च यथा द्रव्य गुणवद् भवति, तथा कर्म न गुणवद्, तेन तस्य द्रव्यभिन्नत्वम्। गुणकर्मणो र्द्रव्यमेवाऽधिकरण भवतीति सिद्धत्वाच्च। अत एवोक्तमुपस्कारकृता—**न विद्यते गुणोऽस्मिन्नित्यगुणम्** (उप०१।१।१८) इति। अत्राऽगुणम्=गुणवद्भिन्नमिति। तथा च गुणवद्भिन्नवृत्तिगुणाऽवृत्तिजातिमत्त्व पर्य्यवसित कर्म लक्षणम्।

किञ्च यदा चैत्रो गच्छति प्रयागात्काशीम्, तदा चैत्रवृत्तिकर्मणा चैत्रस्य प्रयागाद् विभागो भवति, काश्या सह सयोगोऽपि। अत्र सयोगविभागौ प्रति निरपेक्ष सदेव कर्म पूर्वसयोग नाशयदुत्तरसयोग जनयति। यथोक्तमुपस्कारकृता—**यत्र द्रव्ये कर्मोत्पन्नं तेन सम यावद् द्रव्य सयुक्तमासीत्तावत्सख्यकान् विभागाञ्जनयित्वा तावत संयोगानपि पुनरन्यत्र जनयति** (उप० १।१।२०) इति।

---

1. यदि कर्म व्यासज्यवृत्ति स्यादेकस्मिन्द्रव्ये चलति द्वयोर्द्रव्ययोर्बहुषु च द्रव्येषु चलतीति प्रत्यय स्यात्। न चैतत्, तस्मान्न कर्म व्यासज्यवृत्तीत्यर्थ.। उप० वै० सू० १।१।२६।

इदमेवाऽऽह प्रशस्तपादाऽऽचार्योऽपि—**स्वकार्यसयोगविरोधित्वं सयोगविभाग-निरपेक्षकारणत्वम्** (प्र० पा० भा० पृ० १४७) इति ।

**कर्मणो भेदाः—**

एतस्य कर्मण उत्क्षेपणादिभेदेन पञ्च भेदा सन्तीति । तत्रोर्ध्व प्रक्षेपणा-दुत्क्षेपणम् । अध प्रक्षेपणादवक्षेपणम् । विकीर्णाना वस्तूना सज्जीकरणमेवा-ऽऽकुञ्चनम् । सज्जीभूताना वस्तूना विकरणमेव प्रसारणम् । सञ्चरणभ्रमणा-दिकमेव गमनमिति । अत एवोक्त कणादेन—

**उत्क्षेपणमवक्षेपणमाकुञ्चनं प्रसारणं गमनमिति कर्माणि**

(वै० सू० १।१।७) इति ।

एतेषा कर्मणामुल्लेखो विश्वनाथेनाऽपि कृत —

**उत्क्षेपण ततोऽवक्षेपणमाकुञ्चनं तथा ।**
**प्रसारणञ्च गमनं कर्माण्येतानि पञ्च च ॥**
**भ्रमणं रेचन स्यन्दनोर्ध्वज्वलनमेव च ।**
**तिर्यग्गमनमप्यत्र गमनादेव लभ्यते ॥**

(भा० परि० ६-७) इति ।

**वैयाकरणदृशा कर्मण स्वरूपम्—**

अथ वैयाकरणदृशा कर्म विचार्य्यते । इमानि कर्मघटितानि सूत्राणि तथा हि—

| | |
|---|---|
| १—**कर्त्तरि कर्मव्यतिहारे** | पा०सू० १।३।१४ |
| २—**धातो —क्रिया—** | पा०सू० ३।१।२२ |
| ३—**धातो.—कर्मणः—** | पा०सू० ३।१।७ |
| ४—**कर्मवत्कर्मणा तुल्यक्रियः** | पा०सू० ३।१।८७ |
| ५—**णेरणौ यत्कर्म**[1]— | पा०सू० १।३।६७ |

**क्रिया न प्रत्यक्षगम्या—**

क्रिया न प्रत्यक्षगम्या, अपि त्वनुमानगम्या एव । यतो हि सा न काचि-न्मूर्तिमती, या दृष्ट्वैवेयं क्रियेति निर्देश स्यात् । यथा सास्नादिमन्तमर्थं दृष्ट्वाऽय गौरिति, कम्बुग्रीवादिमद् द्रव्य दृष्ट्वाऽय घट इति व्यवहारः प्रवर्त्तते न च तथा व्यवहारः क्रियाया उत्पत्त प्रभवति । अत एवोक्त पतञ्जलिना—

**क्रिया नामेयमत्यन्ताऽपरिदृष्टा । अशक्या क्रिया पिण्डीभूता निदर्शयितुम्, यथा—गर्भो निर्लुठितः** (म० भा० १।३।१) इति [2]। अपि चोक्त कैयटेन—

१ कर्मशब्दः क्रियावाची । उद्० ३।२।१०२ ।
२ अपि च द्र०—म० भा० पा० सू० ३।२।१०२ ।

**यथा परमाणव पिण्डीभूता उपलभ्यन्ते, न केवला । एवं पिण्डीभावाऽभावात् क्रिया न प्रत्यक्षा** (प्र० पा० सू० १।३।१) इति ।

**अनुमानगम्या क्रिया—**

क्रियाया. प्रत्यक्षत्वाऽभावेऽप्यनुमानेन साऽध्यवसीयते । यथा—धूम दृष्ट्वा वह्निं, तथा फूत्काराऽध सन्तापनतण्डुलप्रक्षेपादिषु समवहितेषु सत्सु कि कुरुषे चैत्र ? इति पृष्टे पचामीति स प्रतिब्रूते । पाकक्रियाया सामग्रीसमवधानाऽभावे पचिक्रियाया व्यवहारो न भवति । तथा च यस्या सामग्र्या समवहिताया सत्या, यत्र पचामीति प्रतीतिसाक्षिको व्यवहार प्रवर्त्तते, तस्या सामग्र्या समवहिताया सत्या नून तत्र पाकक्रियाऽस्तीति निर्धार्य्यते ।

किञ्च कदाचिच्चैत्रो वाराणस्या दृश्यते, कदाचित्पाटलिपुत्रेऽऽपि । तत्र येन कारणेन चैत्र कदाचिद् वाराणस्याम्, कदाचित्पाटलिपुत्रे दृश्यते, सा नून चैत्रे क्रियेति गम्यते । यतो हि तामन्तरा चैत्रस्य देशान्तरप्राप्ति. कथमपि न सम्भवति[1] । अत एवोक्त पतञ्जलिना—**इह सर्वेषु साधनेषु सन्निहितेषु कदाचित्पचतीत्येतद् भवति, कदाचिन्न भवति, यस्मिन् साधने सन्निहिते पचतीत्येतद् भवति सा नूनं क्रिया** (म० भा० पा० सू० १।३।१) इति । **अथवा यया देवदत्त इह भूत्वा पाटलिपुत्रे भवति सा नूनं क्रिया** (म० भा० पा० सू० १।३।१) इति च ।

इदमेव भर्तृहरिणाऽप्युक्तम्—

**यावत्सिद्धमसिद्ध वा साध्यत्वेनाऽभिधीयते ।**
**आश्रितक्रमरूपत्वात् तत्क्रियेत्यभिधीयते ।।**

(वा० प० ३।८।१) इति ।

उक्तमेवाह हेलाराज—**किं करोति, पचतीति पचादीनां करोतिना सामानाधिकरण्यात् क्रियाविशेषवाचकत्वाऽवसाय** (वा० प० हेला० ३।८।१) इति ।

## कर्मणो भेदाः

**इङ्गितादिक्रिया—**

अर्थाना प्रकाशनाय ग्रहणाय च कायपरिस्पन्द प्रवर्त्तते । अक्षिपक्ष्मभ्यामिङ्गितेन साङ्केतिकोऽर्थो गृह्यते । अत एवेङ्गितेनाऽमुमर्थमबोधिषमहम् इत्याह । किञ्चकिञ्चिद्वस्तुग्रहणाय कश्चन प्रवर्त्तते चेत्तदा वस्तु गृह्णाति चैत्र इति कश्चिद् ब्रूते । अत्र वस्तु ग्रहीतु चैत्रस्य हस्तपादयोश्चेष्टा जायते । किञ्च जीवनाऽदृष्टेन

---

१. देशान्तरप्राप्तिलक्षणेन कार्य्येणाऽबाधितेन क्रियाख्य कारणमनुमीयते । प्र० पा० सू० १।३।१ इति ।

वायुना अक्षिपक्ष्मणोर्निमेषोन्मेषौ भवत । एतेषा क्रियात्वमभिहित पतञ्जलिना **यर्त्तहि तदिङ्गित चेष्टितं निमिषितमिति, स शब्दः ? नेत्याह क्रिया नाम सेति** (म० भा० पस्पशा०) इति ।

**प्रधानक्रियाया निष्पत्तौ बह्व्च सहकारिण्य क्रियाः—**

तण्डुल पचति चैत्र इत्यत्र विक्लित्तिरूपा या क्रिया सा प्रधानक्रिया । एतस्या बह्व्च सहकारिण्य. क्रिया । यथाध सन्तापनम्, फूत्कार, चुल्ह्या परिधारणम्, उदकनिक्षेपणम्, तण्डुलप्रक्षेपणम्, दर्व्या परिघट्टनम्, एधोऽपकर्षणम्, अधश्श्रयणञ्च । एता क्रिया कुर्वन्नेव चैत्र. तण्डुले विक्लित्तिमुत्पादयति । अत्र यावद्विक्लित्तिक्रिया सिद्धा न भवति, तावत् पचतीति व्यवहार प्रवर्त्तते । अत एवैध सन्तापनादारभ्याऽधश्श्रयणान्त यावत्पचतीति भवति **नत्वपाक्षीदिति** । विक्लित्तर्निष्पत्तौ तु **अपाक्षीदित्येव,** न तु पचति । यथोक्त पतञ्जलिना—**यद्यप्येका सामान्यक्रिया, अवयवक्रियास्तु बह्व्च । अधिश्रयणोदकाऽऽसेचनतण्डुलाऽऽवपनैधोऽपकर्षणक्रियाः** (म० भा० पा० सू० ३।१।२२) इति । इदमेवाऽऽह भर्तृहरिरपि—

> **गुणभूतैरवयवैः समूह. क्रमजन्मनाम् ।**
> **बुद्धया प्रकल्पिताऽभेद क्रियेति व्यपदिश्यते ॥**
> **समूहश्च तथा भूत प्रतिभेदं समूहिषु ।**
> **समाप्यते ततो भेदे कालभेदस्य सम्भवः ॥** वा० प० ३।८।४-५ इति

किञ्च **पश्य मृगो धावतीति** वाक्ये प्रधानभूताया दर्शनक्रियाया मृगकर्तृका धावनक्रिया सहकारिणी भवति। अत एवोक्तवाक्याद्—मृगकर्त्तृक यद् धावनम्, मत्प्रेरणाविषयीभूत त्वत्कर्त्तृक दर्शनमिति शाब्दबोध । अत्र दर्शनक्रियाया धावनक्रिया कर्म भवति । यथोक्त हरिणा—

> **मृगो धावति पश्येति साध्यसाधनरूपता ।**
> **तथा विषयभेदेन सरणस्योपपद्यते ॥** वा० प० ३।८।५१ ॥ इति ।

**क्रियाभेद —**

क्रिया द्विधा, साध्यसिद्धभेदात् ।[१] अत्र साध्या आख्यातपदवाच्या, सिद्धा तु घञादिकृत्प्रत्ययवाच्या । आख्यातवाच्या या क्रिया, तस्या लिङ्गादीनामन्वयो न भवति, कृत्प्रत्ययवाच्या या क्रिया, तस्या लिङ्गादीनामन्वयो भवति, प्रातिपदिकत्वात् ।

१. द्र०—हेला० वा० प० ३।८।५८ इति ।

आख्यातवाच्या या क्रिया सा क्रियान्तर नाऽऽकाङ्क्षति । यथा चैत्र—पचति, मैत्रो गच्छति, रमेश—क्रीडतीत्यादौ । कृत्प्रत्ययवाच्या या क्रिया सा क्रियान्तर-माकाङ्क्षति । यथा—पाक , पक्ति , पचनमित्यादौ । नहि पचति चैत्र , गच्छति मैत्र इत्यादिवाक्यजन्यबोधेऽस्त्यादीनामाकाङ्क्षा समुदेति, निराकाङ्क्षतयैव पाकक्रियागमनक्रिययोरर्थबोधकत्वात् । पाक , पक्ति , पचनमित्यादौ नह्यस्त्यादेः क्रियान्तर विना आकाङ्क्षाया समाप्तिर्भवति । अत्राऽऽकाङ्क्षायाः शान्तये अस्त्यादीनामाकाङ्क्षा समुदेति, पाकोऽस्ति, पाकोऽभूद् वेति । तथा च यतः पचति, गच्छति, क्रीडतीत्युक्ते क्रियान्तरस्याऽऽकाङ्क्षा विनैवाऽर्थाऽवबोधन भवति, अत आख्यातवाच्या (=तिङ्वाच्या) क्रिया मुख्या । यतश्च पाक पक्ति, पचनमित्यादौ क्रियान्तरस्याऽऽकाङ्क्षा समुदेति, अत पाकादिवाच्या या क्रिया सा गौणक्रियास्तीति निर्धार्य्यते । यथोक्त हरिणा—

> **साध्यत्वेन क्रिया तत्र धातुरूपनिबन्धना ।**
> **सिद्धभावस्तु यस्तस्याः स घञादिनिबन्धन ॥**
>
> वा० प० ३।८।४७ इति

> **साध्यत्वात् तत्र चाऽऽख्यातैर्व्यापाराः सिद्धसाधनाः ।**
> **प्राधान्येनाऽभिधीयन्ते फलेनाऽपि प्रवर्तिता ॥**
>
> वा० प० ३।८।४० इति ।

अपि चाऽऽह हेलाराज—**व्यापारा. क्रियारूपाः साध्यस्वभावाः तिङन्तै प्रधानभावेनाऽभिधीयन्ते । क्रिया प्रधानमाख्यातम्** (हेला० वा० प० ३।७।४०) इति ।

**समभिहारक्रिया —**

**धातोरेकाचो हलादेः क्रियासमभिहारे यङ्** (पा० सू० ३।१।२२) । अत्र कश्चित्समभिहारार्थे शङ्कते—**इह समभिहारो नाम मूर्त्तस्याऽनेकस्यैककालस्य भवति । धातुवाच्या तु क्रियैकैव, युगपदेकेन धातुनाऽनेकस्याऽनभिधानात् । सा च निवृत्तभेदा साध्यैकस्वभावत्वाद् धातुना प्रत्याय्यते । अधिश्रयणादि-क्रियाणाञ्च क्रमजन्यत्वाद्युगपदवस्थानाऽभावाच्च क्रियासमभिहारो न सम्भवतीति कैयटः प्रदीपे ।**

**अयमर्थः । समभिहारो नाम मूर्त्तानामेव भवति, न त्वमूर्त्तानाम् । यथा देशान्तरे स्थितस्याऽनेकघटादेः कार्यवशादेकत्र** सङ्घीभवनमेव समभिहारः । धातु-वाच्या तु या क्रिया सैकैव मुख्या क्रिया भवति । युगपदेकेन धातुना बह्व्या क्रियाया अभिधान न भवतीति, असम्भवादनभिधानाच्च । यतो हि क्रिया निवृत्तभेदैव भवति। साध्यैकस्वभावत्वाद्धातुना एतस्या प्रतीतिरुत्पद्यते । यद्यपि फूत्काराऽधः-

सन्तापनादिक्रिया सहकारिण्य. सन्त्येव, तथाप्येतासां क्रमिकोत्पत्त्या एता क्रिया युगपदुपस्थातु न शक्नुवन्ति । तथा च युगपदुपस्थानाऽभावात्क्रियाया समभिहारो न सम्भवतीति ।

यद्यपि मुख्यक्रियाया· समभिहारो न भवति, तथापि या फूत्कारादिसहकारिण्यो बह्व्यः क्रिया ता गौणक्रिया । एता॒केनचित्साकल्येन क्रियन्ते चेत् तासा क्रियाणा बुद्धौ पौर्वापर्यं कृत्वा समभिहार. सेत्स्यतीति[1] ।

यथोक्त पतञ्जलिना **यद्यप्येका सामान्यक्रिया, अवयवक्रियास्तु बह्व्यः । अधिश्रयणोदकाऽऽसेचनतण्डुलाऽऽवपनैधोऽपकर्षणक्रिया । एता॒कश्चित्कात्स्न्र्येन करोति कश्चिदकात्स्न्र्येन । य कात्स्न्र्येन** करोति स उच्यते **पापच्यत** इति । **पुन॒पुनर्वा पचति—पापच्यत इति** (म० भा० पा० सू० ३।१।२२) इति ।

अस्मिन् भाष्ये द्विविध समभिहार प्रदर्शित । तत्र **य कात्स्न्र्येन[2] करोती**ति भाष्येण क्रियाया **भृशार्थरूप समभिहार·**, **पुन॒पुनर्वा पचतीति** भाष्येण क्रियाया॒**पौन॒पुन्यरूपः समभिहारश्च प्रतीयते** । अत एव काशिकावृत्तिकृता **पौन॒पुन्यं भृशा र्[2] वा क्रियासमभिहार** इति प्रकृतसूत्रे व्युदपादि । तथा च प्रधानक्रिया सहकारिण्या क्रियया सह कात्स्न्र्येन केनचिन्निष्पाद्यते यदा तदा भृशार्थरूप समभिहार॒क्रियाया भवति । यदा च प्रधानक्रिया सहकारिण्या क्रियया सह अकात्स्न्र्येन सम्पद्यते तदा सा क्रिया भृशार्थो न भवति । यदा च क्रिया क्रियान्तरव्यवधानसहकृतैव प्रवर्त्तते, सा पौन पुन्यलक्षणा । नहि मासमधीते चैत्र इत्यादौ चैत्रस्य मासपर्यन्तमध्ययनस्य नैरन्तर्य प्रतीयते, अपितु क्रियान्तरव्यवधानसहकृतेनाऽध्ययनेन क्रियाया॒ पुन॒पुनरावृत्तिरेव । एतस्या एव पौन॒पुन्येन ग्रहण भवतीति । अत एवोक्तम्—**प्रधानक्रियाया॒पचनक्रियाया॒क्रियान्तरव्यवधानेन आवृत्ति॒पौन॒पुन्यम्** (प्रक्रि० कौ० प्रसा० टी० पा० सू० ३।१।२२) इति ।

**क्रियासातत्यम्—**

यत्र क्रियाया अविच्छेदेन आवृत्तिर्लक्ष्यते, सा क्रियासातत्यमित्युच्यते । सूत्रितं च पाणिनिना—**अपरस्परा॒ क्रियासातत्ये** (पा० सू० ६।१।१४४) इति अस्मिन् सूत्रे=अपरस्परा =अविच्छेदा । तथा च अपरस्परा गच्छन्ति= अविच्छेदेन गच्छन्ति । **अत्र ब्रूते दीक्षितः—अपरस्परा सार्था गच्छन्ति, सततमविच्छेदेन गच्छन्तीत्यर्थः ।**

---

१. द्र०—वा० प० ३।८।४-५ ।

२. एकप्रधाने क्रियाया अधिश्रयणादिकाया साकल्येन सम्पत्ति. । फलाऽतिरेको वा । प्रक्रि० कौ० प्रसा० टी० पा० सू० ३।१।२२,

**क्रियाव्यतिहारः—**

अत्र क्रियाव्यतिहारपदेन क्रियाया विनिमयो गृह्यते । अत्र विनिमयोऽन्यस्य योग्य कार्यं केनचिदन्येन क्रियते । यथा—शूद्रस्य योग्य शस्यादिलवन कार्यं ब्राह्मणेन क्रियते । एषोऽर्थो **व्यतीलुनीत** इत्यनेनोच्यते ।

अत्र क्रियाव्यतिहारेण साध्यसाधनभावयोर्व्यत्याम एव गृह्यते । यतो हि साध्यैकस्वभाववती क्रिया भवति, क्षणमात्रव्यापिनी च व्याप्तिमत्त्वाच्च । अत एवोक्त कैयटेन—**क्रियाणां साध्यैकस्वभावत्वात्कथ व्यतिहार इति चेद् योग्यतावशादस्येय क्रिया साध्या, अस्या इद साधनमिति निर्ज्ञाते साध्यसाधनभावे यो व्यत्यासः स क्रियाव्यतिहार.** (प्र० पा० सू० १।३।१४) इति ।

किञ्च द्वाभ्या बहुभिर्वा एका एव क्रिया मुहुर्मुहु परस्परमावर्त्यते चेत्तदा सा क्रियाव्यतिहारो भवति । यथा—**सम्प्रहरन्ते राजानः ।** अत्रैका एव प्रहाररूपा क्रिया राज्ञो राज्ञा वा युधि पुनरावर्त्यते । तत्र क्रियायाः साध्यैकस्वभावत्वमेव प्रतीयते । अत एवोक्त कैयटेन—**परस्परकरणमपि क्वचित् क्रियाव्यतिहारः—यथा सम्प्रहरन्ते राजान इति । अत्रैकैव क्रिया सञ्चारिणीव लक्ष्यते** (प्र० पा० सू० १।३।१४) इति ।

**कर्त्तरि कर्मव्यतिहारे** (पा० सू० १।३।१४) इति सूत्रे कर्मपदेन क्रिया गृह्यते कर्मणा क्रियाया ग्रहण भवतीति वैयाकरणाना मतम् । यथोक्त कैयटेन **क्रियाया साध्यत्वात्प्राधान्यात्क्रिययाऽऽप्तुमिष्टतमत्वात्तादर्थ्ये क्रियाप्रवर्त्तनात् कर्मणोऽपि प्राधान्यादुभयव्यतिहारे लब्धे कर्मग्रहणात् क्रियाव्यतिहारोऽयं गृह्यते, क्रियाया धातुवाच्यत्वमन्तरङ्गत्वाच्च** (प्र० पा० सू० १।३।१४) इति ।

**लक्षणरूपा क्रिया—**

साध्यसिद्धभेदेन क्रियाया द्वैविध्य प्रागभिहितम् । तत्र साध्यक्रियाया सिद्धा क्रिया लक्षण भवति । साध्या क्रिया आख्यातेनाभिधीयते, सिद्धा क्रिया तु कृता । यथोक्त पतञ्जलिना—**तिष्ठन् मूत्रयतीत्युक्ते तिष्ठतिक्रिया मूत्रयतिक्रियाया लक्षणम् । गच्छन् भक्षयतीत्युक्ते गच्छतिक्रिया भक्षयतिक्रियाया लक्षणम् । योऽधीयान आस्ते स देवदत्त इत्युक्ते अध्ययनक्रिया आसनक्रियाया लक्षणम् । य आसीनोऽधीते स देवदत्त इति, आसिक्रियाऽध्ययनक्रियाया लक्षणम् । शयाना वर्द्धते दूर्वेत्यत्र शेतिक्रिया वृद्धिक्रियाया लक्षणम् । आसीनं वर्द्धते विसमित्यत्र आसिक्रिया वृद्धिक्रियाया लक्षणम् । शयाना भुञ्जते यवना इत्यत्र शयनक्रिया भोजनक्रियाया लक्षणमिति** (म० भा० पा० सू० (३।२।१२६ इति ।

**हेत्वात्मकक्रिया—**

यथा सिद्धा क्रिया साध्यायाः क्रियाया लक्षणं भवति, तथा हेतुरपि। हेतुना फल गृह्यते। अत एवोक्तम्—**हेतु फलमपि** (सि० कौ० पा० सू० ३।३।२३) इति। तथा च **अर्जयन् वसतीत्युक्ते** सत्यर्जनमेव फल यस्य स वसतीत्यर्थ। अर्जनरूप फलमेव वसतिक्रियाया हेतु। किञ्च **हरिं पश्यन् मुच्यते**=हरिदर्शन-क्रिया मुक्तिक्रियायाः कारणम्। तेन हेतोः कारणमर्थः।

**क्रियाप्रबन्धः—**

क्रियाप्रबन्ध=अनुष्ठानक्रियाया विच्छेदाभाव। अविच्छेदेन क्रियायाः करणमेव क्रियाप्रबन्ध। यथा **यावज्जीवं भृशमन्नमदादिति** वाक्येन जीवन-पर्यन्ताऽन्नदानक्रियाया सञ्चालनमेव, न तु तस्याः कदापि परित्याग। एतेन दानक्रियाया विच्छेदाऽभाव एवाऽर्थो गृह्यते, न तु तस्या नैरन्तर्य्यरूपोऽर्थो ग्रहीतु शक्यते, एतादृश्या दानक्रियाया अशक्यत्वात्। नहि दानक्रिया नैरन्तर्य्येण गतिमती प्रतीयते। तस्मात्क्रियाप्रबन्धस्य क्रियाया विच्छेदाऽभाव एवाऽर्थो ग्राह्य। अस्या **नानद्यतनवत् क्रियाप्रबन्धसामीप्ययो** (पा० सू० ३।३।१३५) इति सूत्रेण पाणिनिना समुल्लेखोऽकारि।

क्रियासामीप्यम्=तुल्यजातीयक्रियातो व्यवधानाऽभावोऽर्थ[1]। यथा—येय पौर्णमास्यतिक्रान्ता, तस्यामग्नीनाधित इति वाक्येन क्रियायाः सामीप्यरूपोऽर्थः प्रतीयते, यतो हि सम्प्रत्येव पौर्णमास्यतिक्रान्ता, तया नूनमेव क्रियासामीप्य द्योत्यते। यद्यप्यत्र पौर्णमास्यामतिक्रान्ताया सत्या कृष्णपक्षस्य केचिदहोरात्रा व्यतीतास्तैर्व्यवहितेऽपि, तथापि क्रियाया सामीप्य न हीयते, सजातीयेन व्यव-हितत्वात्, विजातीयेनैव व्यवधानमसोढव्य भवति, सजातीयव्यवधानन्तु सोढ-व्यमेव। यथोक्त बालमनोरमाकृता **पौर्णमास्या उपरि कृष्णपक्षे कतिपयाऽ-होरात्रैर्व्यवधानेऽपि सामीप्यमस्त्येव, पौर्णमास्यन्तरेण सजातीयेन व्यवधानाऽ-भावात्** (बालमनोरमा पा० सू० ३।३।१३५) इति।।

**क्रियातिपत्ति—**

क्रियातिपत्ति=क्रियाया असिद्धिरर्थो गृह्यते। एतस्या निष्पत्तेरभावस्तु कारणस्याऽभावादेव भवति। यथा **सुवृष्टिश्चेदभविष्यत्तदा सुभिक्षमन्नमभवि-ष्यदिति** वाक्येन पुष्कलभिक्षाया अभावो गम्यते, वृष्टिरूपस्य कारणस्याऽभा-वात्। यतो हि वृष्टौ सत्यामेव कृषका कृषिकर्माणि सुष्ठुरूपेण कुर्वन्ति, तेनै-

---

१. सामीप्य तुल्यजातीयेनाऽव्यवधानमर्थः। सि० कौ० पा० सू० ३।३।१३५।

तेषा गृहेऽन्नाधिक्य जायते । तत एव प्रमोदात् कृषकाः प्रचुरमन्नदान भिक्षुभ्यो ददति । वृष्टेरभावात्तु प्रचुरमन्न कृषका न लभन्ते । तेन कृषका भिक्षुभ्यः पुष्कला भिक्षा दातु न शक्नुवन्ति—**कुतश्चिन्निमित्तात्क्रियाया अनिष्पत्तिः क्रियातिपत्तिः** (उद्० पा० सू० ३।३।१३९) इति ।

किञ्च साधनाऽतिपत्तिरपि क्रियातिपत्तावेव कारण भवति, ग्राह्यसाधनमन्तरा भोजनक्रियाया अभावात् । अत्र साधनभेदेन[1] भोजनक्रियाया भेदो[2] गम्यते । यतो हि तदभावेऽपि भोजनक्रियाया निष्पत्तिस्तु भवत्येव, साधनस्यैवाऽसिद्धिर्भवतीति[3] । यथोक्त पतञ्जलिना—**तर्हि वक्तव्यम् ? न वक्तव्यम् । नान्तरेण साधनं क्रियायाः प्रवृत्तिरस्तीति । साधनाऽतिपत्तिश्चेत्क्रियाऽतिपत्तिरपि भवति** (म० भा० पा० सू० ३।३।१३९) इति ।

**क्रियार्था क्रिया—**

यत्र प्रधानक्रियायाः प्रवृत्तिर्गौणक्रियाया निष्पत्तये भवति, तत्र गौणक्रियार्था प्रधानक्रिया भवति । यथा **द्रष्टुं** यातीति वाक्येन गमनक्रियाया उत्पत्तिर्दर्शनार्था भवति । यतो हि कश्चन कुत्रचिद् गत्वा कमप्यभिलषितविषयमेव पश्यति । नहि गमनमन्तरा दर्शनक्रियाया निष्पत्तिर्भवितुमर्हति, विषयस्य दूरे स्थितत्वादिति द्योत्यते । एवमेव **फलेभ्यो यातीत्यादिवाक्यै**रप्यवगन्तव्यम् । अत एवोक्त पाणिनिना **क्रियार्थोपपदस्य च कर्मणि स्थानिन.** (पा० सू० २।३।१४) इति ।

**अभ्यावृत्तिक्रिया—**

यत्रैकैव क्रिया पुनः पुनरावर्त्यते तत्र सा अभ्यावृत्तिरिति कथ्यते । यथा **पञ्चकृत्वो भुङ्क्ते** इति वाक्येनैका एव भोजनक्रिया पञ्चभि. संख्याभिरावृत्ता, तस्या पञ्चत्वमभ्युपयुज्यते । अत्रैकस्या एव क्रियायाः पञ्चत्व कृत्वसुचा प्रद्योत्यते । अत एवोक्त पाणिनिना **संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्** (पा० सू० ५।४।१७) इति ।

---

१. साधन मासादि प्र० पा० सू० ३।३।१३९,

२. करणभेदाद्भिन्नैव भोजनक्रिया । तेन मांसाऽतिपत्तौ मासभोजनक्रियातिपत्तिरेव । प्र० पा० सू० ३।३।१३९,

३. मासस्याऽत्रानिष्पत्ति । भोजनक्रियायास्तु निष्पत्तिरेव । प्र० पा० सू० ३।३।१३९ ।

यथोक्तम्—

> एकत्वाऽऽवृत्तिभेदाभ्यां भेदाऽभेदसमन्वये ।
> सख्यास्तत्रोपलभ्यन्ते संख्येयाऽवयवक्रिया ॥ वा० प० ३।८।४१ ॥ इति ।

अपि चोक्तम्—निःसंख्या एकाऽपि क्रिया यदा आवर्त्तते, तदा आवृत्ति निबन्धनं भेदं स्वतश्चाऽभेदमुपादाय भेदाऽभेदयोगेऽस्याः संख्या दृश्यन्ते । एकफलत्वादेककर्त्तृत्वाच्च क्रियैका पुनःपुनःप्रवृत्तिलक्षणाञ्चाऽऽवृत्तिमनुभवति । अत्राऽऽख्यातेन सकलक्रियाप्रवाहो भेदेनाऽभिधीयते । आवृत्तिनिबन्धनन्तु भेदमवयवाऽधिकरणं सख्यापदमनुभवति । तथा च कृत्वसुचा व्युत्पत्तिः (हेला० ३।८।४१) इति ।

॥ इति कर्म ॥

# षष्ठः परिच्छेदः

## सामान्यम्

**वैशेषिकदृशि सामान्यम्—**

अथ सामान्यं विचार्य्यते । अत्रादौ वैशेषिकस्य मतं प्रदर्श्यते । तथाहि—भवति हि सास्नादिमति द्रव्येऽयं गौः, करचरणादिमति द्रव्ये मनुष्योऽयमिति व्यवहारः । अत्रैतस्य व्यवहारस्य प्रयोजकं कारणं किमिति प्रश्नः समुदेति । यतो हि किमपि कारणमन्तरा एतादृशो व्यवहारो न प्रवर्त्तते, व्यवहारस्य कारणापेक्षितत्वात् । कारणमन्तरा स प्रवर्त्तेत चेद् यथा गवि गौरयमिति व्यवहारः, तथा तत्राऽयमश्व इत्यपि व्यवह्रियेत । परन्तु नैव भवति, प्रत्युत गवि गौरित्येव, अश्वेऽश्व इत्येव, एतेषां व्यवहाराणां प्रयोजकं कारणं किमिति चिन्तायामनुगतप्रतीतिरूपो धर्मः सामान्यसंज्ञकः कारणमस्तीति निर्धार्य्यते ।

एतच्च सामान्यमनुवृत्तबुद्धिरूपम् । यतो ह्यनेकवस्तुष्वनुगतप्रतीत्या गौरयम्, मनुष्योऽयमिति बुद्धिरुदेति । एवमनुस्यूततयाऽनेकेषु प्रतीयमानो यो धर्मः, स एव सामान्यमिति कथ्यते । यथोक्तम्—**सामान्यविशेष इति बुद्ध्यपेक्षम्** (वै० सू० १।२।३) इति । व्याख्यातञ्चैतच्छङ्करमिश्रेण **अनुवृत्तबुद्धिः सामान्यस्य** (उप० १।२।३) इति । अत्र द्रव्यगुणकर्मस्वनुगतप्रतीतेः सत्त्वात्सत्ता सामान्यमेव, सत्ता द्रव्यं न, गुणो न, कर्म नेति व्यावृत्तबुद्धेरसत्त्वात् । अत एव द्रव्यं सद्, गुणः सन्, कर्म वा सदित्यनुवृत्तबुद्धेः प्रवर्त्तनात् सत्तेति कथ्यते । यथोक्तं कणादेन—**सदिति यतो द्रव्यगुणकर्मसु सा सत्ता** (वै० सू० १।२।७) इति ।

एवञ्च द्रव्यादिष्वनुवृत्तबुद्धेः सत्त्वात्सत्ता सामान्याख्यां सञ्ज्ञां लभते । यथोक्तं कणादेन—**भावोऽनुवृत्तेरेव हेतुत्वात्सामान्यमेव** (वै० सू० १।२।४) इति । व्याख्यातञ्च शङ्करमिश्रेण—**भावः=सत्ता अनुवृत्तेरेव हेतुः** (उप० १।२।४) इति ।

**सत्ताया एकत्वम्—**

सत्ता द्रव्याद्यवच्छेदकभेदेन न भिद्यते । यतो हि द्रव्यादिषु सदित्याकारकमेव ज्ञानं सत्ताया भवति । एतच्च ज्ञानं द्रव्यादिषु समानरूपेणैवाऽनुस्यूत-

तया सलक्ष्यते । तेनैनेन द्रव्यादिषु सस्थिता या सत्ता सैकैवेति गम्यते । अत एवोक्तम्—**सदिति लिङ्गाऽविशेषाद् विशेषलिङ्गाऽभावाच्चैको भाव** (वै० सू० १।२।१७) इति । अत्र भाव =सत्ता ।

**सत्ताया विभुत्वम्—**

यत सत्ताया एकत्व सिद्ध भवति, अत एतस्या व्यापकत्वं गम्यते । यतो ह्य`कत्वसख्यावद् यद् द्रव्य भवति, तद् विभु भवति । यथैकमाकाशम्, एका दिक् एक—काल । यद्यप्येतेषामौपाधिकभेदान्नानात्वमपि तथाऽप्येतेषा निरुपाधित-यैकत्वमस्त्येव । तथा च सत्ताया विभुत्वमेष्टव्यम्, एतस्या एकत्वात् । यद्यपि द्रव्याद्यवच्छेदकभेदेन द्रव्यत्वादीनि सामान्यानि नानाविधानि सन्ति तथापि निरुपा-धितया द्रव्यादिष्वनुस्यूततया प्रतीयमानाया सत्ताया एकत्वस्याऽक्षतत्वात् ।

सत्ताया विभुत्वमस्ति चेत् सर्वत्रैवाऽय गौ`, अय गौरित्यादिर्व्यवहार: स्यात, सत्ताया. सर्वमूर्त्तसयोगित्वात् । तथा च यथा गवि गोत्वम्, तथा गोव्यतिरिक्तेऽश्वादावपि गोत्व प्रतीयेत, सत्ताया विभुत्वात् । न च तथा प्रती-यते, किन्तु गव्येव गोत्वम्, न तु गवि अश्वत्वम्, न वाऽश्वे गोत्वमिति । अत` सत्ता न विभ्वीति चेदुच्यते, गोत्वादिसामान्य समवायेन यत्र तिष्ठति तत्रैव गोत्वमिति व्यवहार. । यथा सास्नादिमति द्रव्ये समवायेन गोत्व तिष्ठति । अतो गव्येव गोत्वम्, न तु गोव्यतिरिक्ते पिण्डे गोत्वव्यवहारो भवति, समवायेन गोत्वस्याऽभावात् । तथा च सत्ताया स्वरूपसम्बन्धेन सर्वत्र स्थितायामपि गोव्यतिरिक्ते पिण्डे समवायेन गोत्वस्याऽभावादश्वादौ गोत्वव्यवहारो न, यथा कालिकसम्बन्धेन काले रूपस्य सत्त्वेऽपि कालो रूपवानिति व्यवहारो न भवति । अत. सत्ता विभ्वीति निर्धार्य्यते । यथोक्तम्—**सामान्य नित्यं व्यापकञ्च । व्यापकत्वमपि स्वरूपत सर्वदेशसम्बद्धत्वम् । न च देशानां गोव्यवहा-रापत्तिः समवायेन तद्व्यवहारस्याऽभ्युपगमात् । काले रूपादिसत्त्वेऽपि कालो रूपवानित्यप्रतीतिव्यवहारवत्** (उप० १।२।३) इति ।

**द्रव्यादिभ्यो बहिर्भूता सत्ता—**

**यद् वस्तु यस्माद्देशतः पृथग् वर्त्तते, तत्तत. स्वरूपतोऽपि भिन्नं भवति ।** यथा घटः पटाद् भिन्न , पटो घटाद् भिन्न` । द्रव्यगुणकर्मभ्य. सत्ता भिन्ना नास्ति, एतेभ्य—पृथक् सत्ताया—प्रतीतेरभावात् । तथा च यत सत्ता द्रव्यादिभ्यो न पृथक्, अतो द्रव्यगुण-कर्माऽनर्थान्तरमेव सत्तेति केचिद् व्याचक्षते[1] । परन्त्वे-

---

१. यतो हि यद् भिन्न भवति, तत्ततो भेदेनाऽनुभूयते । यथा घट पटात्, पटो घटात् । न च सत्ता एतेभ्यो भेदेनाऽनुभूयत इति तदात्मिकैवेति सत्ता । उप० १।२।८ इति ।

तन्न समीचीनम्, यतो हि द्रव्य सत्, गुणः सन्, कर्म वा सदित्यनुगतप्रतीत्या सत्ताया अनुगतत्व सिद्धम् । द्रव्य न गुण , न वा द्रव्य कर्म । गुणो न द्रव्यम्, न वा गुण कर्म । कर्म न द्रव्यम्, न वा कर्म गुण इत्येवरीत्या द्रव्यगुणकर्मणा नाऽनुगतत्वम् । तथा चाऽननुगताऽनुगतयोर्विरोधात् सत्ताया द्रव्यगुणकर्माऽन-र्थान्तरत्व न सिध्यति । यथोक्तम्—**द्रव्यगुणकर्मभ्योऽर्थान्तर सत्ता** (वै० सू० १।२।८) इति । व्याख्यातञ्चैतच्छङ्करमिश्रेण—**द्रव्यादयोऽननुगताः । सत्ता चाऽनुगता । तथाचाऽनुगतत्वाऽननुगतत्वलक्षणविरुद्धधर्माध्यासेनैतेभ्यो भेदस्य सिद्धत्वात्** (उप० १।२।८) इति । अपि चाह कणाद —**गुणकर्मसु च भावान्न कर्म न गुणः** (वै० सू० १।२।९) इति । व्याख्यातञ्चैतच्छङ्करमिश्रेण—**नहि कर्म कर्मसु वर्त्तते, न वा गुणो गुणेषु । न वा द्रव्यं गुणे कर्मणि च, सत्ता तु द्रव्ये गुणे कर्मणि च वर्त्तते । तेन द्रव्यगुणकर्मवैधर्म्यात्तेभ्यो भिन्नैव सत्ता** (उप० १।२।९) इति ।

किञ्च 'यद्यतो भिन्नस्तत्तत—पृथक्' इत्येषा प्रतीतिर्युतसिद्धपदार्थानामेव भवति । यथा युतसिद्धौ घटपटौ स्त , एतयोर्भेदेन प्रतीयमानत्वात् । अतो घट-पटयोरेव भेदव्यवहारः । सत्ता न युतसिद्धपदार्थो द्रव्यादिभ्यो भेदेनाऽप्रतीय-मानत्वात् । तथा च सत्ताया अयुतसिद्धपदार्थत्व सिद्ध भवति । तेनाऽयुत-युतयोरपि विरोधान्न सत्ता द्रव्याद्यर्थान्तर भवितुमर्हति । तस्माद् द्रव्यादिभ्यो भिन्ना सत्ता, न तु द्रव्याद्यात्मिकैव सत्तेति निश्चीयते ।

किञ्च सत्ताया द्रव्याद्यनर्थान्तरत्व स्वीक्रियेत चेद् यथा द्रव्यादीना पृथिव्यादिषु द्रव्यमिदम्, द्रव्यमिदमित्यनुगतप्रतीत्या द्रव्यत्वम्, एवमुत्क्षेपणा-दिषु कर्मसु कर्मेदमित्यनुगतप्रतीत्या कर्मत्वम् । रूपादिषु गुणोऽयमित्यनुगत-प्रतीत्या गुणत्वञ्च सामान्यम् । द्रव्य न गुण , न वा कर्म । गुणो न द्रव्यम्, न वा कर्म । कर्म न गुणो, न वा द्रव्यमिति व्यावृत्तबुद्धेर्जननादेतेषा विशेषत्वमपि तथा सत्ताया अपि सामान्यविशेषसञ्ज्ञे सेत्स्यत. । न च सत्ताया. सामान्य-विशेषसञ्ज्ञे भवतः, द्रव्यादिषु सदिदम्, सदिदमित्यनुगतप्रतीते सत्त्वात्, व्यावृत्त-बुद्धेरसत्त्वाच्च । तथा च द्रव्यादिष्वनुगतप्रतीते सत्त्वात्सामान्यमेव सत्तेत्यव-धार्य्यते । यथोक्तम्—**सामान्यविशेषाऽभावेन च** (वै०सू० १।२।१०) इति । व्याख्यातञ्चैतच्छङ्करमिश्रेण **यदि सत्ता द्रव्यं गुण कर्म वा स्यात्तदा सामान्य-विशेषवती स्यात् । न च सत्तायां सामान्यविशेषा द्रव्यत्वादय उपलभ्यन्ते । नहि भवति सत्ता द्रव्यं गुणः कर्म वेति केषाञ्चिदनुभव.** (उप० १।२।१०) इति ।

एवञ्च द्रव्यादिभ्यो भिन्नैव सत्ता सिद्धा भवतीत्यास्थीयते ।

एवमेव पृथिव्यादिषु **द्रव्यमित्यनुगतप्रतीतेः** सत्त्वाद् **द्रव्यत्वम्,** रूपादिषु **गुणोऽयमित्यनुगतप्रतीतेः** सत्त्वाद् **गुणत्वम्,** उत्क्षेपणादिषु **कर्मेदमित्यनुगत-**

प्रतीतेः सत्त्वात् **कर्मत्वं** सामान्यम् । पृथिवीत्वादयो रूपत्वादय उत्क्षेपणत्वादयश्च विशेषा व्यावृत्तबुद्धेः सत्त्वात् । यथोक्त कणादेन—**द्रव्यत्वं कर्मत्वञ्च सामान्यानि विशेषाश्च** (वै० सू० १।२।५) इति । व्याख्यातञ्चैतच्छङ्करमिश्रेण—**चकारेण पृथिवीत्वादीनि द्रव्यगतजातीः, रूपत्वादीनि गुणगतजातीः, उत्क्षेपणत्वादीनि कर्मगतजातीश्च समुच्चिनोति** (उप० १।२।५) इति ।

**सामान्यस्य भेदा**—

एवञ्च सत्ता सामान्यम्, द्रव्यादिष्वनुवृत्तबुद्धे. सत्त्वात्सामान्यमेव न विशेष । अत एव सत्ताया परसामान्यत्व सिद्ध भवति । द्रव्यत्वादि सामान्यम्, पृथिव्यादिनवस्वनुवृत्तबुद्धे सत्त्वात्, द्रव्य न गुणः, न वा कर्मेति व्यावृत्तबुद्धे. सत्त्वाद् विशेषोऽपि । अत एव द्रव्यत्व गुणत्व कर्मत्वञ्चाऽपर सामान्यमिति कथ्यते । एवमेव पृथिवीत्व रूपत्वमुत्क्षेपणत्वादिसामान्य घटत्व शुक्लत्वादिकञ्च विशेषोऽपि । अत्र परत्वाऽपरत्वे सामान्ये अपेक्षाबुद्धिकृते एव भवत । यथोक्तम् —**सामान्यं द्विविधम्, परमपरञ्च । तत्र पर सत्ता, अपर सत्ताव्याप्यं द्रव्यत्वादि** (उप० १।२।३) इति । सामान्यस्य भेदा विश्वनाथेनाऽपीत्थमुपदर्शिता —

> **सामान्य द्विविधं प्रोक्तं परञ्चाऽपरमेव च ।**
> **द्रव्यादित्रिकवृत्तिस्तु सत्ता परतयोच्यते ॥**
> **परभिन्ना च या जातिः सैवापरतयोच्यते ।**
> **व्यापकत्वात् पराऽपि स्याद् व्याप्यत्वादपराऽपि च ॥**
>
> भा० परि० ८,९,१० क इति ।

**जातेर्बाधका षड्हेतवः**—

आकाशत्व न जातिर्व्यक्तेरेकत्वात् । एतस्यौपाधिकनानात्वेऽपि निरुपाधितयैकत्वस्याऽक्षतत्वात् । अत एवाऽनेकव्यक्तिव्यङ्ग्या जातिरिति कथ्यते ।

(२) कलशत्व न जातिर्घटव्यक्त्या तुल्यत्वात् ।

(३) भूतत्वमूर्त्तत्वे न सामान्ये स्त, आकाश विहाय पृथिव्यादिचतुर्षु मनसि च मूर्त्तत्व तिष्ठति, मनो विहाय पृथिव्यादिपञ्चसु भूतत्वञ्च । पृथिव्यादिचतुर्षु भूतत्वमूर्त्तत्वयो सत्त्वात्सङ्करः । तथा चैतयो साङ्कर्यदोषस्य सत्त्वादेते सामान्ये भवितु नार्हतः ।

(४) सामान्ये न सामान्यान्तरमस्ति, तथा सति अनवस्थादोषस्य जायमानत्वात् । अतो घटत्वाद्येव सामान्यम्, न तु घटत्वत्वादि सामान्यम् ।

(५) विशेषे न विशेषत्व सामान्यम्, अन्यथा परमाणूना परस्परव्यावर्त्तकरूपस्य सिद्धिर्न भवेत् । यतो हि यदि विशेषे विशेषान्तर सामान्य मन्येत तदा विशेषस्य व्यावर्त्तक विशेषत्व भविष्यति । तथा च विशेषस्य स्वतो व्यावर्त्तकरूपस्याऽसिद्धि स्यात् । तथा च परसहायवान् विशेष. परमाणून्

परस्पर व्यावर्त्तयितु न शक्ष्यति । अतो विशेषे न विशेषान्तर सामान्यमस्तीत्यास्थीयते ।

(६) समवाये न समवायत्व सामान्यम्, समवायस्यैकत्वात्, आकाशत्वादिवत् । तस्य नानात्वेऽपि समवायत्वरूप सामान्य नास्त्येव, सम्बन्धाऽभावात् । सम्बन्धान्तरकल्पनेऽनवस्थाप्रसङ्गाच्च । अत. समवाये न समवायत्वमित्यवधार्य्यते । यथोक्तम्—

**समवायसम्बन्धाऽभावात् समवायत्वं न जातिः । समवाये समवायान्तरकल्पनेऽनवस्थाप्रसङ्गात् । उत्पादविनाशशालिनो बहवः समवाया इति मतेनैतत् । अन्यथैकव्यक्तिकत्वादपि समवायत्व न जातिः स्यादिति ।** (वै० सू० १।२।३ विवृ०) इति । एतेषा दोषाणा सङ्ग्राहक श्लोकोऽपि पठ्यते—

**व्यक्तेरभेद तुल्यत्व सङ्करोऽथाऽनवस्थिति ।**
**रूपहानिरसम्बन्धो जातिबाधकसङ्ग्रह ॥**

(भा० परि० १० क सि० मु० उद्०) इति ।

**व्याकरणदृशि सामान्यम्—**

अथ व्याकरणदृशा सामान्य विचार्य्यते । इमानि सामान्यपदघटितानि, तत्सम्बद्धानि च सूत्राणि—

| | |
|---|---|
| १—**समुच्चये सामान्यवचनस्य** | पा० सू० ३।४।५ |
| २—**उपमानानि सामान्यवचनै** | पा० सू० २।१।४५ |
| ३—**उपमित—सामान्याऽप्रयोगे** | पा० सू० २।१।५५ |
| ४—**जात्याख्यायाम्—** | पा० सू० १।२।५८ |
| ५—**पोटा—जातिः** | पा० सू० २।१।६५ |
| ६—**प्राणभृज्जातिः** | पा० सू० ५।१।१२९ |
| ७—**कुस्तुम्बुरूणि जातिः** | पा० सू० ६।१।१४३ |

शब्दशास्त्रे सामान्यस्य द्विविध स्वरूपम्, लौकिकपारिभाषिकभेदात् । तत्र लौकिक हि सामान्यमाकृतिग्राह्यम्, पारिभाषिकन्तु गोत्रचरणप्रत्ययान्तैरभिव्यङ्ग्यम् । एते सामान्ये क्रमेण विचार्य्येते ।

**आकृतिग्रहणा जातिः—**

आकृतिरवयवसस्थानम्, आक्रियते—व्यवच्छिद्यते स्वाश्रयोऽनयेति व्युत्पत्ते । अवयवसस्थानैर्जातिरभिव्यज्यते । व्यक्तीनामानन्त्येऽपि जात्यभिव्यञ्जकाऽवयवसस्थानस्य सादृश्यादय गौ, अय पशु, अश्वोऽयमित्याद्यनुगतबुद्धेरुपजननाद् गवि गोत्वम्, पशौ पशुत्वम् । अश्वेऽश्वत्वमित्यादीनि सामान्यानि भिन्नभिन्नाऽवयवसस्थानैरभिव्यज्यन्ते । अत एव **सरूपाणामेकशेष एकविभक्तौ** (पा० सू० १।२।६४) इति सूत्रभाष्ये **कथ पुनर्ज्ञायते—एकाऽऽकृतिः, सा चाऽभिधीयत इति । प्रख्याऽविशेषात् । नहि गौरित्युक्ते विशेष प्रख्यायते—शुक्ला,**

**नीला, कपिला, कपोतिका** (म० भा० १।२।६४) इति पतञ्जलिनाऽभिहितम् । अत्र प्रख्या=बुद्धि । एतस्या नानाविधव्यक्तिषु समानरूपतया प्रत्यवभासमानत्वादेक सामान्य निर्धार्य्यते । यथोक्त कैयटेन—**प्रख्या=बुद्धि·, तस्या अविशेषादेकरूपत्वाद्विषयस्याऽप्यैक्यं प्रतीयते । गुणप्रमाणादिभिन्नेष्वपि गोपिण्डेषु गौर्गौरित्येकाकारप्रत्ययोदयादवश्यमेकेनाऽऽलम्बनेन सामान्येन भाव्यमिति जातिसद्भाव., एकत्वञ्चाऽवसीयते** (प्र० पा० सू० १।२।६४) इति । नागेशेनाऽपि—**भिन्नेष्वभिन्नाऽभिधानप्रत्ययनिमित्त जाति** (लघुश० शे० पा० सू० ४।१।६३) इत्युक्तम्—

एषा आकृत्यभिव्यङ्ग्या जातिर्जन्यैरेव द्रव्यैर्लभ्यते,[1] जन्या एव आकृतिमन्तो भवन्तीति प्रतीतेः । नह्यजन्या आकृतिमन्तो दृश्यन्ते । अत एव ये नित्या॒ परमाणव , ते जाति न प्राप्नुवन्ति, एतेषा परमाणूना जन्यत्वाऽभावेन जात्यभिव्यञ्जकाऽवयवसम्थानस्याऽभावात् ।[2] तथा च नित्या एव जातय आकृतिमन्त पदार्थमायान्ति ।[3] तेनैतया जात्याऽय गौ , अय घटः, अय काक , अय श्येन., अय मनुष्य इत्यादयो व्यवहारा॒ प्रवर्त्तन्ते । यतो हि गवादिव्यक्तिष्वनुस्यूततया गोत्वादिजातय॒ प्रतीयन्ते । गोघटादिभिराकारवद्भि. सा जातिरभिव्यज्यत इत्यस्य स्वीकारा**देवेग्यण सम्प्रसारणम्** (पा० सू० १।१।४५) इति सूत्रभाष्ये **काकाज्जात॒ काकः, श्येनाज्जातश्श्येन** इत्युक्त पतञ्जलिना । व्याख्यातञ्चैतत् कैयटनागेशाभ्याम्—

**अनुपजातजात्यभिव्यञ्जकसस्थानविशेष॒ काको भवति, निर्ज्ञातञ्च तस्य काकाज्जन्म भवति** (प्र० पा० सू० १।१।४५) इति ।

**न उपजातो जात्यभिव्यञ्जक. संस्थानविशेष आकारविशेषो यस्येत्यर्थ** (उद्० पा० सू० १।१।४५) इति । एतेन काकादीनामवयवसस्थानै॒ काकत्वादीनि सामान्यान्यभिव्यज्यन्त इति निर्धार्य्यते ।

**लिङ्गानाञ्च न सर्वभाक्—**

ये सर्वाणि लिङ्गानि स्त्रीपुक्लीवरूपाणि न गृह्णन्ति, तेऽपि जातिमन्तो भवन्ति । यथा ब्राह्मणक्षत्रियवैश्यशूद्रा न सर्वलिङ्गयुक्ता भवन्ति, प्रत्युत त्रिषु लिङ्गेष्वन्यतममेव लिङ्ग गृह्णन्ति । अतो ब्राह्मणादीनामसर्वलिङ्गत्वाद् ब्राह्मणत्वादीनि सामान्यानि सिद्धानि भवन्ति । ब्राह्मणत्वादीनि नाऽवयव-

१. जननेन या प्राप्यते सा जाति. । म० भा० पा० सू० ५।३।५५ ।

२. नित्याना परमाण्वादीना जननाऽभावात्तद्गताया जातेर्जननेनाऽप्राप्यत्वात् । (प्र० ५।३।५५) इति ।

३. घटादिके च द्रव्ये यत्नेनैवोत्पद्यमाने पुरुषप्रयत्नेन विना नित्या जातयो व्यक्तिमायान्ति । प्र० पा० सू० ५।३।५५ ।

सीता भगवती माया जनसम्मोहकारिणी । लक्ष्मणो भुवनाधारः साक्षाच्छेषः फणीश्वरः ।।१७।।
ब्रह्मणा प्रार्थिताः सर्वे रक्षोगणविनाशने । मायामानुषभावेन जाता लोकैकरक्षकाः ।।१८।।
वयं च पार्षदाः सर्वे विष्णोर्वैकुण्ठवासिनः । मनुष्यभावमापन्ने स्वेच्छया परमात्मनि ।।१९।।
वयं वानररूपेण जातास्तस्यैव मायया । वयं तु तपसा पूर्वमाराध्य जगतां पतिम् ।।२०।।
तेनैवानुगृहीताः स्मः पार्षदत्वमुपागताः । इदानीमपि तस्यैव सेवां कृत्वैव मायया ।।२१।।
पुनर्वैकुण्ठमासाद्य सुखं स्थास्यामहे वयम् । इत्यङ्गदमथाश्वास्य गता विन्ध्यं महाचलम् ।।२२।।
विचिन्वन्तोऽथ शनकैर्जानकीं दक्षिणाम्बुधेः । तीरे महेन्द्राख्यगिरेः पवित्रं पादमाययुः ।।२३।।
दृष्ट्वा समुद्रं दुष्पारमगाधं भयवर्धनम् । वानरा भयसन्त्रस्ताः किं कुर्म इति वादिनः २४।।
निषेदुरुदधेस्तीरे सर्वे चिन्तासमन्विताः । मन्त्रयामासुरन्योन्यमङ्गदाद्या महाबलाः ।।२५।।
भ्रमतो मे वने मासो गतोऽत्रैव गुहान्तरे । न दृष्टो रावणो वाद्य सीता वा जनकात्मजा २६।।
सुग्रीवस्तीक्ष्णदण्डोऽस्मान्निहन्त्येव न संशयः । सुग्रीववधतोऽस्माकं श्रेयः प्रायोपवेशनम् ।।२७।।
इति निश्चित्य तत्रैव दर्भानास्तीर्य सर्वतः । उपाविविशुस्ते सर्वे मरणे कृतनिश्चयाः ।।२८।।

सुनो—भगवान् श्रीराम कोई साधारण मनुष्य नहीं हैं। वे निर्विकार साक्षात् नारायण देव हैं ।। १६ ।। भगवती श्रीसीताजी जगन्मोहिनी माया हैं तथा च श्रीलक्ष्मणजी त्रिभुवनाधार साक्षात् नागराज श्री शेषजी हैं ।। १७ ।। ये लोग ब्रह्माजी की प्रार्थना करने पर राक्षसों का नाश करने के लिये माया-मानव के रूप में अवतरित हैं। इनलोगों में प्रत्येक व्यक्ति त्रिलोकी की रक्षा करने में समर्थ हैं ।। १८ ।। हम लोग वैकुण्ठ-वासी भगवान् विष्णु के पार्षद हैं। स्वेच्छया भगवान् जब मनुष्य रूप में अवतरित हुए तब हमलोग उनकी माया-शक्ति से वानर के रूप में उत्पन्न हो गये। पूर्व समय में हमलोग श्रीजगदीश्वर की आराधना तपस्या के द्वारा किये थे। अत एव उनकी कृपा से हम लोग उनके पार्षद हुए थे। इस समय भी हमलोग माया की प्रेरणा से उनकी सेवाकर अन्त में सुखपूर्वक वैकुण्ठ में रहेंगे। इस प्रकार अङ्गदजी को आश्वस्तकर हनुमानजी विन्ध्य पर्वत पर गये ।। १९–२२।।

पुनः धीरे-धीरे श्रीजानकीजी का अन्वेषण करते हुए दक्षिण समुद्र के तटपर महेन्द्र पर्वत की तराई में पहुँचे ।। २३ ।। वहाँ पर अपार, अगाध और भय को बढ़ाने वाला समुद्र को देखकर वे भयभीत हो गये और परस्पर कहने लगे कि हमें अब क्या करना चाहिए ? ।। २४ ।। अङ्गद आदि सभी महापराक्रमी वानर गण अत्यन्त शोकाकुल हो समुद्र तट पर बैठकर आपस में विचार विमर्श करने लगे ।। २५ ।। अहो ! वन में खोजते-खोजते उस गुफा में ही एक मास व्यतीत हो गया किन्तु अभी तक हम रावण अथवा जनक-नन्दिनी सीता को नहीं देख सके ।। २६ ।।

सुग्रीव तीक्ष्ण दण्डवाला है, निःसन्देह वह हमें मार देगा। सुग्रीव के द्वारा मरने से तो अच्छा है कि हम प्रायोपवेशन ( अन्न-जल छोड़ना ) से ही प्राणत्याग करें, इसमें हमारा अधिक कल्याण है ।। २७ ।। यह निर्णय कर वे सब यत्र-तत्र कुशासन बिछाकर मरने का निश्चय कर वहीं बैठ गये ।। २८ ।। इसी समय

एतस्मिन्नन्तरे तत्र महेन्द्राद्रिगुहान्तरात् । निर्गत्य शनकैरागाद्गृध्रः पर्वतसन्निभः ॥२९॥
दृष्ट्वा प्रायोपवेशेन स्थितान्वानरपुङ्गवान् । उवाच शनकैर्गृध्रः प्राप्तो भक्ष्योऽद्य मे बहुः ॥३०॥
एकैकशः क्रमात्सर्वान् भक्षयामि दिने दिने । श्रुत्वा तद्गृध्रवचनं वानरा भीतमानसाः ॥३१॥
भक्षयिष्यन्ति नः सर्वानसौ गृध्रो न संशयः । रामकार्यं च नास्माभिः कृतं किञ्चिद्धरीश्वराः ३२॥
सुग्रीवस्यापि च हितं न कृतं स्वात्मनामपि । वृथानेन वधं प्राप्ता गच्छामो यमसादनम् ॥३३॥
अहो जटायुर्धर्मात्मा रामस्यार्थे मृतः सुधीः । मोक्षं प्राप दुरावापं योगिनामप्यरिन्दमः ॥३४॥
सम्पातिस्तु तदा वाक्यं श्रुत्वा वानरभाषितम् । के वा यूयं मम भ्रातुः कर्णपीयूषसन्निभम् ॥३५॥
जटायुरिति नामाद्य व्याहरन्तः परस्परम् । उच्यतां वो भयं माभून्मत्तः प्लवगसत्तमाः ॥३६॥
तमुवाचाङ्गदः श्रीमानुत्थितो गृध्रसन्निधौ । रामो दाशरथिः श्रीमान् लक्ष्मणेन समन्वितः ३७॥
सीतया भार्यया सार्धं विचचार महावने । तस्य सीता हृता साध्वी रावणेन दुरात्मना ॥३८॥
मृगयां निर्गते रामे लक्ष्मणे च हृता बलात् । रामरामेति क्रोशन्ती श्रुत्वा गृध्रः प्रतापवान् ३९॥
जटायुर्नाम पक्षीन्द्रो युद्धं कृत्वा सुदारुणम् । रावणेन हतो वीरो राघवार्थे महाबलः ॥४०॥

वहाँ महेन्द्राचल के गुफा से निकल कर धीरे-धीरे पर्वताकार एक गृध्र आया ॥ २९ ॥ वहाँ पर प्रायोपवेशन के लिये बैठे बड़े-बड़े वानरों देखकर वह मन्द स्वर में कहने लगा—आज बहुत सा खाद्य मुझे प्राप्त हो गया है ॥ ३० ॥ प्रतिदिन मैं एक-एक कर इन्हें खाऊँगा। गृध्र के ये वचन सुनकर वे सभी वानर भयभीत होकर कहने लगे ॥ ३१ ॥ निःसन्देह यह गृध्र हम लोगों को खा जायेगा। हे वानरेश्वरगण! हमलोग भगवान का कार्य तो कुछ किये नहीं और राजा सुग्रीव का अथवा अपना भी हम कुछ हितकार्य नहीं किये। व्यर्थ ही हमलोग इससे मरकर यमलोक को जायेंगे ॥ ३२–३३॥

अहो! धर्मात्मा जटायु धन्य है जो बुद्धिमान् श्रीराम के कार्य के लिये अपना प्राण दे दिया। योगियों को भी दुर्लभ वह शत्रुदमन मोक्ष-पद प्राप्त कर लिया ॥ ३४ ॥ वानरों के ये वाक्य सुनकर सम्पाति बोला—हे कपिश्रेष्ठ! आपलोग कौन हैं जो आपस में मेरे कानों को अमृत के समान प्रिय लगने वाले मेरे भाई जटायु का नाम ले रहे हैं। आप मुझसे किसी प्रकार से भय-भीत न हों और अपना वृत्तान्त सुनाओ ॥ ३५–३६ ॥

तब श्रीमान् अङ्गदजी उठकर उस गृध्र के पास गये और बोले— दशरथनन्दन श्रीरामचन्द्रजी अनुज लक्ष्मण और प्राण प्रिया सीता के साथ घोर दण्डकारण्य में विचरण कर रहे थे। वहाँ उनकी साध्वी भार्या सीता को दुरात्मा रावण हर ले गया ॥ ३७–३८ ॥ राम और लक्ष्मण जब मृगया के लिये गये थे तब वह बलात् सीता को हरण कर ले गया। उस समय वे हा राम! हा राम! यह कहकर रोने लगी। उनका यह रूदन सुनकर महाप्रतापी पक्षिराज गृध्रवर जटायु श्रीरघुनाथजी के लिये रावण से घोर युद्ध किया, परन्तु अन्त में महाबलवान् वीरवर रावण के हाथ मारे गये ॥ ३९–४० ॥

त्वात् । अत एवोक्तं पतञ्जलिना—**आविष्टलिङ्गा जातिर्यल्लिङ्गमुपादाय प्रवर्त्तते, उत्पत्तिप्रभृत्याविनाशान्न तल्लिङ्गं जहाति** (म० भा० पा० सू० १।२।५२) इति ।[1]

अत्राऽऽविष्टलिङ्गा=नियतलिङ्गेत्यर्थः । यथोक्तं कैयटेन—**आविष्टं लिङ्गं** यया साऽऽविष्टलिङ्गा नियतलिङ्गेत्यर्थः इति ।

**गोत्रञ्च चरणानि च—**

अत्र गोत्रम्—अपत्यम् । चरणं शाखावचनं, वेदशाखाऽध्येतर्य्युपचर्य्यते तथा चाऽपत्यप्रत्ययान्ता औपगवादयः, कठशाखाध्यायिनश्च ये, तेऽपि जातिमन्तो भवन्ति ।[2] अत एव **औपगवीभार्य्यः**, कठीभार्य्यश्चेत्यादीनां जातित्वात् **जातेश्चेति** पुंवद्भावस्य प्रतिषेधान्निष्पत्तिर्भवति । अन्यथा गोत्रप्रत्ययान्तस्य सर्वलिङ्गत्वात्, कठशाखाध्यायिनश्चाऽवयवसंस्थानैरग्राह्यत्वाच्च जातित्वेनैतयोर्ग्रहणं न स्यात् । तथा च यतः एतयोर्जातित्वेन ग्रहणं भवेत्, अतः एतयोर्जातिरुपपत्तये **गोत्रञ्च चरणैः सहेति** जातेर्लक्षणान्तरं दर्शितम् । तेनैतयोर्जातित्वेन ग्रहणं भवति ।

गोत्रप्रत्ययान्तौपगवादिशब्दानाम्, कठादिशाखाध्येतॄणाञ्च जातित्वं वैयाकरणा एव मन्यन्ते, नत्वन्ये प्रयोजनाऽभावात् । एतयोर्जातित्वमङ्गीकृत्य **औपगवीभार्य्यः, कठीभार्य्यः** इत्यादौ पुंवद्भावस्य प्रतिषेधरूपं कार्य्यं शब्दशास्त्र एव भवति । अत एवैतयोर्जातित्वमवगच्छन्ति शाब्दिकाः । तेनैतयोः शब्दशास्त्रपरिभाषितं जातित्वं सिद्धं भवतीति ।

**बौद्धमतेन जातेः खण्डनम्—**

बौद्धा जातिं न स्वीकुर्वन्ति । ते कथयन्ति यद्बह्वीषु **गोव्यक्तिषु** गौरयं गौरयमिति प्रतीतिस्तु **अतद्व्यावृत्त्या** भवति, न तु **गोत्वमिति** जात्या । यतो हि गोषु गोभेदो नास्ति, प्रत्युताऽश्वादेरेव । अत एव गोष्वयं गौरित्यनुगतप्रतीतिः, अश्वादेर्भेदस्य सत्त्वादेव भवति । गोषु **अतद्व्यावृत्तिरस्तीति** जातिवादिनोऽपि मन्यन्त एव । अत एतयैवाऽनुगतप्रतीतिर्न तु जात्या भवतीत्यास्थीयते ।[3]

किञ्च गोत्वमिति जातिः स्वीक्रियते चेत् सा जातिः कुत्र वर्त्तते, न तावद् गवि, गोत्ववृत्तेः पूर्वं तस्या असत्त्वात् । नाऽप्यगवि, विरोधात् । यस्मिन् गोपिण्डे

१. अपि च द्र० म० भा० पा० सू० १।२।६४ ।

२. गोत्रमिति—अपत्यमित्यर्थः । चरणशब्देन शाखाध्यायिनो गृह्यन्ते गोत्रस्य सर्वलिङ्गत्वात् पृथगुपादानम् । प्र० पा० सू० ४।१।६३ ।

३. नाऽस्माभिरपोहशब्देन विधिरेव केवलोऽभिप्रेतः । नाऽप्यन्यव्यावृत्तिमात्रम्, किन्त्वन्यापोहविशिष्टो विधिः शब्दानामर्थः । ततश्च न प्रत्येकपक्षीयनिपातदोषाऽवकाश इति । अपोहसिद्धिः

गोत्वमुत्पद्यते, तस्मिन् पिण्डे कुत आगत्य गोत्व वर्त्तते। न च तत्रैव तावद् गोत्वमासीद्, तथा सति देशस्यापि गोत्वापत्ते । न च गोत्वमपि गवादिना सहैवोत्पद्यते, गोत्वस्य नित्यत्वस्वीकारान्नैव वक्तु शक्यते। न च गोत्वमन्यत आगच्छति, निष्क्रियत्वाङ्गीकारात्। नचैकस्यैव नित्यस्य गोत्वस्य नानाव्यक्ति-वृत्तित्व सम्भवति, कार्त्स्न्यैकदेशविकल्पानुपपत्ते । नहि कृत्स्नमेकत्रैव वर्त्तते, अन्यत्र तद्विशिष्टप्रत्ययानुदयप्रसङ्गात्। नाऽप्येकदेशेन, जातेरेकदेशस्याऽभावात्। यथोक्तम्—

> **ना याति न च तत्राऽऽसीन् न चोत्पन्नं न चांशवत्।**
> **जहाति पूर्वं नाऽऽधारमहोव्यसनसन्ततिः** ॥ प्रमा० वा० परि० ३।१५१।१५२ इति।

अत्र सामान्यवादिन इत्थ कथयन्ति—एतच्च सस्थानमात्रव्यङ्ग्यम्, नित्य व्यापकञ्च। व्यापकत्वमपि स्वरूपत सर्वदेशसम्बद्धत्वम्। न देशाना गोव्यव-हारापत्ति, समवायेन तद्व्यवहारस्याऽभ्युपगमात्। यथा काले कालिकसम्बन्धेन रूपस्य सत्त्वेऽपि कालो रूपवानिति व्यवहारो न भवति, तथा जातेरपि। सम-वायेन यस्मिन् गोत्वम्, रूप वा तिष्ठति, तस्मिन्नेव गोत्व रूप वा प्रतीयते ।

एवञ्च यदुक्तम्, **गोत्व कुत्र वर्त्तन** इति, यस्मिन् पिण्ड उत्पद्यते, तत्रस्थमेव गोत्व तेन सम्बध्यत इति समाधीयते । कीदृश्याश्रये वर्त्तत इति पृष्टे सति यत्र प्रतीयत इत्युत्तरयति। कुत्र प्रतीयत इत्यत्र यत्र वर्त्तत इति प्रतिब्रूते। गोत्ववृत्ते —पूर्वं स पिण्ड—कीदृगासीत्? नासीदित्येवोत्तर भवति।

किञ्च यदुक्तम् **अतद्व्यावृत्तिरेव गोत्वमिति**, एतदपि न समीचीनम्, बह्वीषु गवादिव्यक्तिष्वय गौरिति विधिमुख—प्रत्यय एव बाधकोऽतद्व्यावृत्ते-र्भवतीति। यथोक्त **विधिज—प्रत्ययोऽन्योऽन्य व्यतिरेकाऽसमर्थक** इति। नहि गौरयमिति प्रत्यये गोव्यावृत्तिरपि भासते । कार्त्स्न्यैकदेशविकल्पस्तदा भवेद् यद्येकस्य सामान्यस्य कार्त्स्न्यं भवेदेकदेशो वा। कृत्स्नता ह्यनेकाशेषता। सा चैकस्मिन्नोपपन्ना। गौरयमित्याद्यनुभव एवाऽसद्विषयो न वस्तुव्यवस्थापनक्षम इत्युत्तरेण बौद्धमतस्य खण्डन भवतीति। अत एवोक्तम्—

> **अगोनिवृत्तिः सामान्यं, वाच्य यैः परिकल्पितम्।**
> **गोत्व वस्त्वेव तैरुक्तमगोऽपोहगिरा स्फुटम्** ॥ इति
> मा० मे० जा० प्र० पृ० २३३।

**स्वमतपुष्टये दार्शनिकान्तराणां मतस्योपन्यासः—**

मीमासको ह्यवयवसस्थानैरभिव्यङ्ग्यमेव सामान्य मन्यते[1] । एतच्च

---

१ प्राभाकरास्तु सस्थानमात्रव्यङ्ग्य सामान्यमाचक्षते । उप० वै० सू० १।२।३।

सामान्य गवादिव्यक्तिगत नित्य प्रत्यक्षज्ञानगोचरश्च वर्त्तते। इदञ्च व्यक्तौ तादात्म्येन सलक्ष्यते। तादात्म्यञ्च द्विविधम्, भिन्नाऽभिन्नभेदात्। तत्र गौरश्व:, पुरुष इत्यादौ भिन्न तादात्म्यम्, गौर्गौ, घटो घट इत्यादावभिन्न तादात्म्यञ्चेति।

यथोक्तम्—

**जातिर्व्यक्तिगता नित्या प्रत्यक्षज्ञानगोचरः।**
**भिन्नाऽभिन्ना च सा व्यक्ते कुमारिलमते मता ॥**

मा० मे० अ० प्र० पृ० २९०।२९१ इति।

अपि च—

**जातिराश्रयतो भिन्ना प्रत्यक्षज्ञानगोचरः।**
**पूर्वाकाराऽवमर्शेन प्रभाकरगुरोर्मता ॥**

जातिनि० प्र० ४ श्लो० २ इति।

अवयवसस्थानैर्यन्नाऽभिव्यज्यते तन्न सामान्यम्। यथा ब्राह्मणत्वादीनि। यतो हि ब्राह्मणादीनामवयवसस्थानस्य तुल्यत्वात्तैरवयवैर्ब्राह्मणत्वादीनि सामान्यानि नाऽभिव्यज्यन्ते। अत एतेषा ब्राह्मणादीना ब्राह्मणत्वादि न सामान्यम्, अपि तूपाधिरेवेति निर्धार्य्यते। अत एवोक्तम्—**अनयैव दिशा ब्राह्मणत्वादि-जातिर्निवारिता** (प्र० पञ्जि० पृ० १००) इति।

गौतमोऽप्यनेकव्यक्तिष्वनुगतैकाकारप्रत्ययजनक सामान्यमाचष्टे। यथोक्तम्—**समानप्रसवात्मिका जातिः** (न्या० सू० २।२।७०) इति। अस्यार्थ— यावत्स्थित्येकाकारबुद्धिजननस्वभावात्मिकेत्यर्थः। अत्र ब्रूते वात्स्यायन—**या समानबुद्धि प्रसूते भिन्नेष्वधिकरणेषु, यया बहूनि इतरेतरतो न व्यावर्त्तन्ते, योऽर्थोऽनेकत्र प्रत्ययानुवृत्तिनिमित्त तत् सामान्यम्, यच्च केषाञ्चिदभेदं केषाञ्चिद् भेदं करोति तत् सामान्यविशेषो जातिरिति।**

कणादोऽपि गौतमस्य मत पुष्णाति। यतो हि बह्वीषु व्यक्तिष्वनुवृत्तबुद्धेर्यत्कारण भवति, तदेव सामान्यमित्युच्यते। यथोक्तम्—**भावोऽनुवृत्तेरेव हेतुरिति सामान्यमेव,** (वै० सू० १।२।४) इति। व्याख्यातञ्चैतदुपस्कारकृता—**भाव.—सत्ता, अनुवृत्तेरेव हेतुर्न तु व्यावृत्ते। तथा च विशेषसंज्ञां न लभते** इति। तथा च यावत्स्थित्येकाकारप्रतीतिरनुवृत्तिबुद्धिरेव सामान्यमिति निष्कर्ष।

अस्ति व्यक्तिवृत्ति सामान्यम्। यतो हि व्यक्तीना नाशेऽपि **तदेवेदमिति** प्रत्यभिज्ञा भवति। एषा सामान्यस्य सत्त्वादेव सम्भवति। व्यक्तिगत सामान्यं न स्वीक्रियते चेद् व्यक्तीना **नाशात्तदेवेदमिति** प्रत्यभिज्ञासम्प्रत्ययो न स्यात्। **भवति च तदेवेदमिति** प्रत्यभिज्ञा। अतो व्यक्तिगत सामान्यमस्तीति निश्चीयते।

यथोक्तम्—**अनित्यत्वेऽपि स्थिरतायोगात् प्रत्यभिज्ञानं सामान्यस्य** (सा० सू० ५।९१) इति । व्याख्यातञ्चैतद्विज्ञानभिक्षुणा—**व्यक्तीनामनित्यत्वेऽपि स एवायं घट इति स्थिरतायोगेन यत्प्रत्यभिज्ञान तत् सामान्यस्य, सामान्यविषयकमेव तत् प्रत्यभिज्ञानम्** (सा० प्र० भा० ५।९१) इति ।

अय गौ, नाऽश्व इति भेदप्रत्ययस्य यत्कारणम्, तन्सामान्यमेव भवति । यतो ह्यनेकगोव्यक्तिषु गोत्व सामान्यम् । एतच्च गोव्यतिरिक्तेऽश्वादौ न तिष्ठति । एवमनेकाऽश्वव्यक्तिष्वश्वत्वमिति सामान्यम् । एतदपि गवादिव्यक्तिषु न तिष्ठति । अत एव गवाश्वयोर्भेदव्यवहार । तथा च व्यक्तीना यो हि भेदव्यवहारो भवति, तस्य भेदव्यवहारस्य निमित्त कारण सामान्यमस्तीति निश्चीयते । यथोक्तम्—**जातिभेदोऽन्यताया हेतुर्गौरय वडवेयम्** (व्या० भा० यो० सू० ३।५३) इति । अत्राह वाचस्पतिमिश्र —**लौकिकाना जातिभेदोऽन्यताया ज्ञापकहेतु** (तत्त्व वै० यो० सू० ३।५३) इति।

सामान्यमेकत्वबुद्धि जनयतीति चरककारोऽपि ब्रूते । तथाहि तस्य वचनम्-**सामान्यमेकत्वकरं विशेषस्तु पृथक्त्वकृत्** (चरकस० सूत्रस्था० १।४४) इति । अत्रैकत्वकरत्वम्=अनेकेष्वेकाकारबुद्धिजनकत्वम् । अत एव गोषु गौरय गौरयमिति प्रतीतिसाक्षिको व्यवहार ।

काव्यप्रकाशकृताऽपि जातिरूपमर्थमभिलक्ष्य **पदार्थस्य प्राणप्रदो विशेषाऽऽधानहेतुः** (का० प्र० उल्ला० २ का० ८) इत्युक्तम् । अत्र प्राणप्रदत्व यावद् वस्तुस्थितिसम्बन्धित्वरूपम् । यथोक्तम्—**अयञ्च जातिरूपश्शब्दार्थः प्राणप्रद इत्युच्यते । प्राणं व्यवहारयोग्यतां प्रददाति संपादयतीति व्युत्पत्तेः** (का० प्र० बालबो० व्या० पृ० ३३) इति ।

**जातौ न जाति.—**

यथा गवादिव्यक्तिगत **गोत्वं** सामान्यम्, तथा गोत्ववृत्ति गोत्वत्वरूप सामान्यं गौतमकणादौ न स्वीकुर्वाते, अनवस्थाया सत्त्वात् । किञ्च जातौ न जाति समवायस्याऽसत्त्वात् । अत एवाऽसम्बन्धोऽपि जातिबाधकेषु सङ्गृहीतः । जातौ समवायाऽभावश्च समवायाऽनुयोगित्वाऽभावरूप । न तु समवायप्रतियोगित्वाऽभावरूप. । घट पट इत्यादि प्रतीतिविरोधात् । किञ्च घटत्वादिषु सर्वासु जातिषु घटत्वत्वरूपा जाति स्वीक्रियते चेत्, तस्या नित्यत्वे सति एकत्वे सति, अनेकसमवेतत्वरूपायाः पदार्थान्तरघटितत्वेन सा जातिर्न सम्भवतीति । किञ्च घटत्वस्यैकव्यक्तित्वाद् घटत्वत्व न सामान्यमिति । अत एव **निःसामान्यानि सामान्यानि भवन्तीति** नैयायिकवैशेषिकयो सिद्धान्त. ।

**जातावपि जातिः—**

**वैयाकरणा** खलु जातावपि जातिरस्तीति मन्वते । ते कथयन्ति **यद्यथा**

भिन्नासु घटव्यक्तिषु घटोऽयं घटोऽयमित्यनुगतप्रत्ययस्य सत्त्वाद् घटत्वमेकं सामान्यम्, तथा भिन्नासु घटत्वादिजातिषु सामान्यमिदं सामान्यमिदमित्यनुगतप्रतीतेः सत्त्वाद् **घटत्वत्वमिति** सामान्यमस्त्येव। अत एव शकटाक्षद्यूताक्षविभीतकाक्षगतासु भिन्नासु **अक्षत्व** जातिष्वभेदप्रत्ययनियामिकाऽक्षत्वत्वजातिरस्तीति शाब्दिकाः स्वीकुर्वते। यथोक्तं कैयटेन—**गोत्वाऽश्वत्वे सामान्ये इति व्यावृत्तेष्वनुवृत्तप्रत्ययहेतुसामान्यानामपि सामान्यमाश्रयितव्यम्। अथवा नि सामान्यानि सामान्यानीति तैर्थिकानां[1] दर्शनं न वैयाकरणैर्नियोगत** आस्थीयते। **कार्य्योन्नीयमाना हि तेषां पदार्था इति सामान्येष्वपि सामान्यमस्तीति** (प्र० पा० सू० १।२।६४) इति।

एतेन **सरूपाणामेकशेष एकविभक्तौ** (पा० सू० १।२।६४) इति सूत्रारम्भस्य प्रयोजनाऽभावः सूचितः, अक्षत्वत्वजातेः स्वीकारेणैव कार्यस्य निर्वाहात्।

एवञ्च व्यक्तिपदार्थं स्वीकृत्य—**सरूपाणामेकशेष एकविभक्तौ** (पा० सू० १।२।६४) इति सूत्रस्यारम्भः। तथा च व्यक्तेर्बहुत्वाद् द्विवचनबहुवचने **भवतः।**

जातिपदार्थं स्वीकृत्य **जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्** (पा०सू० १।२।५८) इति सूत्रस्यारम्भः। तथा च जातेरेकत्वादेकवचनम्, विवक्षावशाद् बहुवचनमपि भवति। यथा—पूज्यो ब्राह्मण इति, पूज्या ब्राह्मणा इति। यथोक्तम्—**आकृतिवाचित्वादेकवचनं भविष्यति। यदा द्रव्याभिधानं तदा द्विवचनबहुवचने भविष्यतः** (म० भा० पा० सू० १।२।६४) इति।

अत्र व्याडिमते द्रव्यमेव पदार्थः, जातिस्तु द्रव्यस्य गुणः। वाजप्यायनमते जातिरेव पदार्थः, द्रव्यं गुणभूतम्। नह्याकृतिपदार्थवादिनो वाजप्यायनस्य मते द्रव्यं न पदार्थः, न वा द्रव्यपदार्थवादिनो व्याडेर्मते जातिर्न पदार्थ इति, प्रत्युतोभावुभौ पदार्थौ स्वीकुरुतः। यथोक्तम्—**नह्याकृतिपदार्थिकस्य द्रव्यं न पदार्थो द्रव्यपदार्थिकस्य वाऽऽकृतिर्न पदार्थः। उभयोरुभयं पदार्थः। कस्यचित्तु किञ्चित्प्रधानभूतम्, किञ्चिद्गुणभूतम्। आकृतिपदार्थिकस्याकृतिः प्रधानभूता, द्रव्यं गुणभूतम्। द्रव्यपदार्थिकस्य द्रव्यं प्रधानभूतमाकृतिर्गुणभूता** (म० भा० १।२।६४) इति।

जातिर्नित्या। यतो हि द्रव्यस्य नाशेऽपि जातेर्नाशो न भवति। अत एवैतस्या एकत्वं विभुत्वञ्च सिद्धं भवतीति। नचैवंविधं द्रव्यमस्तीति। यतो हि द्रव्यस्य विनाशो भवति। अत एवैतस्या नित्यत्वमेकत्वम्, विभुत्वञ्च सिद्धं भवतीति। यथोक्तम्—**नित्या आकृतिरेका सर्वत्रगा, तद् विपरीतं द्रव्यमिति भेदाद् द्रव्यविनाशेऽपि न जातेर्विनाशः** (प्र० पा० सू० १।२।६४) इति। अपि

1. वैशेषिकादयः (उद्० पा० सू० १।२।६४)।

चोक्त नागेशेन—**नित्यमेकमनेकव्यक्तिवृत्तिसामान्यम्, तद्विपरीतं द्रव्यमिति भेदः** (उद्० पा० सू० १।२।६४) इति।

**सत्ता सामान्यम्—**

अत्र नैयायिकादिनये द्रव्यगुणकर्मसु परा जातिः सत्ता द्रव्यत्वादीनां व्यापिका। एषैव परब्रह्माऽपरनामधेयं महासामान्यमिति कथ्यते। एतस्य महासामान्यस्य गोत्वघटत्वादिरूपो विवर्त्तः। अत एव गौरयं गौरयमिति, घटो घटोऽयमिति नानाविध=प्रतीतिसाक्षिको व्यवहार=प्रवर्त्तते। यथोक्तं हरिणा—

> **सम्बन्धिभेदात्सत्तैव भिद्यमाना गवादिषु।**
> **जातिरित्युच्यते तस्यां सर्वे शब्दा व्यवस्थिताः॥** वा० प० ३।१।३३ इति।

अस्यार्थः—एकाऽपि सत्ता=महासामान्यरूपाऽऽश्रयादिभिः स्वसम्बन्धिभिरध्यारोपितभेदा गवाश्वादिषु गोत्वाऽश्वत्वादिरूपा अपरजातिर्विद्यते। तथा च गोसत्ताया विवर्त्तो गोत्वम्, सकलगवाऽनुगतं प्रतीयते। एवमश्वसत्ताया विवर्त्तोऽश्वत्वमिति। एतस्यामेव च गवादिभेदभिन्नायां सत्तारूपायां जातौ सर्वे गवादयो डित्थादयश्च शब्दा वाचकत्वेन व्यवस्थिता इति नियतोपाधिवशात् साङ्कर्य्येण जात्यभिधायिनः सिद्धाः।

सत्तायाः तत्तज्जातिरूपेण सर्वशब्दवाच्यत्वं समर्थितं वाक्यपदीये—

> **तां प्रातिपदिकार्थञ्च धात्वर्थञ्च प्रचक्षते।**
> **सा नित्या सा महानात्मा तामाहुस्त्वतलादयः॥** वा० प० ३।१।३४ इति।

**सामान्यस्य मीमांसायां ब्राह्मणादीनां विवेचना—**

बृहि वृद्धौ १/७३६ इति धातोर्बृंहतीति व्युत्पत्तौ **बृंहेर्नोऽच्च** (उ० सू० ४/५८५) इति नकारस्याऽकारश्चान्मनिन् प्रत्ययश्च भवति। एतेन **ब्रह्मन्निति** निष्पद्यते। अस्य बहुष्वर्थेषु प्रयोगो दृश्यते। यथा—**वेदस्तत्त्वं तपो ब्रह्म, ब्रह्मा विप्रः प्रजापतिः** (अ० को० ३/११४) इति[1]। अत्र ब्रह्मणो वेदस्येदं व्याख्यानमित्यर्थे **शेषे** (पा० सू० ४।३।९२) इति शैषिकेऽणि ब्राह्मणमिति भवति। अत **एवैतरेयब्राह्मणम्, शतपथब्राह्मणम्, षड्विंशब्राह्मणम्, गोपथब्राह्मणम्,** इत्यादिषु वेदस्य व्याख्यानभूतेषु ग्रन्थेषु प्रयोगः। प्रयुङ्क्ते चाऽस्मिन्नर्थे पाणिनिश्छन्दो **ब्राह्मणानि च तद्विषयाणि** (पा० सू० ४।२।६६) इति।

विज्ञानमूलको ब्राह्मणशब्दोऽस्ति, ब्रह्मशब्दस्य हि ज्ञानपर्य्यायत्वात्। अत्र

---

१. ब्रह्म वेदो ब्रह्म तपो ब्रह्मज्ञानञ्च शाश्वतम्। क्षीरस्वा० उद्० कोशान्तरस्य वचनम्।

ब्रूते गिरिधरशर्मचतुर्वेद —वस्तुतस्तु—**ब्राह्मणशब्दश्श्रमणशब्दश्चेति द्वावपि शब्दौ विज्ञानमूलकावतिप्राचीनौ। ब्रह्मशब्दो हि ज्ञानपर्य्याय इति, श्रमणशब्दश्च क्रियापर्य्याय.। तत्र ब्रह्मैवेदं सर्वमिति य आतिष्ठन्ते, ते ब्रह्मैकाद्वयवादिनो ब्राह्मणाः** (नवाह्निक म० भा० भू० पृ० २५) इति।

किञ्च **ब्रवणाद् ब्राह्मण** इति केचित्।

ब्रह्मणोऽपत्य जातिर्ब्राह्मण इत्यस्मिन्नर्थे **तस्याऽपत्यम्** (पा०सू० ४।१।९२) इत्यनेनाऽपत्येऽणि परतो **ब्राह्मोऽजातौ** (पा० सू० ६।४।१७१) इति सूत्र न प्रवर्त्तते, अजाताविति प्रतिषेधात्[1]। एतेन ब्राह्मणस्य जातित्व गम्यते। परन्तु नैतत् समीचीन प्रतिभाति। यतो हि नहि ब्राह्मणत्वमाकृत्याऽभिव्यज्यते, ब्राह्मणाऽब्राह्मणयोरवयवसस्थानस्य तुल्यत्वात्। न च **लिङ्गानाञ्च न सर्वभाक्** इति जातिसङ्ग्राहकलक्षणेन ब्राह्मणस्य जातित्व सेत्स्यतीति वाच्यम्? **आकृतिग्रहणा जाति**रितिजातिलक्षण एवाऽस्याऽन्तर्भावान्नाऽपूर्व जातेर्लक्षणम्। अत एव मनुष्यगोघटादीनामाकृतिव्यङ्ग्यत्वादसर्वलिङ्गत्वाच्च मनुष्यत्वगोत्वघटत्वादीनि सामान्यानि, न तु ब्राह्मणत्व सामान्यम्। न च **सकृदाख्यातनिर्ग्राह्या** इति जातिलक्षणेन ब्राह्मणस्य पुनरपि ब्राह्मणत्व सामान्य स्यादिति वाच्यम्? प्रमाणाभावात्। एकस्मिँश्चैत्रे ब्राह्मणत्व सुगृहीत स्याच्चेच्चैत्रस्य पुत्रपौत्रादिषु तद् ग्रहीतु शक्नुयात्। नह्यत्र प्रत्यक्षप्रमाणेन ब्राह्मणत्वमिति सामान्य

---

१. न वाऽत्रेष्यते। अनिष्टञ्च प्राप्नोतीष्टञ्च न सिध्यति। एव तर्ह्यनुवर्त्ततेऽपत्य इति, न त्वपत्य इत्यनेन निपातनमभिसम्बध्यते ब्राह्म इति निपात्यतेऽपत्येऽजाताविति। किं तर्हि? प्रतिषेधोऽभिसम्बध्यते ब्राह्म इति निपात्यतेऽपत्ये जातौ नेति। म० भा० पा० सू० ६।४।१७१

ख—अजाताविति पर्य्युदास। न चाऽनिष्टार्थे शास्त्रप्रक्लृप्तिरिति पर्य्युदाससामर्थ्याद् ब्राह्मण इत्यत्र टिलोपो न भविष्यतीत्यर्थ। प्र० पा० सू० ६।४।१७१

ग—जातिं वर्जयित्वा ब्राह्म इति टिलोप इति सूत्रार्थ। तत्र मनुष्यजातिविशेषे ब्राह्मणशब्दप्रयोगस्येष्टत्वात्तत्रैव पर्य्युदासः फलतीति तात्पर्यम्। इष्टिमात्रमेतत्। न तु लक्षणेनाऽयमर्थो लभ्यत इति। उद्० पा० सू० ६।४।१७१

घ—ततो 'जातौ' अपत्य इत्येव—अपत्ये जातावणि ब्रह्मणष्टिलोपो न भवति। ब्रह्मणोऽपत्य ब्राह्मण। काशि० वृ० पा० सू० ६।४।१७१

ङ—जातिविशिष्टेऽपत्ये विवक्षितेऽणि परतो ब्राह्मण इत्यत्र टिलोपो न भवतीत्यर्थ.। न्यासः पा० सू० ६।४।१७१

निश्चेतु कश्चित्प्रभवति, अस्याऽमूर्त्तत्वात् । मूर्त्तद्रव्याणामेवेन्द्रियार्थसन्निकर्षजन्य प्रत्यक्ष भवति । नाऽपि चैत्रोऽय ब्राह्मण स्वाध्यायादिषट्कर्मवत्त्वादित्यनुमानेन तत्साधयितु शक्यते, पर्वतो धूमवान् वह्नेरिवाऽसद्धेतुत्वात् । यथा वह्निर्निश्चित-साध्यवति सपक्षे महानसे, निश्चितसाध्याभाववति विपक्षे तप्ताय.पिण्डे च तिष्ठति । तथा च सपक्षविपक्षवृत्तित्वाद्वह्निरनैकान्तो[1] नामा पञ्चहेत्वाभासे-ष्वन्यतम. । अयञ्चाऽनैकान्त साधारण[2] । एषो ह्यव्यभिचारज्ञान प्रतिरुन्द्धे, तेन वह्निना (=हेतुना) साध्यस्य (=धूमस्य) पक्षवृत्तिताया सिद्धिर्न भवति । तथा स्वाध्यायादिषट्कर्मणोऽसद्धेतुत्वात् साध्यत्वस्य (=ब्राह्मणस्य) पक्ष-[3] वृत्तिताया निष्पत्तिर्न भवति । यतो हि स्वाध्यायादिषट्कर्म सपक्षे[4] विष्णुमित्रे (=कथञ्चित्स्वीकारे) विपक्षे[5] मैत्रेऽपि तिष्ठति । तेनैतेनाऽय हेतुरनैकान्तो नामा साधारण । एषोऽप्यव्यभिचारज्ञान प्रतिरोत्स्यते । तथा च नेष्टसिद्धि । किञ्च यथा चैत्रोऽयं मनुष्य करचरणादिमत्त्वात् यन्नैव तन्नैव यथा पशु, तथा चैत्रोऽय ब्राह्मण स्वाध्यायादिषट्कर्मवत्त्वाद् यन्नैव तन्नैव यथा मैत्र इति दृष्टान्तस्याऽसिद्धेरतिव्याप्तिदोषग्रस्तत्वाच्च नैवाऽन्वयव्यतिरेकी अनुमिति. सङ्गच्छते ।

**आगममूलकशब्दप्रमाणस्योपन्यासः—**

किञ्च सृष्टे प्रारम्भे वर्णद्वयमेव आसीत् । तत्रैको दस्युरपरश्चाऽऽर्य्य । अत्र दस्युरसित, आर्य्यश्च सितः । असित=कृष्ण, सितश्च गौर । तथा चाऽसितसितरङ्ग (=वर्ण·) भेदनिबन्धन एव समाजस्य व्यवस्थाया विभाग प्रागवर्त्तत । यथा—ऋक्संहितायाम्—**यो दासं वर्णमधरं गुहा कः** (ऋ० २।१२।४), **हत्वी दस्यून्प्रार्य्यवर्णमावत्** (ऋ० ३।३४।९) इत्यत्र दासेन दस्युना वाऽऽर्य्येण च वर्णशब्दस्याऽन्वयदर्शनाद् गम्यते । क्रमशोऽत्र सकोचभावनाया वृद्धिरुदात्त-भावनायाश्च ह्रासोऽभवत् । यथा—पुनर् आर्य्यस्य त्रिषु भागेषु विभाग कृत्वाऽस्य त्रयो भेदाः प्रत्यतिष्ठिपन् । अत एवाऽऽर्य्यस्य त्रैवर्ण्यमित्युरीकृतम् । यथा—**आर्य्यास्तु पूर्वे त्रैवर्ण्यमेवेति** केचिन्मेनिरे । किञ्च **दासो दस्युर्वे**त्यनयो· स्थाने

---

१. अनैकान्तो विरुद्धश्चाऽप्यसिद्धः प्रतिपक्षितः । कालात्ययापदिष्टश्च हेत्वाभासास्तु पञ्चधा ॥

२ आद्य साधारणस्तु स्यादसाधारणकोऽपर· । तथैवानुपसंहारी त्रिधानै-कान्तिको भवेत् ।। भा० परि० ७१-७२
यः सपक्षे विपक्षे च भवेत् साधारणस्तु स. । भा० परि० ७३ क

३. सदिग्धसाध्यधर्मा धर्मी पक्ष., यथा धूमानुमाने पर्वतः पक्ष. ४—निश्चित-साध्यधर्मा धर्मी सपक्ष·, यथा महानस धूमानुमाने । ५—निश्चित-साध्याभाववान् धर्मी विपक्ष, यथा महाह्रदः । तद्वदत्राऽप्यनुसन्धेयम् ।

शूद्र इति सज्ञा प्रावर्त्तत । अत्राऽऽचक्षते ह्याथर्वणिका —**प्रिय मा कृणु देवेषु प्रियं राजसु मा कृणु । प्रियं सर्वस्य पश्यत उत शूद्र उताऽऽर्य्ये** (अथर्व० १९।६२।१) इति ।

किञ्च आर्य्यस्य ये केचिदपि त्रैवर्ण्यमिति मन्वते, ते त्रैवर्ण्यस्यैता तिस्र· सञ्ज्ञाः चक्रुर्ब्राह्मण क्षत्रियो वैश्य., शूद्रश्चेति चतुर्थ· । एतेषा प्रामाण्यख्यापनाय विराट्पुरुषादुत्पत्तिरित्यामनन्ति, तथा चोदाहरन्ति—

**ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्य. कृतः ।**
**ऊरू तदस्य यद्वैश्यः पद्भ्या शूद्रो अजायत ॥** ऋ० १०।९०।११ इति[1] ।

अस्य व्याख्यानमित्थ करोति सायण —यस्य=विराट्पुरुषस्य, मुखम्=मुखाद्, ब्राह्मण =ब्राह्मणत्वजातिविशिष्ट पुरुष , आसीद्=उदपादि (=उत्पन्नः) इत्यर्थ. । अस्य=विराट्पुरुषस्य, बाहू=बाहुभ्याम्, राजन्य = क्षत्त्रियत्वजातिविशिष्ट पुरुष , कृतः=अजनिष्ट । अस्य=विराट्पुरुषस्य, यद्वैश्य =वैश्यत्वजातिविशिष्ट. पुरुषः, तद्वैश्यः ऊरू=ऊरुभ्यामुत्पन्न । अस्य=विराट्पुरुषस्य, तद्=तदानीम् पद्भ्याम्=पादाभ्याम्, शूद्र =शूद्रत्वजातिविशिष्ट पुरुष , अजायत=अजनि[2] । परन्तु सायणस्याऽयमर्थो नैव समीचीन प्रतिभाति । यतो हि निर्दिष्टे मन्त्रे त्रयाणा धातूना प्रयोगो दृश्यते । तेषा नैव समानोऽर्थोऽस्ति । तथा हि—अस् भुवि (=सत्ता), डुकृञ् करणे, जनी प्रादुर्भावे च । ब्रह्म वेद, तस्याऽभ्यसनान्मुखमपि ब्रह्म भवति । ब्रह्म एव ब्राह्मण । तथा चाऽस्य विराट्पुरुषस्य मुखमेव ब्राह्मण, एतत्सज्ञात्वेन व्यवहृत आसीत् । अस्य विराट्पुरुषस्य यौ बाहू (=हस्तौ) स्त, तयो राजन्य.=क्षत्त्रिय एतत्सज्ञात्वेन कृत प्रथित । प्रसिद्धि प्राप्त इत्यर्थ. । यतो हि **क्षणु हिंसायां** ८।१४६५ क्विपि क्षदिति भवति । तत त्रायत इति कप्रत्यये क्षत्त्रमिति, क्षत्त्रे रक्षणे साधु घप्रत्यये क्षत्त्रिय इति निष्पद्यते[3] । रक्षण शक्त्या भवति । शक्तिश्च बाह्वो. तिष्ठति । शक्तेः सामर्थ्यस्य वा द्योतकौ बाहू स्त. । कश्चित् बाहुभ्यामेव शत्रून् निहत्य कस्यचिद्रक्षा कर्त्तुं प्रभवति ।

---

१. अथर्व० १९।६।६, वा० य० ३१।११, तै० आ० ३।१२।५ ।

२. अस्य प्रजापतेर्ब्राह्मणो ब्राह्मणत्वजातिविशिष्ट. पुरुषो मुखमासीत् मुखादुत्पन्न इत्यर्थ । योऽस्य राजन्य क्षत्त्रियत्वजातिमान् पुरुष. स बाहू कृतो बाहुत्वेन निष्पादितः । बाहुभ्यामुत्पादित इत्यर्थ । तत्=तदानीम्, अस्य प्रजापतेर्यत्=यौ ऊरू तद्रूपो वैश्य. सम्पन्नः । ऊरुभ्यामुत्पन्न इत्यर्थ । तथास्य पद्भ्याम् पादाभ्या शूद्रः शूद्रत्वजातिमान् पुरुष· अजायत इति । ऋ० स० सायणभाष्यम् ।

३. पृषोदरादित्वाद्घः, न तु क्षत्त्राद्घ इति ।

तथा च विराट्पुरुषो बाहुभ्यामस्मान् शत्रुभ्य अरक्षीत् । अत एवाऽस्य बाहू क्षत्त्रियावेतन्नामानौ प्रसिद्धावभवताम् । अस्य विराट्पुरुषस्य यद्=यौ ऊरू, तद्=तयोर्वैश्य इति नाम्ना प्रसिद्धिरगमत्, धनधान्यादिना परिपालनात् । यो धनधान्यादिभिः समाजस्य परिपालन करोति स समाजस्य हृदयेष्वन्त विशति अत एव वैश्य[1] इति सञ्ज्ञामलभत । एवमस्य विराट्पुरुषस्य यौ पादौ, तयोश्शूद्र इति सञ्ज्ञा अजायत=प्रावर्त्तत, शोभनगतिकर्मत्वात् । यतो हि **शोभनं द्रवतीति विग्रहे शूद्र इति शब्दः पृषोदरादीनि यथोपदिष्टम्** (पा० सू०६।३।१०६) इत्यनुशासनात्सिध्यति । मन्त्रे **पद्भ्यामित्यत्र** षष्ठ्यर्थे पञ्चमी । किञ्च पद्यत इति विग्रहे **पद गतौ** (४।११६६) इति धातो कर्त्तरि घञि पाद इति भवति । अस्य **पद्दन्नोमास** (पा० सू० ६।१।६३) इत्यादिना पदादेश । गत्यर्थकपादेन सह शोभनगतिकर्मकस्य शूद्रस्याऽभेदोपचारात् पादयोश्शूद्र इति सञ्ज्ञा प्रावर्त्तत, नामनामिनोस्तादात्म्याद्वा ।

किञ्चैतेषा विराट्पुरुषस्य तत्तत्स्थानादुत्पत्तिर्मन्येत चेदस्य तत्तत्स्थानाना प्रसवयोनित्वमापद्येत । तच्च महद्धास्याऽऽस्पद स्यात् । तन्नोचितम् । अतः सायणप्रभृतयो ये केचन विद्वासोऽस्य प्रजापतेः तत्तत्स्थानादुत्पत्तिमेतेषा मन्यन्ते, तेषामुक्तिर्नैवाऽऽदरणीया सदसद्विवेकबुद्धिभि ।

किञ्चैकस्यैव पितुश्चत्वार:पुत्रा नैव समानगुणशालिनो भवन्ति । कश्चिद् विद्यार्जने रत, कश्चिच्छारीरिकी शक्तिमर्जयित्वा शौर्यकर्मणि सन्न्यस्तमना । कश्चिद् द्रव्योपार्जनाय कृष्यादिकर्मणि नानाविधव्यापारे च लीन. । यतो हि **सर्वारम्भास्तण्डुलप्रस्थमूलाः** सन्तीत्यनुभवः । कश्चित्कारुणिक. सहृदयः स्वक्लेश तिरस्कृत्य आर्त्तं जन दृष्ट्वा तस्य समाजस्य वा सेवाया दृढसकल्पमनाः । एते च स्वभावा प्राकृतिका । तेनैतेन नहि ते नानाविधा जातिमन्तो भवन्ति । एव स्याच्चेदेकस्मिन् पितर्य्यपि ब्राह्मणत्वादीनि सामान्यानि सङ्गच्छेरन् । परन्तु नैव प्रतीतिसाक्षिको व्यवहार:प्रवर्त्तते । तथा चैकस्य विराट्पुरुषस्य तत्तत्स्थानादुत्पन्नो जनो ब्राह्मणत्वादीनि सामान्यानि कथ लभेत । जन्य पूर्वोक्तानि लभेत चेज्जनकेऽपि ब्राह्मणत्वाद्यापत्ति. स्यात् ।

किञ्च स्त्रीधर्मयुक्तव्यक्तेरुत्पत्तिर्दृश्यते । तस्या. कश्चित् पतिर्भवति, य ऋतुस्नाताया तस्या व्यक्तौ स्ववीर्यं वपति, ततश्च मासनवकानन्तर सन्ततिर्जायते । न च विराट् पुरुष स्त्रीधर्मयुक्तो येन तस्मादुत्पत्तिः सिध्येत् । यदि च स विराट्पुरुष· कदाचित् स्त्रीधर्मयुक्तो भवति, कदाचित् पुधर्मयुक्तस्तर्हि यदा स्त्रीधर्मयुक्तो भवति, तदा स्त्रीधर्मयुक्ताया तस्या व्यक्ते. कः खलु पतिर्य ऋतुस्नाताया तस्या व्यक्तौ स्ववीर्यं वपतीति चित्रमेतत् ।

---

१. पृषोदरादित्वात्ष्यञ्, न तु गुणवचनब्राह्मणादित्वादिति ।

किञ्चोत्पत्तेर्द्वार योनि , न तु मुखम्, बाहु॰, ऊरु, पाद इति। अस्मिन्नृक्मन्त्रे तत्तच्छरीराऽवयव दृष्ट्वा तत्र तत्र विभक्ति विपरिणमय्य मुखाद्, बाहुभ्याम् ऊरुभ्याम्, पद्भ्याञ्चोत्पत्ति स्वीक्रियेत चेत् प्राकृतिकस्य स्वभावस्योच्छेद स्याद्। तस्मान्मदुक्तदिशैव अस्यार्थोऽङ्गीकरणीय इति दृढ मे मतम्।

मनुस्मृतौ ब्राह्मणादीना जातित्व दन्ध्वन्यते। एवमन्येष्वपि आम्नायिकेषु मन्त्रेषु कल्पसूत्रेषु च तत्र तत्र तथा दृश्यते। एतेषा कथनमपि मदुक्तदिशैव निराकरणीयम्। किञ्च मन्वादिस्मृतौ ब्राह्मणस्य जातित्वमङ्गीकृत्य तस्य स्तुतिसग्राहक स्तोत्रम्, अन्येषा निन्दासग्राहकञ्च स्तोत्रमेवाऽस्य विषय.। सन्ति बहवश्श्लोका तेषु द्वित्रा श्लोका उद्ध्रियन्ते। तथाहि—

**सर्व स्व ब्राह्मणस्येद यत्किञ्चिज्जगतीगतम्।**
**श्रैष्ठ्येनाऽभिजनेनेद सर्व वै ब्राह्मणोऽर्हति॥**
**स्वमेव ब्राह्मणो भुङ्क्ते स्व वस्ते स्व ददाति च।**
**आनृशस्याद्ब्राह्मणस्य भुञ्जते हीतरे जना॰॥**
**भूतानां प्राणिन श्रेष्ठा प्राणिना बुद्धिजीविनः।**
**बुद्धिमत्सु नरा श्रेष्ठाः नरेषु ब्राह्मणाः स्मृताः॥**
(मनु० १/९६-१००-१०१) इति।

अपि च—

**ब्राह्मणं दशवर्ष तु शतवर्षं तु भूमिपम्।**
**पितापुत्रौ विजानीयाद्ब्राह्मणस्तु तयो पिता॥**
**यथा काष्ठमयो हस्ती यथा चर्ममयो मृग।**
**यश्च विप्रोऽनधीयानस्त्रयस्ते नाम बिभ्रति॥**
(मनु० २।१३५-१५७) इति।

**जातिमात्रोपजीवी च कामं स्याद् ब्राह्मणब्रुव.।**
**धर्मस्य वक्ता नृपतेर्न तु शूद्रः कथञ्चन॥**
बो० ध० सूत्रे गो० स्वामिनोद्धृत श्लोकः।

सदसद्विवेकरहिता. पक्षपातग्रस्ताश्चेमे श्लोका न प्रामाण्येन ग्राह्या। तर्केण सदसद्विवेकबुद्ध्या च निश्चितो ह्यर्थो विद्वद्भिर्ग्राह्यो भवति। अत्र तर्केण सदसद्विवेकबुद्ध्या च यो निश्चिनोति स नास्तिकः, वेदनिन्दको वेति शब्देन कथ्यते। तथाहि—

**योऽवमन्येत ते मूले हेतुशास्त्राश्रयाद्द्विजः।**
**स साधुभिर्बहिष्कार्यो नास्तिको वेदनिन्दकः॥** मनु० २।११

अनयैव दिशा **स्थालीपुलाकन्यायेन** आलोच्या इमे मनुस्मृतिश्लोकाः। पक्षपातशून्या एव प्रामाणिकैर्विपश्चिद्भिरादरणीया भवन्तीति। **स्वमतस्थापने कस्य-**

सारेण व्यवसायविशेषानुरोधेन च तदानीन्तनो लोकविभागः प्रावर्त्तत। तत्र ब्रह्मणो वेदस्याऽध्ययनाऽध्यापनकर्मणि ये कुशला आसन् ते ब्रह्मविभागे स्थापिता । अत एव ते ब्राह्मण इति सज्ञया समाजे प्रत्यतिष्ठन् । एव शत्रुभ्य आगतानि भयानि निराकृत्य समाजस्य रक्षाया ये समर्था अभवन् ते क्षत्त्रविभागे स्थापिता । अत एव क्षत्त्रे (=रक्षणे) साधुः क्षत्त्रिय इति सज्ञा लब्धवन्तस्ते । कृष्यादिकर्मणि व्यवसायविशेषे च ये निपुणा. ते कृष्यादिभ्यो द्रव्यमाहृत्य सामाजिकान् जनान् पुष्णन्तिस्म । अतस्ते विड् (=वित्त) विभागे स्थापिता । तेनैतेन वैश्य इति सज्ञया ते प्रसिद्धि लेभिरे । ये सर्वविधसेवया समाजस्य सतुष्टिमकुर्वन् ते शोभन-सेवया शोभनगतिकर्मणा च शूद्र इति सज्ञामलभन्त। कालान्तरे इमाः मज्ञा जातौ रूढि गता । पुनश्च गुणकर्मशीलादीन् विहाय योनिप्राधान्य गृहीता । इमाश्च जातिव्यवस्था अतीवाऽर्वाचीना इति । यथा—इदानी जैनबौद्धशैववैष्णवशाक्त-शेखेस्लामप्रभृतयो व्यक्तिविशेषैरुद्भाविता एते मानवजाते शत्रव । यथोक्तम्—

**गुणकर्मभेदेन व्यवसायविशेषानुरोधेन वा तदानीन्तनो लोकविभाग इति प्रतिजानते, योनिप्राधान्यं तु कालान्तरोद्भावीति दृढं मन्वते काठकञ्चो-दाहरन्ति**—

**कि ब्राह्मणस्य पितरं किमु पृच्छसि मातरम् ।**
**श्रुतं चेदस्मिन्वेद्यं स पिता स पितामह ॥** (३०।१)

(उद्० प्रस्तावतरङ्गिण्या पृ० २३७) इति ।

गुणकर्मशीलाऽनुसारेण पुरा लोकस्य विभाग आसीत्, न तु योनिप्राधान्ये-नेति कृष्णद्वैपायन । यथोक्तम्—

**चातुर्वर्ण्य मया सृष्टं गुणकर्मविभागशः । गी० ४।१३**

अत्र चातुर्वर्ण्यम्=चत्वारो विभागा । अत्र विभागार्थे वर्णशब्दस्य प्रयोग, न तु जातिवाचकस्य, न वा रङ्गवाचकस्य इति ।

**ब्राह्मोऽजाताविति सूत्रस्य रचना तु** योनिप्राधान्य जातिमङ्गीकृत्यैवाऽस्ति । अस्य सूत्रस्य भाष्यादिव्याख्यानमपि तदनुरोधेनैवाऽस्तीति गम्यते। परन्तु **जनिकर्त्तुः प्रकृतिः** (पा० सू० १।४।३०) इति सूत्रस्य **ब्रह्मणः प्रजाः प्रजायन्त** इत्युदाहृतम् । अत्र **प्रजा स्यात् सन्ततौ जने** (अ० को० ३।३२) इत्यमरसिह । ब्रह्मशब्देन मायोपहित चैतन्य ब्रह्म, मायोपहितमीश्वरचैतन्य वा गृह्यते। एतस्मादेव ब्रह्मण सकाशात् प्रजा अजायन्त । अधिष्ठानस्यैक्यादधिष्ठानवता कथ विभिन्नजातित्व स्यात् सन्ततिपक्षाऽङ्गीकारे एषा विचारणा प्रवर्त्तते । जनपक्षाऽङ्गीकारे विशः प्रजा इत्यनर्थान्तरम्[1] । तथा च ब्रह्मणोऽधिष्ठानात् प्रजाः (=जना) अजायन्त। अस्मिन् पक्षेऽप्येकस्मादेव ब्रह्मणोऽधिष्ठानाज्-जायमाना. कथ नानाविधजातिमन्तो जायेरन्निति विपश्चिद्भिर्विभावनीयम् ।

॥ इति सामान्यम् ॥

---

१. प्र० त० पृ० २४२

# सप्तमः परिच्छेदः

## विशेषः

**वैशेषिकदृशा विशेष —**

यथा गोघटादीना भेदप्रत्ययस्य प्रयोजिका सामान्यसञ्ज्ञिका काचिज्जातिः स्वीक्रियते, तथा परमाणूना भेदप्रत्ययस्याऽपि प्रयोजक किञ्चित्कारण स्थिरीकरणीयम्, अय परमाणुरस्मात्परमाणुतो भिन्न इति व्यवहारस्य कारणाऽपेक्षितत्वात् । नह्यताद्दशो व्यवहारः कारणमन्तरा उत्पत्तु प्रभवति । तथा च यतोऽयं व्यवहारः प्रवर्त्तते, अतोऽस्य व्यवहारस्याऽवश्यमेवाऽस्ति कारणमित्यवधार्य्यते । एतच्च कारण किमिति चिन्ताया **विशेषपदार्थो** वैशेषिकैरभ्युपगम्यते । एष विशेषपदार्थः परमाणुषु तिष्ठन् परमाणूना व्यावृत्तिबुद्धि जनयति । यथोक्तं कणादेन—**अन्यत्राऽन्त्येभ्यो विशेषेभ्यः** (वै० सू० १।२।६) इति । व्याख्यातञ्चैतच्छङ्करमिश्रेण—**अन्त्या विशेषा नित्यद्रव्यवृत्तय** (उप० १।२।६) इति ।

इदमेवाह प्रशस्तपादः—**अन्ते भवा अन्त्याः, स्वाश्रयविशेषकत्वाद् विशेषाः । विनाशाऽऽरम्भरहितेषु नित्यद्रव्येष्वण्वाऽऽकाशकालदिगात्ममनस्सु प्रतिद्रव्यमेकैकशो वर्त्तमाना अत्यन्तव्यावृत्तिबुद्धिहेतव.** (प्र० पा० भा० पृ० ७५६-७६६) इति ।

अपि चाह विश्वनाथः—

**अन्त्यो नित्यद्रव्यवृत्तिर्विशेषः परिकीर्त्तितः ।**

(भा० परि १०) इति[1] ।

य एव विशेषो यस्मिन् परमाणौ वर्त्तते, स एवाऽपरस्मिन् परमाणौ न तिष्ठति । किन्तु स ततो भिन्न एव । अत एव पृथक् पृथगेव विशेषः प्रत्येक परमाणुषु व्यवतिष्ठमानः परमाणूना व्यावृत्तिबुद्धि जनयति । तथा चाऽय परमाणुरस्मात्परमाणुतो भिन्नो विशेषाद्, यन्नैव तन्नैव यथा घट इत्यनुमानेन परमाणूना भेदको विशेषो नामा पदार्थोऽस्तीति निर्धार्य्यते ।

---

१. परमाणूना परस्परभेदको विशेष एव । भा० परि० १० सि० मु०, अपि च परमाणूनान्तु परस्परभेदक न किञ्चिदस्त्यतोऽन्यायत्या विशेष आश्रयितव्य. । तर्कसग्रह सि० चन्द्रोदयः टी० ।

एष विशेषः परमाणूना परस्पर भेदबुद्धि जनयन्नपि न केनचिद्धर्मान्तरेण व्यावर्त्यते। यदि विशेषोऽपि केनचिदन्येन व्यावर्त्येत तर्हि तस्य स्वतो व्यावृत्त-रूपत्वस्य हानि स्यात्। यतो हि वैशेषिका **स्वतो व्यावृत्तरूपो विशेष** इति सङ्गिरन्ते। यथा प्रदीपो घटादीना वस्तूना व्यावृत्तबुद्धि जनयन्नपि न केन-चिदन्येन व्यावृत्तो भवति। किन्तु स्वत एव स, तथा विशेषोऽपि। अत एवोक्तम्—**स तु स्वत एव व्यावृत्त, तेन तत्र विशेषान्तरापेक्षा नाऽस्तीति** (भा० परि० १० सि० मु०) इति। अत्र स =विशेष।

ननु यथा विशेष स्वतो व्यावृत्तो भवति, तथा परमाणुरपि स्वतो व्यावृत्त स्यादिति चेन्न? तादात्म्यात्। अतदात्मकेष्वेव व्यावर्त्यव्यावर्त्तकभावो भवति। यथा प्रदीपेन घटादि वस्तु व्यावृत्त भवति, तथा प्रदीपः प्रदीपान्तरेण न व्यावृत्त। नहि प्रदीपस्य प्रकाशः प्रदीपान्तरमपेक्षते, प्रदीपप्रकाशयोः तादा-त्म्यात्। घटादिना प्रदीपस्य तादात्म्य नास्ति। अतो घटादिवस्तु प्रदीपस्याऽपेक्षा कुर्वत् प्रदीपेन व्यावर्त्यते। तथा च प्रदीप इव परमाणुरपि परमाण्वन्तरेण, स्वतो वा व्यावर्त्तयितु न शक्यते। किन्तु विशेषेणैव परमाणोर्व्यावृत्ति-र्भवतीति। यथा गवाश्वमासादीना स्वत एवाऽशुचित्वम्, एतेषा सम्बन्धादन्ये-षामपि, तथाऽन्त्यविशेषः स्वत एव व्यावृत्तो भवति, प्रदीपप्रकाशयोः तादात्म्य-मिवाऽस्यापि स्वतो व्यावृत्त्या सह तादात्म्यमस्ति, अत एव विशेषः केनचिदन्येन न व्यावृत्तो भवति, अन्यस्याऽनपेक्षितत्वात्। अस्य सम्बन्धात्परमाणुर्व्यावृत्त इति निर्धार्य्यते। यथोक्तम्—

**अन्यविशेषेष्विव परमाणुषु कस्मान्न स्वतो व्यावृत्तिप्रत्ययः कल्प्यत इति चेत्? न तादात्म्यात्। इहाऽतदात्मकेष्वन्यनिमित्तः प्रत्ययो भवति। यथा घटादिषु प्रदीपात्, न तु प्रदीपे प्रदीपान्तरात्। यथा गवाश्वमांसादीना स्वत एवाऽशुचित्वं तद्योगादन्येषाम्, तथेहापि तादात्म्यादन्त्यविशेषेषु स्वत एव व्या-वृत्तिप्रत्यय, तद्योगात् परमाण्वादिष्वपि** (प्र० पा० भा० पृ० ७७०-७७१) इति।

एवञ्च परमाणूना परस्परं व्यावृत्तये विशेषपदार्थ आस्थेय एवेति प्राचीना आतिष्ठन्ते।

नवीनास्तु विशेष न स्वीकुर्वन्ति। ते कथयन्ति यद् विशेषस्य स्वतो व्यावृ-त्तत्वं मन्यते चेत् परमाणो स्वतो व्यावृत्तत्व कथं न स्यात्। यद्युच्यते तादा-त्म्यात्परमाणो स्वतो व्यावृत्तत्वं न स्यादिति तयैव रीत्या विशेषस्यापि। नहि विशेषस्य स्वतो व्यावृत्तत्वसाधकम्, परमाणोः स्वतो व्यावृत्तत्वबाधकञ्च प्रमाणमुपलभ्यते। तथा च ययैव युक्त्या विशेषस्य स्वतो व्यावृत्तत्व कल्प्यते, तयैव युक्त्या परमाणोरपि स्वतो व्यावृत्तत्व कल्प्यताम्। परमाणो परस्पर-भेदोपपत्तयेऽतिरिक्तविशेषपदार्थस्य कल्पनमयुक्तमेव। यथोक्तम्—

**विशेषोऽपि च न पदार्थान्तरम्, मानाऽभावात् । विनाऽपि व्यावर्त्तक धर्मं परेषां विशेषाणामिव नित्यानां द्रव्याणामपि स्वत एव व्यावर्त्तकत्वात् । योगिनोऽतिरिक्तं विशेषमीक्षन्त इति चेत् त एव सशपथं पृच्छ्यन्ताम्—किमत्र-भवन्तोऽतिरिक्तं विशेषमीक्षन्ते नवेति** (पदा० तत्त्वनि० पृ० ३०-३१) इति ।

उक्तञ्च दिनकरीकारेणाऽपि **नवीनास्तु—विशेषेऽतिरिक्ते मानाऽभाव:, यथैव विशेषाणां स्ववृत्तिधर्मं विना व्यावृत्तत्वम्, तथैव नित्यद्रव्याणामपि** (भा० परि० १० दि० टी०) इति । अत्र नित्यद्रव्याणामपि (=परमाणूनामपि) इत्यर्थो ग्राह्य: ।

**व्याकरणदृशा विशेष —**

शब्दशास्त्रेऽपि विशेषस्योल्लेख: कृत: शाब्दिकै: । तथाप्येष विशेषो बुद्धिरूप:, न तु नित्यद्रव्यवृत्ति: स्वतो व्यावृत्तरूपो विशेषपदार्थ इति । यथाऽनेकगोव्यक्तिष्वनुगतबुद्ध्या सामान्यम्, तथाऽयं गौर्नाऽश्व इति व्यावृत्तबुद्ध्या विशेष इति ।

यथोक्तम्

**विशेष एव सामान्यं विशेषाद् भिद्यते यत: ।**
**अभेदो हि विशेषाणामाश्रितो विनिवर्त्तक: ।।**

(वा० प० ३।१४।१४१) इति ।

अपि चोक्तं हेलाराजेन—**इह व्यावृत्तिर्विशेषलक्षणम् । परस्परं व्यावर्त्तमाना हि विशेषा: कथ्यन्ते । तथा च सामान्यमप्यभेदेनाऽऽश्रितं विशेषाणां निवर्त्तकत्वाद् विशेषो भवति । सामान्यविवक्षायां हि नियता विशेषा व्यावर्तिता भवन्ति । तत्र यथा नियतो विशेष: समाश्रितो विशेषान्तरं निवर्त्तयति, तथा सामान्यमपि विशेषानिति सो[1]ऽपि विशेष** (हेला० ३।१४।१४१) इति ।[2]

इत्थञ्च शब्दशास्त्रे विशेषपदार्थस्य समादरो नैव वर्त्तते । अत्र विशेषपदेन व्यावृत्तिबुद्धिरेव गृह्यते, न तु परमाणूनां परस्परं भेदको विशेषरूप: पदार्थ:, यो नित्यद्रव्यवृत्तय इति वैशेषिकैरभ्युपगम्यते ।

अस्य विशेषपदार्थस्य **जातिलक्षणदेशैरन्यताऽनवच्छेदात्तुल्ययोस्तत: प्रतिपत्ति** (यो० सू० ३।५३) इति सूत्रस्य व्यासभाष्ये तत्त्ववैशारद्याञ्च बह्वीभिर्यु-

---

१ विधेयप्राधान्यात्पुस्त्वेन निर्देश: ।

२ द्र० हेला० ३।३।७३, ३।११।११ ।

क्तिभि खण्डन कृतमुपलभ्यते । एवमेवाऽस्य विशेषपदार्थस्य लक्षणखण्डनपूर्वक विशेषपदार्थोऽपि निराकृतश्चित्सुखाचार्य्येण[1] । अतो विशेषपदार्थ प्राच्य-वैशेषिकाणा गृह एव समादृत, अन्येषा नव्यवैशेषिकाणां गृहे, अन्येषा दार्शनिकानाञ्च गृहे तिरस्कृत एव विशेष इति निर्धार्य्यते ।

॥ इति विशेष ॥

१. द्र०—चित्सुखी पृ० १६६-२००

# अष्टमः परिच्छेदः

## समवायः

**वैशेषिकदृशा समवायः—**

कश्चित्कुत्रचित् कमपि सम्बन्धमाश्रित्यैव व्यवतिष्ठते। न हि सम्बन्धमन्तरा कश्चित् कुत्रचित्स्थातु शक्नोति, प्रत्युत सम्बन्ध द्वारीकृत्यैव। अत एव घटवद्-भूतलमित्यादौ सयोगरूप सम्बन्धो भासते, तथा तन्तुषु पट, **इह कपाले घट** इत्यादावपि कश्चित्सम्बन्धः प्रत्यवभासते। यतो हि नह्येवविधो व्यवहार सम्बन्ध विनोत्पत्तु प्रभवति। नचाऽत्र सयोगरूप सम्बन्ध, सम्बन्धिनामपृथक्-सिद्धत्वात्। पृथक्सिद्धानामेव सयोगरूपः सम्बन्धो भवति। यथा-दण्डी पुरुषोऽत्र सयोगसम्बन्धेन दण्डवान् पुरुष इति। इह तन्तुषु पटोऽत्र सम्बन्धिनोरपृथक् सिद्धत्वात् सयोगादतिरिक्त सम्बन्धः कल्प्य। स च क इति चिन्ताया **समवाय-रूपः सम्बन्ध** इति निर्धार्य्यते। यथोक्त कणादेन—**इहेदमिति यतः कार्यकार-णयोः स समवायः** (वै० सू० ७।२।२६) इति। सूत्रेऽस्मिन्—**कार्यकारणयोः** इत्युपलक्षणम्। तेनैतेनाऽकार्यकारणयोरपि सामान्यविशेषयोर्य सम्बध, स समवाय इति। अत एवेह गवि गोत्वम्, इहात्मनि सुखदु खे, इह परमाणौ विशेष इति व्यवहारः समवायसम्बन्धेन प्रवर्त्तते। एवमेव गुणगुणिनोः क्रियाक्रिया-वतो, जातिव्यक्त्योश्च।

आह च प्रशस्तपादाचार्य —

**अयुतसिद्धानामाधार्याऽऽधारभूतानां यः सम्बन्ध इह प्रत्ययहेतु स सम-वायः** (प्र० पा० भा० पृ० ७७३) इति। अत्राऽयुतसिद्धानाम्=अपृथक्-सिद्धानाम्।

अपि चाह विश्वनाथ —

> **घटादीनां कपालादौ द्रव्येषु गुणकर्मणोः।**
> **तेषु जातेश्च सम्बन्धः समवायः प्रकीर्त्तितः॥**

(भा० परि० ११) इति।

**समवायस्याऽतिरिक्तपदार्थत्वसिद्धिः—**

समवायस्याऽनुगतप्रतीतिरेवैतस्य द्रव्यादिभ्योऽतिरिक्तपदार्थसिद्धौ प्रमाणम् । यथा पृथिव्यादिष्वनुगतप्रतीत्या द्रव्यम्, रूपादिष्वनुगतप्रतीत्या गुण, उत्क्षेपणादिष्वनुगतप्रतीत्या कर्म, द्रव्यगुणकर्मस्वनुगतप्रतीत्या च सत्तासामान्यमित्येतेषामतिरिक्तपदार्थत्वस्य सिद्धिर्भवति, तथा समवायस्याऽपि । यथोक्त कणादेन—**द्रव्यत्वगुणत्वप्रतिषेधो भावेन व्याख्यातः** (वै० सू० ७।२।२७) इति । सूत्रेऽस्मिन्—भाव.=सत्ता । व्याख्यातञ्चैतच्छङ्करमिश्रेण—**भावः सत्ता, यथा सत्ता न द्रव्याद्यात्मिका विलक्षणबुद्धिवेद्यत्वात्, तथा समवायोऽपि तत एव, द्रव्यादिभ्यो भिन्नः** (उप० ७।२।२७) इति । एतेन यथा सत्ता द्रव्यादिषु सदिदमिति, सदिदमित्यनुगतप्रतीत्या द्रव्याद्यात्मिका न भवति, तथा समवायोऽपि द्रव्यादिपञ्चस्विहेति प्रत्ययस्य सत्त्वाद् द्रव्यादिपञ्चभ्योऽतिरिक्त एवेति गम्यते ।

**समवायस्यैकत्वसिद्धि —**

अथ समवाय एक एव वर्त्तते, न तु नाना । यथैकैव सत्ता द्रव्यगुणकर्मसु सदिदम्, सदिदमित्यनुवृत्तबुद्धया प्रतीयते, तथा समवायोऽपि द्रव्यादिपञ्चसु समवेतबुद्धेरनुवर्त्तनात् । यथोक्त कणादेन—**तत्त्व भावेन** (वै०सू० ७।२।२८) इति । सूत्रेऽस्मिन् तत्त्वम्=एकत्वम् । भावेन=सत्तया । व्याख्यातञ्चैतच्छङ्करमिश्रेण—**यथेयमेका सत्ता द्रव्यादिषु सदिति बुद्धेः प्रवर्त्तिका, तथैक एव समवाय. सर्वत्र इहाऽय समवेत इति बुद्धिप्रवर्त्तकः, स्वलिङ्गाऽविशेषाद्विशेषलिङ्गाऽभावाच्च** (उप० ७।२।२८) इति । अपि चोक्त प्रशस्तपादाचार्य्येण— **न च संयोगवन्नानात्वम्, भाववल्लिङ्गाऽविशेषाद् विशेषलिङ्गाऽभावाच्च । तस्माद्भाववत् सर्वत्रैकः समवाय इति** (प्र० पा० भा० पृ० ७७७) इति ।

**समवायस्य नानात्वसिद्धिः—**

नव्यास्तु समवायस्यैकत्व न स्वीकुर्वन्ति । ते कथयन्ति यत् समवायो यद्येक एव भवेत्तर्हि य एव स्पर्शस्य समवाय, स एव रूपस्य समवायोऽपि, रूपस्पर्शयोः समवायस्यैक्याद् वायौ स्पर्श इव रूपमपि प्रतीयेत । न च तथा प्रतीयते । अतो वायौ स्पर्शसमवायस्य सत्त्वेऽपि रूपसमवायो नाऽस्ति । यथा पृथिव्यामेव गन्धसमवायोऽस्ति, न स समवायो जले । अत एव पृथिव्यामेव गन्धप्रतीतिर्न जले । तेनैक समवायो नास्ति, किन्तु नानाविध एवेत्यवधार्य्यते । यथोक्तम्—

**पृथिव्या गन्धस्य समवायो, न जले, इत्यादिप्रतीतेः समवायस्य नानात्वमिति नव्या.** (भा० परि० ११ सि० मु० दि० टी०) इति ।

समवायस्य नानात्वमङ्गीकृत्यैव द्वित्वादिसमवाय एव पर्याप्तिसम्बन्धः,

न तु ततोऽतिरिक्त किञ्चन सम्बन्धान्तर कल्पनीयम् । यथोक्तं गदाधरभट्टाचार्य्येण—**समवायस्य नानात्वमते च द्वित्वादिसमवाय एव तत्पर्याप्तिः, न तु स्वरूपमतिरिक्तं पदार्थो वेत्यन्यदेतत्** (व्युत्पत्तिवाद पृ० १५०) इति ।

प्राच्यास्तु समवायस्यैकत्व स्वीकुर्वाणाः समवायस्य नानात्ववादिना दोषानित्थ निराकुर्वन्ति । ते कथयन्ति यत्स्पर्शसमवायरूपसमवाययोरैक्येऽपि वायौ रूपनिरूपितत्वविशिष्टसमवायस्याऽसत्त्वान्न तत्र रूपस्य प्रतीति । यत्रैतादृशसमवायो वर्त्तते तत्रैव रूपसमवायः प्रतीयते । यथा—घटादिद्रव्ये । वायौ स्पर्शनिरूपितत्वविशिष्ट एक एव समवाय, न तु रूपनिरूपितत्वविशिष्ट समवायान्तरम् । तथा च यतो वायौ रूपनिरूपितत्वविशिष्टसमवायो नास्ति, अत. समवायस्यैकत्वस्वीकारे न कश्चिद् दोषो वर्त्तते ।

ननु समवायस्यैकत्वे य एव द्रव्यत्वस्य पृथिव्यादिना योग, स एव गुणत्वस्य गुणै, कर्मत्वस्य च कर्मभि । अत्र यथा द्रव्यत्वस्य योगः पृथिव्यादिष्वस्तीति तेषा द्रव्यत्वम्, तथा तद्योगस्य गुणादिष्वपि सम्भवात् तेषामपि द्रव्यत्वम् । यथा च गुणत्वस्य योगो रूपादिष्वस्तीति रूपादीना तथा तद्योगस्य द्रव्यकर्मणोरपि भावादेनयोरपि गुणत्व स्यादिति चेन्न? आधाराधेययोर्व्यवस्थिते सत्त्वात् । तथा च यद्यप्येक एव समवाय सर्वत्र स्वतन्त्ररूपेण तिष्ठति, तथाप्याधाराऽऽधेययोरस्ति व्यवस्थितो नियम । तेनैतेन द्रव्येष्वेव द्रव्यत्वम्, गुणेष्वेव गुणत्वम्, कर्मस्वेव कर्मत्वमित्यन्वयव्यतिरेकयोर्व्यवहारादध्यवसीयते । इहेति समवायप्रयोजकस्य सम्प्रत्ययस्य सर्वत्राऽन्वयव्यवहारस्य व्यवहृतत्वादेक एव समवायो न तु नाना । द्रव्यत्व समवायेन द्रव्य एव, गुणत्व समवायेन गुण एव, कर्मत्व समवायेन कर्मण्येव, न तु द्रव्यत्व समवायेन गुणे कर्मणि वा, गुणत्व समवायेन द्रव्ये कर्मणि वा, कर्मत्व समवायेन द्रव्ये गुणे वेति प्रतिनियमः । यथा कुण्डदध्नो सयोगैकत्वे भवत्याश्रयाऽऽश्रयिभावनियम, तथा द्रव्यत्वादीनामपि समवायस्यैकत्वेऽपि व्यङ्ग्यव्यञ्जकशक्तिभेदादाधाराधेयनियमो वर्त्तते[1] ।

**समवायस्य नित्यत्वसिद्धिः—**

समवायो नित्य एव, न तु सयोगवदनित्य. । यतो हि—नहि समवायस्य किञ्चित्कारणमुपलभ्यते । यथा सत्तायाः कारणाऽभावादेतस्या नित्यत्वम्, तथा समवायस्याऽपि । नह्यस्य कारण प्रत्यक्षतोऽनुभूयते । अतोऽकारणवती सत्तेव समवायोऽपि कारणशून्यत्वान्नित्य एवेति निर्धार्य्यते । यथोक्त प्रशस्तपादाचार्य्येण **सम्बन्ध्यनित्यत्वेऽपि न सयोगवदनित्यत्व भाववदकारणत्वात् । यथा प्रमाणतः कारणानुपलब्धेर्नित्यो भाव इत्युक्तम्, तथा समवायोऽपि** (प्र० पा० भा० पृ० ७८२) इति । अत्र सम्बन्धि=प्रतियोग्यनुयोगिरूपम् ।

[1] द्र० प्र० पा० भा० पृ० ७७८—७८१ ।

**समवायस्याऽनुमानगम्यत्वम्—**

यथा द्रव्यगुणकर्मस्वनुवृत्तसत्ताया नाऽन्यः सत्तायोगो दृश्यते, प्रत्युतैतस्याः सत्तायाः सत्तैव नियामिका भवति, तथा तन्तुपटयोः, कपालघटयोर्यः समवायः, एतस्य समवाय एव नियामकः। किञ्चन सम्बन्धान्तरं नाऽस्ति। किन्तु समवाय एव तादात्म्येन व्यवतिष्ठते। अत एव सत्तावदतीन्द्रियः इह बुद्ध्यनुमेयः समवायः, नत्वेनस्य प्रत्यक्षं भवति। यथोक्तम्—**यथा द्रव्यगुणकर्मणां तदात्मकस्य भावस्य नाऽन्यः सत्तायोगोऽस्ति। एवमविभागिनो वृत्त्यात्मकस्य समवायस्य नाऽन्या वृत्तिरस्ति, तस्मात् स्वात्मवृत्तिः। अत एवाऽतीन्द्रियः, सत्तादीनामिव प्रत्यक्षेषु वृत्त्यभावात्, स्वात्मगतसंवेदनाऽभावाच्च। तस्मादिह बुद्ध्यनुमेयः समवायः** (प्र० पा० भा० पृ० ७८४-७८५) इति।

**समवायस्य प्रत्यक्षगम्यत्वम्—**

नैयायिकाः स्वसंयुक्तविशेषणतासन्निकर्षेण समवायस्य प्रत्यक्षत्वं भवतीति मन्यन्ते। तथा चाऽनुगमः—घट इति प्रत्यक्षे चक्षुःसंयुक्तो घटः। अत्र विशेषणतया वर्त्तमानः समवाय इति चक्षुःसंयुक्तविशेषणतासन्निकर्षेण समवायस्य प्रत्यक्षत्वम्। यथोक्तम्—**अभावप्रत्यक्षे, समवायप्रत्यक्षे चेन्द्रिय-सम्बद्धविशेषणता हेतुः। वैशेषिकस्य मते तु समवायो न प्रत्यक्षः** (भा० परि० ६० न्या० सि० मु०) इति।

अपि चोक्तं न्यायवार्त्तिककारेण—**समवाये चाऽभावे च विशेषणविशेष्य-भावादिति** (गौ० सू० १।१।४ न्या० वा०) इति।

**स्वरूपसम्बन्धत्वस्य खण्डनम्—**

घटवद्भूतलमित्यत्र प्रतियोग्यनुयोगिनोर्यः संयोगः स समवायेनोभयत्र तिष्ठन् विशिष्टबुद्धिं जनयति। यथेह तन्तुषु पट इत्यादौ यः समवायः, एषोऽपि केनचित्सम्बन्धान्तरेण तिष्ठन् विशिष्टबुद्धिं जनयतीति। यतो हि नहि सम्बन्धमन्तरा विशिष्टबुद्धिरुत्पत्तुं प्रभवति। विशिष्टबुद्धिश्च विशेष्यविशेषण-सम्बन्धावगाहिनी भवति। तथा चैतस्या बुद्धेः स्वरूपसम्बन्धः कल्प्यते चेत्तर्हि स्वरूपस्याऽपि सम्बन्धान्तरं कल्प्यं स्यात्। तथा सति अनवस्थारूपो दोषः प्रसज्येत।

किञ्च समवायः स्वरूपसम्बन्धेन स्वप्रतियोगिनि, अनुयोगिनि च तिष्ठन् विशिष्टप्रत्ययं जनयेदित्युच्यते चेद् द्रव्यादिपञ्चानामपि स्वरूपमेव सम्बन्धः कथं न स्वीक्रियते, कथमिह तन्तुषु पट इत्यादौ समवाय एव सम्बन्धः स्वीक्रियते। स्वरूपसम्बन्धः स्वीक्रियते चेत् कस्याऽयं स्वरूपसम्बन्ध इति निर्णेतुमशक्यं

स्यात् । यतो हि घटादीना तद्वृत्तिगुणक्रियादीनाञ्चाऽनन्तत्वात्स्वरूपस्या-ऽप्यनन्तत्व स्यात् ।

एवञ्च समवायाऽपेक्षया स्वरूपस्य सम्बन्धत्वकल्पने महद्गौरव स्यात् । अत स्वरूपाऽपेक्षयाऽनन्तघटादीना तद्वृत्तिगुणादीनाञ्चैकस्यैव समवाय-सम्बन्धस्य कल्पने महल्लाघवम्, प्रतियोग्यनुयोगिनोरेकस्यैव स्वाऽभिन्नस्वरूपस्य समवायस्य स्वीकारात् । तथा चाऽस्मन्मते नानवस्थादोष, न च कल्पनागौरव-दोष । अतो लाघवाद् गौरवदोषशून्यत्वाच्चैक एव समवायपदार्थोऽङ्गीकरणीय । अत एव प्राभाकरमीमासकोऽपि अस्माकमेव मत पुष्णाति । तथा हि प्राभाकरस्य वचनम्—**त्रिविध एव सन्निकर्ष प्रत्यक्षहेतुः—सयोगः, सयुक्तसमवाय, समवायश्च** (प्र० पञ्जिका पृ० १३४) इति[1]

अत्र नित्यद्रव्यस्य तद्वृत्तिगुणादीनाञ्च समवायो नित्य । यथा नित्य-माकाशम्, तद्वृत्तिमहत्त्वादिगुणादीनाञ्च नित्य. समवाय । अनित्यद्रव्यस्य घटपटादेस्तद्वृत्तिगुणक्रियादीनाञ्चाऽनित्य एव समवाय इति प्राभाकराः सङ्गिरन्ते । यथोक्तम्—**प्राभाकरमीमांसकैस्तु समवायोऽभ्युपगम्यते वैशेषिक-वत् । पर वैशेषिकमते स एको नित्यश्च । प्राभाकरमते नित्ययो समवायो नित्यः । अनित्ययोस्सोऽनित्य इति महदन्तरम्** (प्र० पञ्जिका टि० पृ० ६२) इति । एतेन नित्यगतो नित्य समवाय, अनित्यगतोऽनित्य समवाय, नित्याऽनित्यगतो नित्य एव समवायः, स चैक इति मतभेदादवगम्यत इति निष्कर्ष ।

**वैयाकरणदृशा समवायः—**

अथ समवायपदार्थो विचार्य्यते । इमे समवायपदघटिते सूत्रे स्त, समवाय-पदसम्बद्ध वाक्यञ्च ।

| | |
|---|---|
| १—**समवायान् समवैति** | पा० सू० ४।४।४३ |
| २—**समवाये च** | पा० सू० ६।१।१३३ |
| **समवायेषु—** | म० भा० पा० सू० १।१।५० |

शब्दशास्त्रे वैशेषिकसम्मतसमवायस्य समुल्लेख समुपलभ्यते । **सप्तम्य-धिकरणे च** (पा० सू० २।३।३६) इति सूत्रस्थे **निमित्तात्कर्मयोगे** इति वार्त्तिके योगशब्देन सयोगरूपः, समवायरूपश्च सम्बन्ध. स्वीकृत., अवयवाऽवयविनो-र्भेदादवयवा अवयविनि समवायसम्बन्धेन व्यवतिष्ठन्ते । अवयवाऽवयविनोः

१ मा० मेयो० प्र० परि० पृ० ८ ।
२. द्र० सि० कौ० पा० सू० २।३।३६ ।

समवायरूप सम्बन्धो वर्त्तत इति पूर्वाचार्यस्य व्याख्यानाद् विज्ञायते। अवयवाऽवयविनो समवायरूप सम्बन्धो भवतीति स्वीकारादेवेय कारिका दीक्षितेनोदाहृता—

**चर्मणि द्वीपिनं हन्ति, दन्तयोर्हन्ति कुञ्जरम् ।**
**केशेषु चमरीं हन्ति, सीम्नि पुष्कलको हतः ॥**इति[1]॥

जातिव्यक्त्यो, गुणगुणिनो समवायरूप सम्बन्ध इति हरिणोक्तम् । स आह यत शब्द समवायेन गगने तिष्ठति, अत शब्दस्य यत्समवायिकारणमाकाशम्, तस्याकाशस्य बोध जनयति शब्द । एवमेव जातिर्व्यक्ति बोधयति, जातिव्यक्त्यो समवायात् । तथा हि हरेरिय कारिका—

**समवायात् स्व आधार. स्वा च जातिः प्रतीयते ।**
**एकार्थसमवायात्तु गुणाः स्वाधार एव ये ॥**

इति वा० प० ३।३।१३॥

व्याख्याना चेय हेलाराजेन—**खाकाशगगनादय शब्दा. स्वार्थमाकाशाख्यं तत्र समवायात् प्रतिपादयन्ति, स्वसमवेतां जातिं स्वरूपलक्षणां सर्वे शब्दाः समवायसम्बन्धात् प्रत्याययन्ति, एतस्या. शब्दव्यक्तिषु समवायात्** (हेला० वा० प० ३।३।३९) इति । अपि च **सम्बन्धिरूपतया तु स्वतन्त्रः समवायः शब्दादवगम्यते** (हेला० वा० प० ३।३।१९) इति । अपि च—**अपृथक्सिद्धानामिह बुद्धिहेतुः समवायः, यथा—इह कपालेषु घटः** (हेला० वा० पा० ३।२।१७) इति ।

एतेन वैशेषिकसम्मतः समवाय एव शाब्दिकैरभ्युपगतः । अतोऽस्य समवायस्य शब्दशास्त्रे विरोधो नास्ति, प्रत्युत शाब्दिकैरपि समवायस्य समादारकृत एवेति गम्यते । परन्तु नैष समवाय सिद्धान्तरूपेण शाब्दिकै स्वीक्रियते । यतो हि शब्दशास्त्रे योग्यतारूप तादात्म्यरूपश्चैव सम्बन्धो वर्त्तते । एष एव सम्बन्ध शाब्दिकै सिद्धान्तित । अत एवोक्त रामाज्ञापाण्डेयेन—**संयोगसमवायावित्युक्तिः कथं सङ्गच्छत इति चेन्न ? तत्र वैशेषिकमतेनैवैतयोरुपादानात् । स्वमतेन तु योग्यतायाः शक्तेरेव सम्बन्धत्वेन स्वीकारात्** (व्या० द० भू० पृ० १८३) इति । योग्यताया सम्बन्धत्व हरिणोक्तम्—

**इन्द्रियाणां स्वविषयेष्वनादिर्योग्यता यथा ।**
**अनादिरर्थै शब्दानां सम्बन्धो योग्यता तथा ॥**
**सम्बन्धशब्दे सम्बन्धो योग्यतां प्रति योग्यता ।**
**समयाद्योग्यतासंविन्मातापुत्रादियोगवत् ॥**

(वा० प० ३।३।३०-३२) इति ।

---

१—सि० कौ० पा० सू० २।३।३६

**सम्बन्धस्य द्वैविध्यम्—**

एतेन शब्दशास्त्रे द्विविध सम्बन्धोऽस्तीति गम्यते। यथोक्त हेलाराजेन—**द्विविधः सम्बन्धपदार्थो व्यवतिष्ठते, योग्यता कार्यकारणभावश्च। अध्यासस्तु द्वयोरपि परमार्थ एव, न पृथग्रूप** (हेला० वा० प० ३।३।१) इति।

**योग्यतारूप. सम्बन्ध —**

अत्र योग्यतारूप सम्बन्धश्चक्षुरादीन्द्रियाणा रूपादेर्ग्रहणेऽस्ति। अत एवाऽस्या योग्यताया अभावे चक्षुरादिभी रूपादीनि न गृह्येरन्। एवमेव शब्दस्याऽर्थेन सह योग्यतारूप सम्बन्ध। तथा च **गौरि**त्यय शब्द सास्नादिमन्तमर्थ बोधयति। यतो हि गोशब्दस्य सास्नादिमदर्थबोधने योग्यतारूप सम्बन्धो वर्त्तते। अयञ्च योग्यतारूप सम्बन्धो यथा—अस्येय माता, अस्या मातुरय पुत्र इत्यत्र प्रत्यवभासते, तथा चक्षुरादीना रूपादेर्ग्रहणेऽपि सोऽस्तीति निश्चीयते।

**कार्यकारणभावरूपः सम्बन्धः—**

कार्यस्य कारणेन सह सम्बन्धः कार्यकारणरूप इति कथ्यते। यथेह कपालेषु घट, इह तन्तुषु पट इत्यादौ कार्यकारणभावरूप सम्बन्धो वर्त्तते। एतयोरेवाऽध्यासात्तादात्म्यमेव सम्बन्ध। एष तादात्म्यरूप सम्बन्धो योग्यता-कार्यकारणभावरूपाभ्या न पृथग्रूपेण गम्यते। यतो ह्येतयोरेवाऽध्यस्तत्वात्ता-दात्म्य भवति[1]। तथा च तादात्म्यमेव सम्बन्ध शाब्दिकै स्वीक्रियते, न तु समवाय। यत्र समवाय, तत्रापि तादात्म्यमेवेति शाब्दिकानामाशय.। यथोक्त हरिणा—

**आत्मान्तरस्य येनाऽऽत्मा तदात्मेवाऽवधार्यते।**

(वा० प० ३।३।६) इति।

व्याख्याता चेय हेलाराजेन—**कार्यकारणयोरवयवाऽवयविनोर्धर्मधर्मिणो-र्जातितद्वतोर्गुणगुणिनोरपदार्थान्तरत्वेऽपि तादात्म्येनाऽवसायः** (हेला० वा० प० ३।३।६) इति।

तादात्म्यरूपस्य सम्बन्धस्य स्वीकारादेव गुणसमुदायो द्रव्यमिति स्त्रिया (पा० सू० ४।१।३) इति सूत्रस्थ भाष्य सङ्गच्छते। यतो हि नह्यवयवादति-रिक्तोऽवयवी पदार्थो व्यवतिष्ठते, तादात्म्यात्। अवयवाद् व्यतिरिक्तोऽवयवी चेत्स्याद् **गुणसमुदायो द्रव्यमि**त्यस्य सामञ्जस्य न स्यात्। तथा चाऽस्य भाष्यस्योपपत्तये तादात्म्यमेव सम्बन्धोऽस्तीति निर्धार्यते। एतदेवाऽवयवाऽवयवि-भावरूप सम्बन्ध इत्यपि कथ्यते। यथोक्तम्—**गुणसमुदायो द्रव्यमित्यादि-**

---

१ अध्यासस्तु द्वयोरपि परमार्थ एव, न पृथग्रूप.। हेला० वा० प० ३।३।१ इति।

**भाष्यसमालोचनया अयुतसिद्धरूपादिपरमाणुरूपाऽवयवाऽनुगतः समूहो द्रव्यमिति स्वीकारादवयवाऽवयविभाव एव सम्बन्धो न तु समवाय स्वीकार्यः** (व्या० द० भूमिका पृ० १८२) इति।

नागेशभट्टोऽपि तादात्म्यमेव सम्बन्धोऽस्तीति स्वीकुरुते। एतच्च तादात्म्य द्विविधम्। भेदाऽभेदभेदात्। अत्र भेद—नीलत्वेन, घटत्वेन चौपाधिको ग्राह्य। अभेदः नीलो घट इत्यत्र नीलघटयोरभेद एव। यतो हि नहि नीलो घट इत्यादौ नीलाद् भिन्नो घट, घटाद् भिन्नो वा नील इत्युपलभ्यते। किन्त्व-पृथग्रूपेणैवैतयोर्ग्रहण भवतीति। अत एव नीलो[1] घट =नीलाऽभिन्नो घट इति बोध। द्रव्य घट =द्रव्याऽभिन्नो घट इति शाब्दबोध। यथोक्तम्—**पदपदार्थयोः सम्बन्धान्तरमेव शक्तिः, वाच्यवाचकभावाऽपरपर्याया। तद् ग्राहकञ्चेतरेतराऽध्यासमूलं तादात्म्यम्। तादात्म्यञ्च तद्भिन्नत्वे सति तदभेदेन प्रतीयमानत्वम्** (वै० सि० लघुम० पृ० ३४) इति।

शब्दस्याऽर्थेन सह तादात्म्यरूप सम्बन्धो वर्त्तते अत एव प्रणवस्य वाच्येनेश्वरेण सह तादात्म्यरूप सम्बन्धोऽस्ति। तेनैतेन प्रणवो वाचक, वाच्यश्चेश्वर-रूपोऽर्थ। अत एव प्रणवजपकर्त्रा ईश्वर साक्षात्क्रियते। यथोक्तम्—**वाच्य ईश्वर प्रणवस्य**[2]**। किमस्य सङ्केतकृतं वाच्यवाचकत्वमथ प्रदीपप्रकाशवदवस्थितमिति। स्थितोऽस्य वाच्यस्य वाचकेन सह सम्बन्धः सङ्केतस्त्वीश्वरस्य स्थितमेवार्थमभिनयति। यथाऽवस्थितः पितापुत्रयो सम्बन्धः सङ्केतेन प्रकटीक्रियते। अयमस्य पिता, अयमस्य पुत्र इति** (व्या० भा० १।२७) इति। अत्र शब्दस्याऽर्थेन सहाऽभेदस्य स्वीकारादेव—

> **रामेति द्व्यक्षर नाम मानभङ्ग पिनाकिनः।**
> **शौर्य्यभङ्गो रावणस्य मदभङ्गश्च वालिनः॥**
> इति सङ्गच्छते।

**स्वमतपुष्टये दार्शनिकान्तराणां मतस्योपन्यास —**

कौमारिलमीमासकोऽपि तादात्म्यमेव सम्बन्ध इति स्वीकुरुते। तथा च नीलो घट इत्यादौ तादात्म्यमेव सम्बन्धो भासते, न तु समवाय। अत एव कौमारिलैस्त्रिविध एव सन्निकर्षो भवतीति मन्यते। एष सन्निकर्ष सयोग, सयुक्ततादात्म्यम्, सयुक्ततदात्मतादात्म्यञ्च। यथोक्तम्—**सन्निकर्षस्तु द्विविधः सयोग. सयुक्ततादात्म्यञ्च। यद्वा—यथा परे रूपत्वादिग्रहणाय सयुक्तसमवेतसमवायमाश्रयन्ते, तथाऽस्माकमपि सयुक्तदात्मतादात्म्य नाम तृतीय सन्निकर्षोऽपि** (मा० मेयो० प्र० परि० पृ०६) इति।

---

१. गुणवचनेभ्यो मतुपो लुगिष्ट।  २. ओकारस्य।

कौमारिलमतमेवाऽनुमन्यन्ते वेदान्तिनोऽपि—**गुणादिकं गुण्यादिना भिन्नाऽभिन्नं समानाऽधिकृतत्वात्** (अद्वैतसिद्धिः पृ० ५९) इति । अत्र भिन्नाऽभिन्नम्=तादात्म्यम् । एतच्च भेदसहिष्णुरभेदरूपः । अत एव अग्न्यादिशब्दस्योच्चारणे न मुखस्य दाहापत्तिः ।

समवायो न सम्बन्धो वर्त्तते, अस्य सम्बन्धत्वे प्रमाणाऽभावात् । यथोक्तम् **न समवायोऽस्ति प्रमाणाऽभावात्** (सा० सू० ५।९९) इति ।

एवञ्च नीलो घट इत्यादौ स्वरूप एव सम्बन्धः, न तु समवायो न वा तादात्म्यम् । तादात्म्यं स्वरूपमेवोच्यते चेत् तत्रोम् इति ब्रूमः । **यदि च तादात्म्यं स्वरूपमेवोच्यते, तदास्माभिरपि तदेवोक्तमिति शब्दमात्रभेदः** (सा० प्र० भा० ५।१००) इति ।

तादात्म्यमेव सम्बन्ध इति पातञ्जला ब्रुवते । स च तादात्म्यरूपः सम्बन्धोऽध्यासरूपश्च । अध्यासश्च शब्दस्याऽर्थेन सह भवति । यथा गोशब्दस्य सास्नामताऽर्थेनाऽध्यस्तत्वाद् गौरित्ययं शब्दः सास्नादिमन्तमर्थं प्रत्याययति । यथोक्तम्—**पदपदार्थयोरितरेतराऽध्यासरूपः स्मृत्यात्मको योऽयं शब्दः सोऽयमर्थः, योऽयमर्थः सोऽयं शब्द इत्येवमितरेतराऽध्यासरूपः सङ्केतो भवतीति । एवमेते शब्दार्थप्रत्यया इतरेतराध्यासात्सङ्कीर्णोऽयं गौरिति शब्दो, गौरित्ययमर्थो गौरिति ज्ञानम्** (व्या० भा० यो० सू० ३।१७) इति ।

परमाणोः कारणतावादं दूषयता श्रीमच्छङ्कराचार्येणाऽपि समवायो नाऽस्तीत्युक्तम् । तथा ह्येतस्य वचनम्—**यथैव ह्यणुभ्यामत्यन्तभिन्नं सद् द्व्यणुकं समवायलक्षणेन सम्बन्धेनैताभ्यां सम्बध्यते । एवं समवायोऽपि समवायिभिः सम्बध्येत, अत्यन्तभेदसाम्यात् । ततश्च तस्य तस्य अन्योऽन्यः सम्बन्धः कल्पयितव्य इत्यनवस्थैव दोषः प्रसज्येत** (शा० भा० ब्र० सू० २।२।१३) इति । एतेन समवायस्य सम्बन्धत्वकल्पनेऽनवस्थारूपो दोषः प्रसज्यते । अत समवायरूपः सम्बन्धो नाऽस्तीत्येव निश्चीयते । अत एवाऽद्वैतसिद्धेर्गौडब्रह्मानन्द्या **समवायस्याऽलीकत्वम्** (अद्वै० सि० पृ० ६०) इत्युक्तम् ।

एवञ्च वैशेषिकनैयायिकप्राभाकरमीमांसकानां नये समवाय एव सम्बन्धः, न तु तादात्म्यम्, स्वरूपमिति वा । वैयाकरणकौमारिलयोगवेदान्तिनां नये तु तादात्म्यमेव सम्बन्धः, न तु समवायः । साङ्ख्याः स्वरूपमेव सम्बन्ध इति ब्रुवत इति निष्कर्षः ।

**वस्तुनः प्रत्यक्षप्रमितौ तादात्म्यसम्बन्धस्योपयोगः—**

**घटरूपस्य प्रत्यक्षम्—**

घटरूपस्य प्रत्यक्षं प्रति स्वसंयुक्ततादात्म्यमेव सम्बन्धः । अत्र स्वम्=चक्षुः । चक्षुःसंयुक्तश्च घटः, तत्र रूपस्य तादात्म्यम् ।

**घटरूपत्वस्य प्रत्यक्षम्—**

घटरूपत्वस्य प्रत्यक्ष प्रति स्वसयुक्ततदात्मतादात्म्यमेव सम्बन्ध । अत्र स्वम्=चक्षु । चक्षुसयुक्तो घट, तत्र रूपस्य तादात्म्यम्, एतस्मिन्नपि (=रूपेऽपि) रूपत्वस्य तादात्म्यमेव सम्बन्धः ।

एवमेव शब्दस्य श्रावणप्रत्यक्ष प्रति तादात्म्यमेव सम्बन्ध । शब्दत्वस्य श्रावणप्रत्यक्ष प्रति तदात्मतादात्म्यमेव सम्बन्ध इत्यवधार्य्यते ।

**समवायस्य बह्वर्थत्वम्—**

शब्दशास्त्रे समवायस्य बहुष्वर्थेषु प्रयोगो दृश्यते । तद्यथा—**समवायात्समवैति** (पा० सू० ४।४।४३) इति सूत्रेण (समवाय+ठक्)=सामवायिक. शब्दो निष्पद्यते । अत्र सामवायिक—सभाया सम्मेलितुमभिलाषुक । अत एव **समाजेषु, समाशेषु, समवायेषु**[1] **चाऽऽस्यतामित्युक्ते नैव कृशाः कृशैः सहासते** (म० भा० पा० सू० १।१।५०) इति भाष्येण समूहरूपोऽर्थ पतञ्जलिना ध्वनित । अपि चोक्त पाणिनिनाऽपि **समवाये च** (पा० सू० ६।१।१३३) इति । अत्र समवाय=सङ्घातः । एतस्मिन्नर्थे सम्पूर्वकस्य कृधातो सुड् भवति । तेनैतेन सस्कुर्वन्ति=सङ्घीभवन्ति[2] ।

॥ इति समवाय ॥

---

१. जनसमूहेषु ।

२ द्र० सि० कौ० पा० सू० ६।१।१३३ ।

## नवमः परिच्छेदः

### अभावः

**वैशेषिकदृशि अभाव —**

अत्राऽभावपदार्थो विचार्य्यते। अत्रादौ वैशेषिकस्य मत प्रदर्श्यते। तथा हि—चैत्रोऽस्ति, गौर्नील, मैत्रस्येय गतिक्रिया, इह गवि गोत्वम्, इह परमाणुषु विशेषा, इह तन्तुषु पटस्य समवाय इत्यादिप्रतीतीना यथा द्रव्यादय षड्भाव-पदार्था- स्वीक्रियन्ते, भावपदार्थमन्तरा एतेषा व्यवहाराणामनुपपत्ते, तथा चैत्रो नास्ति, गौर्न नील, नेयं मैत्रस्य गतिक्रियेत्यादिव्यवहाराणा सत्त्वादेतेषा प्रयोजक षड्भ्योऽतिरिक्तः पदार्थोऽवधार्य्यते, नह्यतिरिक्तपदार्थमन्तरा एतादृशो व्यवहारो भवितुमर्हति। अस्य व्यवहारस्य नियामकः क इति चिन्तायामस्त्य-भावपदार्थ, स च प्रयोजको घटो नास्तीति प्रतीते सत्त्वात्। अत एवाऽभावस्य स्थितौ सत्या घटोऽस्ति, रूपवाँश्चैत्र, गामानयेत्यादि व्यपदेशो न भवति। तेनैतेनाऽस्ति भावाद् भिन्नोऽभाव पदार्थ इति। एषोऽभावो भावाद् भिन्न पदार्थान्तरम् एवेति गम्यते। यथोक्त कणादेन—**असत क्रियागुणव्यपदेशाऽभावा-दर्थान्तरम्** (वै० सू० ९।१।३) इति। व्याख्यातञ्चैतच्छङ्करमिश्रेण—**असतः सदर्थान्तरम्, कुत इत्यत आह क्रियागुणव्यपदेशाऽभावादिति। नहि घटस्य प्रध्वसे अस्ति घटः, इदानीं रूपवान् घट, घटमानयेत्यादिव्यपदेशस्तदितो वैधर्म्यादसतः सदर्थान्तरमिति** (उप० ९।१।३) इति।

### अभावस्य भेदाः

**अन्योऽन्याऽभावः—**

अभावो द्विविध., अन्योऽन्याभावससर्गाभावभेदात्। आद्य एकविध एव, अन्त्यस्तु त्रिविध, प्रागभावप्रध्वसाभावाऽत्यन्ताऽभावभेदात्। एते क्रमेणोदा-ह्रियन्ते। तथा हि—घटो न पट इत्यत्र घटस्य भेदः पटे, पटो न घट इत्यत्र पटस्य भेदो घटे प्रतीयते। अत्र घटस्य भेद पटे, पटस्य च भेदो घटे नञा समान-विभक्तिकत्वेन प्रद्योत्यते। घटपटयो परस्परभेदव्यवहार. तदात्मना भवति। यतो हि घटो न पट इत्यत्र घटस्य तदात्मना पटे भेदो वर्त्तते, पटो न घट इत्यत्र

पटस्य च तदात्मना घटे भेदोऽपि । एवमेव गवात्मना नाश्व , अश्वात्मना न गौः चैत्रात्मना न मैत्र , मैत्रात्मना न चैत्र इत्यादिभेदव्यवहारो भवति । अत एव तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिको योऽभाव सोऽन्योन्याभाव इति कथ्यते । यथोक्त कणादेन—**सच्चाऽसत्** (वै० सू० ६।१।४) इति । व्याख्यातञ्चैतच्छङ्कर-मिश्रेण—**यत्र सदेव घटादि असदिति व्यवह्रियते, तत्र तादात्म्याऽभावः प्रतीयते । भवति हि असन्नश्वो गवात्मना, असन् गौरश्वात्मना, अघटः पटः, अनश्वो गौ , अगौरश्व इत्यादिप्रतीतिः । अस्या प्रतीतावश्वोऽन्योन्याभाववान् गौ, पटोऽन्योन्याभाववान् घट इत्यन्योन्याभाव एव तादात्म्याभावाऽपरनामा भासते । अत्र तादात्म्यं प्रतियोगिताऽवच्छेदकम्, प्रतियोगिसमानाधिकर-णश्चाऽयमभावः, भवति हि घटो न भूतलमिति प्रतीति** (उप० ६।१।४) इति ।

**प्रागभावः—**

यदा घटपटादिकार्याणि स्वोपादानकारणेषु तन्तुषु कपालेषु च वर्त्तन्ते, तदा घटपटादीना बहिरसत्त्वादेतेषा प्रागभाव । यतो ह्युत्पन्ने घटपटादौ घटोऽस्ति, पटोऽस्ति, घटो रूपवान्, पटो रूपवानित्यादि व्यवहारो यथा भवति, तथाऽ-नुत्पन्ने घटपटादौ न भवति । अत एव घटपटादेरुत्पत्ते प्रागेतेषामभावात् प्रागभावो वर्त्तत एव । यथोक्त कणादेन—**क्रियागुणव्यपदेशाऽभावात् प्रागसत्** (वै० सू० ६।१।१) इति । व्याख्यातञ्चैतच्छङ्करमिश्रेण—**प्रागिति कार्यो-त्पत्तेः प्राक् कार्यं घटपटादि, असत्तत्कालीनस्वजनकाऽभावप्रतियोगीत्यर्थः । अत्र हेतु. क्रियागुणव्यपदेशाभावात्, यदि तदानीमपि कार्यं घटादि, सदेव स्यात्तदा क्रियावत्त्वेन गुणवत्त्वेन च व्यपदिश्येत । यथोत्पन्ने घटे घटस्तिष्ठति, घटश्च-लति, रूपवानयं दृश्यते घट इत्यादिप्रकारेण च व्यपदिश्यते, न तथोत्पत्तेः प्रागपि व्यपदेशोऽस्ति । तेन गम्यते तदानीमसन्निति** (उप० ६।१।१) इति ।

यदा कार्य स्वकारण एव व्यवतिष्ठते, तदैतत्कार्यमनादितया सलक्ष्यते । यदा चैतत्कार्य कारणाद् बहिर्भूत भवति, तदैतस्य सान्तता परिलक्ष्यते । अत एवाऽनादि सान्तः प्रागभाव इति कथ्यते । यथा—घटः स्वकारणे कपाले व्यवतिष्ठते चेत्तर्हि घटस्य प्रागभाव. काल, एष घटः कपालाद् बहिर्भवति चेत्तर्हि घटस्य प्रागभावो विनश्यति । तेनैतेनाऽय घट इति प्रतीयते ।

**प्रध्वंसाभावः—**

उत्पन्नो घटः प्रतीयते चेत्तर्हि घटोऽस्तीति व्यवहार , स च नील , पीतः शुक्लादिः । मुद्गरादिपाताद्यदा घटो ध्वस्तो भवति, तदा स घटो ध्वसाभा-

वत्वेन गृह्यते । अत एव सादिरन्तशून्यो योऽभाव॰, स प्रध्वस इति कथ्यते । यथोक्त कणादेन—**सदसत्** (वै० सू० ९।१।२) इति। अस्यार्थ —विनाशकस्य मुद्गरादेर्व्यापारात्पूर्वं सन्नेव घटादि, मुद्गरादेर्व्यापारानन्तर असन् भवतीति सूत्रार्थः । यथोक्त शङ्करमिश्रेण—**यथा कारणव्यापारात्पूर्व प्रत्यक्षाऽनुमानाभ्यां कार्यस्याऽसत्त्व प्रतीयते, यथा विनाशकस्य मुद्गरादेर्व्यापारानन्तर सदेव कार्यं घटादीनामसद् भवतीति प्रत्यक्षानुमानाभ्यामेवाऽनुमातु शक्यते । एषोऽभावो ध्वस इति गीयते । भवति हि घटो नष्टो ध्वस्त, इदानी श्रुतपूर्वो गकारो नास्तीत्यादिधी** (उप० ९।१।२) इति ।

**अत्यन्ताभाव.—**

आद्यन्तशून्यो यो ह्यभावो वर्त्तते, सोऽत्यन्ताभाव इति कथ्यते । यथा वायौ प्रतीतिसाक्षिक रूप नास्ति, इह जगति बन्ध्यापुत्रो नास्ति, गगने पुष्प नाऽस्ति । अत एव खपुष्प नाऽस्तीति व्यवहार । एनेषा व्यवहाराणा प्रवर्त्तक कारण वाय्वादौ रूपादीनामत्यन्ताभाव एवेति निर्धार्य्यते । अत एव—

**एष बन्ध्यासुतो याति, खपुष्पकृतशेखरः ।**
**कूर्मक्षीरचयैः स्नातः शशशृङ्गधनुर्धरः ॥**

इत्यत्यन्ताऽभावस्योदाहरणप्रदर्शक पद्य स्मर्य्यते ।

किञ्चेह भूतले घटो नाऽस्तीत्यत्राऽपि सोऽभाव प्रतीयते । तथा चोक्ताभावत्रयाद् भिन्नो योऽभावः, सोऽत्यन्ताभाव इति कथ्यते । यथोक्त कणादेन—**यच्चाऽन्यदसदतः तदसत्** (वै० सू० ९।१।५) इति । व्याख्यातञ्चैतच्छङ्करमिश्रेण—**अतः पूर्वोक्तादभावत्रयात्, यदन्यदसत् तदसत्, तदत्यन्ताऽसत्त्वम् । असदित्युभयत्र भावप्रधानो निर्देशः, तत्रैकमसदुद्देश्यमपरमसद् विधेयम् । तथा चोक्ताभावत्रयाद्भिन्नो योऽभावः सोऽत्यन्ताभाव इति पर्यवसन्नोऽर्थः** (उप० ९। १।५) इति ।

**अत्यन्ताभावेन सह प्राक्प्रध्वंसाऽभावयोर्विरोधोपन्यासः—**

यस्मिन् रक्तघटे श्यामरूप नाऽस्ति, श्यामघटे च रक्तरूपञ्चेति तस्मिन् घटे तत्प्रतीति रक्तश्यामरूपयोर्ध्वंसप्रागभावावेवाऽवगाहेते, न तु तत्राऽत्यन्ताऽभावस्य प्रतीतिर्जायते । तथा च श्यामघटे रक्तरूपस्य प्रागभाव, रक्तघटे च श्यामरूपस्य ध्वसश्च प्रतीयते । ध्वसप्रागभावौ विरोधिनौ स्तोऽत्यन्ताभावस्येति प्राञ्चो व्याचक्षते । यथोक्तम्—**प्रतियोगितत्प्रागभावतद्ध्वंसास्त्रय एवाऽत्यन्ताऽभावस्य विरोधिनः, रक्तघटे श्यामं रूपं नास्ति, श्यामघटे रक्तं रूपं नाऽस्तीति प्रतीती च ध्वंसप्रागभावाववगाहेते, नत्वत्यन्ताभावमिति प्राञ्चः** (वै० सू० विवृ० ९।१।५)

इति ।

अपि चोक्त विश्वनाथेन—**अत्र ध्वंसप्रागभावाऽधिकरणे नाऽत्यन्ताऽभाव इति प्राचां मतम्, श्यामघटे रक्तो नाऽस्ति, रक्तघटे श्यामो नाऽस्तीति धीश्च प्रागभावं ध्वंसञ्चाऽवगाहते, न तु तदत्यन्ताऽभावमेतयोर्विरोधात्** (भा० परि० १२ न्या० सि० मु०) इति ।

ध्वंसप्रागभावौ नाऽत्यन्ताऽभावस्य विरोधिनौ स्त । अतो ध्वंसप्रागभावयोः कालेऽप्यत्यन्ताभावाऽवगाहिनी बुद्धिर्भवत्येवेति । यथोक्तम्—**नव्यास्तु—ध्वंसप्रागभावयोर्नाऽत्यन्ताभावेन विरोधित्वमतो ध्वंसादिकालाऽवच्छेदेनाऽप्यत्यन्ताभावो वर्त्तत एव** (वै० सू० ६।१।५ विवृ०) इति । अपि चाह विश्वनाथः—**तत्र विरोधे मानाऽभावाद् ध्वंसादिकालाऽवच्छेदेनाऽप्यत्यन्ताभावो वर्त्तत एव** (भा० परि० १२ न्या० सि० मु०) इति ।

**उत्पादविनाशशाली चतुर्थोऽभावः—**

अत्र केचिद् व्याचक्षते यद् यस्मिन्नधिकरणे प्राक्स्थित एव घटः, एष एव घटोऽन्यस्मिन् देशे नीयते चेत्तर्हि पूर्वदेशेन सहाऽस्य सम्बन्धाऽभावात्तत्र घटो नाऽस्तीति प्रतीतिर्भवति । अन्यत्र नीतो घटः पूर्वदेशे पुनरानीयते चेत्तर्हि पूर्वदेशेन सहाऽऽनीतस्य घटस्य सम्बन्धे सजाते घटोऽस्तीति व्यवहार । तथा चोत्पादविनाशशाली सामयिकनामा चतुर्थ ससर्गाभाव एव, नत्वत्राऽत्यन्ताऽभावः। तथा ह्येतस्य वचनम्—**केचित्तु यत्र भूतले पूर्वं घटादिकं स्थितमथाऽपसारितं पुनरानीतञ्च तत्रोत्पादविनाशशाली सामयिको नामा चतुर्थः संसर्गाभाव एव प्रतीयते, नाऽत्यन्ताऽभाव** (वै० सू० ६।१।५ विवृ०) इति । अपि चोक्त विश्वनाथेन—**यत्र तु भूतलादौ घटादिकमपसारितं पुनरानीतञ्च तत्र घटकालस्य सम्बन्धाऽघटकत्वादत्यन्ताभावस्य नित्यत्वेऽपि घटकाले न घटाऽत्यन्ताभावबुद्धिः । तत्रोत्पादविनाशशाली चतुर्थोऽयमभाव इति केचित्** (भा० परि० १२ न्या० सि० मु०) इति ।

**उत्पादविनाशशाली न चतुर्थोऽभावः—**

नव्यास्तु—यो हि घटो यस्मिन् देशे वर्त्तते, स एव घट. ततोऽन्यत्र नीयते चेत्तर्हि तस्य घटस्य तेन देशेन सम्बन्धितो यो हि कालः, स कालो घटस्य पुनरानयनेऽपि न तिष्ठति । यतो हि घटस्याऽन्यत्र नयने सति घटाऽभावसम्बन्धविशिष्ट कालो भवति, नीतस्य घटस्य पुनरानयन क्रियते चेत्तर्हि घटसम्बन्धविशिष्ट एव कालो जायते । तथा च घटाऽभावसम्बन्धविशिष्टकालस्य, घटसम्बन्धविशिष्टकालस्य च परस्परविरोधाद् घटस्य सत्त्वेऽपि घटाऽभावविशिष्टकाल-

मादाय घटस्याऽत्यन्ताऽभावो भासते। अत उत्पादविनाशशाली चतुर्थ संसर्गाऽभावो नाऽङ्गीकरणीय। यथोक्तम्—**यत्र भूतले पूर्वमपसारित घटादिक पुनरानीतं तत्र घटकालस्याऽभावसम्बन्धाऽघटकत्वाद्घटसत्त्वकाले न घटाऽत्यन्ताऽभावबुद्धि** (वै० सू० ९।१।५ विवृ०) इति। अपि चोक्त विश्वनाथेन—**यत्र भूतलादौ घटादिकमपसारितं पुनरानीतञ्च तत्र घटकालस्य सम्बन्धाऽघटकत्वादत्यन्ताऽभावस्य नित्यत्वेऽपि घटकाले न घटाऽत्यन्ताऽभावबुद्धिः** (भा० परि० १२ न्या० सि० मु०) इति।

एवञ्च त्रिविध एव संसर्गाऽभाव, न तु चतुर्थोऽभाव संसर्गो नामा वर्त्तते। अन्योऽन्याभावस्त्वेकविध एव। तथा चैतयो सङ्कलनेन चतुर्विधोऽभावो भवति। यथाह विश्वनाथ—

**अभावस्तु द्विधा संसर्गाऽन्योऽन्याभावभेदत।**
**प्रागभावस्तथा ध्वंसोऽप्यत्यन्ताऽभाव एव च॥** भा० परि० १२ इति।

**अत्यन्ताभावस्य नित्यत्वसिद्धि**—

अत्यन्ताभावो नित्य उत्पत्तिविनाशरहितत्वात्। अत एव वायौ रूपादेरत्यन्ताभावो नित्यत्वेन भासते। एवमेवेह भूतले घटो नास्तीति वाक्यादपि घटस्याऽत्यन्ताऽभावोऽवगम्यते।

अत्र कश्चिद् ब्रूते—अत्यन्ताभावो नित्यश्चेत्तर्हि स स्वस्मिन्नाश्रये सर्वदा प्रतीयेत। तथा च यस्मिन् देशे घटो वर्त्तते, तस्मिन्नेव देशे घटाऽभावोऽपि सलक्ष्येत अत्यन्ताभावस्य नित्यत्वात्। परन्तु यत्र घटो वर्त्तते, तत्र घटोऽस्तीत्येव प्रतीति, न तु घटो नास्तीति प्रतीतिरुदेति। अतोऽत्यन्ताऽभावो न नित्य इति चेदुच्यते—अत्यन्ताऽभावो द्विविधो नित्याऽनित्यभेदात्। अत्र वायौ रूपस्याऽत्यन्ताऽभावो नित्य, इह भूतले घटादेरभावोऽनित्य, घटस्य सत्त्वाऽभाववति भूतले घटाऽभाव उत्पद्यते, घटस्य सत्त्ववति भूतले घटाऽभावो नष्टो भवतीति। अतो घटवति भूतले घटो नास्तीति व्यवहारो न भवति।

वस्तुतस्तु—अत्यन्ताऽभावो नित्य एव। यद्येव न स्यात्तर्हि भूतले घटस्य आनयने घटात्यन्ताऽभावस्य नाशो भवतीति मन्यते तर्हि तदानीमन्यत्राऽपि घटाऽत्यन्ताऽभावस्य सत्ता हीयेत। येन यथेह भूतले घटस्याऽसत्त्वे घटाऽत्यन्ताभाव, तथाऽन्यत्राऽपि स प्रतीयेत, यत्र घटस्य स्थितिर्नाऽस्ति। तथा च घटाऽभावस्य या प्रतीति, सा प्रमा न भवितु शक्नोति। अत सर्वोऽप्यत्यन्ताऽभावो नित्य एवाऽस्तीति निश्चीयते।

घटाऽभाववति भूतले घटो नाऽस्तीति व्यवहारस्य कारणम्, भूतलघटयो· सयोगरूपस्य सम्बन्धस्याऽसत्त्वमेव । सम्बन्धस्य सत्त्वादेव सम्बन्धिनोः सत्ता सिद्धा भवति । इह भूतले घटस्य सयोगो वर्त्तते । अत सयोगसम्बन्धेन घटवति भूतले घटोऽस्तीति प्रतीयते । तन्तुषु पटस्य समवायो वर्त्तते । अत· समवाय-सम्बन्धेन तन्तुषु पटस्य सत्ताऽस्तीति गम्यते ।

भूतले घटाभावस्य सत्ताया प्रयोजक केवलभूतलरूप स्वरूपसम्बन्धो नाऽस्ति, प्रत्युत घटस्याऽसमानकालिक यद् भूतलम्, एतत्स्वरूपञ्च, तदेव । यदा भूतले घटस्य सत्ता तिष्ठति, तदा घटस्य समानकालिक भूतल भवति, नत्वस-मानकालिकम् । अत तदानी भूतले घटाऽभावस्य सत्ताया उपयुक्तस्वरूप-सम्बन्धो न वर्त्तते । तेनैतेन तदानीमन्यत्र घटाऽभावस्य सत्ता सत्यपि भूतले घटाऽभावस्य सत्ता नाऽस्तीति । अत एव घटवति भूतले घटो नाऽस्तीति व्यवहारस्य प्रमात्व न वर्त्तते, प्रत्युत घटोऽस्तीत्यस्यैव । अत सर्वो ह्यत्य-न्ताऽभावो नित्य एव, नत्वनित्य । तेनैतेन सर्वोऽप्यन्ताऽभाव उत्पत्तिविनाशाभ्या रहित , पूर्णरूपेण नित्यश्चेति निर्धार्यते ।

**षट्पदार्थवादिनः सप्तपदार्थवादिनश्च वैशेषिका इति प्रवादस्य सामञ्जस्यम्—**

अय हि लौकिकाना प्रवाद श्रूयते यद् वैशेषिका· षट्पदार्थानेव स्वीकुर्वन्ति, नत्वभावनामानमपि । पदार्थविभाजके सूत्रे द्रव्य-गुण-कर्म-सामान्य-विशेष-समवा-यानामेवोल्लेख कृत कणादेन, न तु द्रव्यादिपदार्थेष्वभाव इत्यस्योल्लेख । तथा ह्येतेषा पदार्थाना सङ्ग्राहक **पारमर्षं** सूत्रम्—**धर्मविशेषप्रसूताद् द्रव्यगुण-कर्मसामान्यविशेषसमवायानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानान्निःश्रेयसम्** (वै० सू० १।१।४) इति । नह्येतेषु पदार्थेष्वन्यतमोऽभावपदार्थो दृश्यते येनैतेनाऽस्ति **अभाव इति**नामा पदार्थोऽपि वैशेषिकै स्वीकृत इति कल्पनीय स्यात् । तथा च यत पदार्थविभाजके सूत्रे द्रव्यादय षडेव पदार्था सङ्गृहीता वैशेषिकै, अतो वैशेषिकै षडेव पदार्था स्वीक्रियन्ते, नतु सप्तमोऽभावोऽपि । अत एव **षट्पदा-र्थवादिनो वैशेषिका** इति लौकिकाना प्रवाद सङ्गच्छते ।

परन्तु नैतत्कथन समीचीनं प्रतिभाति, अभावोऽपि वैशेषिकै· स्वीकृत एव । अभावपदार्थो वैशेषिकैर्न स्वीकृत स्याच्चेत्तर्हि **क्रियागुणव्यपदेशाऽभावात् प्रागसत्** (वै० सू० ९।१।१) इति सूत्रेण **प्रागभाव इत्यस्य, सदसत्** (वै० सू० ९।१।२), इति सूत्रेण ध्वसाभावस्य, **असत क्रियागुणव्यपदेशाऽभावादर्थान्तरम्** (वै० सू० ९।१।३) इति सूत्रेणाऽभावादर्थान्तर भावः, भावादर्थान्तरमभाव, इत्यस्य, **सच्चाऽसत्**(वै० सू० ९।१।४)इति सूत्रेणाऽन्योऽन्याऽभावस्य, **यच्चाऽन्यद-सदतस्तदसत्** (वै० सू० ९।१५) इति सूत्रेणाऽत्यन्ताभावस्य चेत्येतैः सूत्रैर्निर्देशो न स्यात् । यतश्चोक्तसूत्रैरभावो निर्दिष्ट , अतोऽभावोऽस्तीति गम्यते । अत एवो-

परिप्रदर्शितदिशाऽभाव, एतस्य चत्वारो भेदाश्च सिद्धा भवन्तीति। तेनैतेन वैशिषिकैरभावो गृहीत एव, न तूपेक्षित, वैशेषिकसूत्रेषु भावाद्भिन्नोऽभाव, एतस्य चत्वारो भेदाश्चैतेषा निर्देश कृत उपलभ्यते । तेनैतेन सप्तपदार्थवादिनो वैशेषिका इत्येव समीचीनम् ।

किञ्च पदार्थो द्विविधो भावाऽभावभेदात् । अत्र भाव षड्विध । एते च द्रव्यगुणकर्मसामान्यविशेषसमवाया इति । अभावश्चतुर्विध. प्राक्प्रध्वसाऽत्यन्तान्योऽन्याऽभावाश्चेति ।

एवञ्च षड्भावपदार्थानामादाय षट्पदार्थवादिनो वैशेपिका इति लोकप्रवादोऽस्तीत्यपि समीचीनमेव ।

**वैयाकरणदृशा अभाव—**

अभावो विचार्य्यते । इमान्यभावसम्बद्धानि, अभावपदघटितानि च सूत्राणि । तथाहि—

| | |
|---|---|
| १—**अदर्शन[1] लोपः** | पा० सू० १।१।६० |
| २—**नञ्** | पा० सू० २।२।६ |
| ३—**अव्ययं विभक्ति—[2]अभावाऽत्यय[3]—** | पा० सू० २।१।६ |
| ४—**ये चाऽभावकर्मणोः** | पा० सू० ६।४।१६८ |

शब्दशास्त्रे वैशेषिकसम्मताऽभावो गृह्यते । वैयाकरणा कथयन्ति यदेक एव अभावो नाम पदार्थो वास्तव । एतस्यैवाऽभावाख्यस्यौपाधिकाश्चत्वारो भेदा प्राक्प्रध्वसाऽत्यन्ताऽन्योऽन्याऽभावरूपा । यथैकमेवाकाश गृहगवाक्षाद्यवयवाऽवच्छेदकभेदेन नानाविध भवति, तथाऽभावोऽपि । अथ सामान्याभावो **नञ्** (पा० सू० २।२।६) इति सूत्रेण पाणिनिना ध्वनित । अत एव **अव्ययं विभक्ति**—(पा० सू० २।१।६) इति सूत्रेऽभावात्पृथगत्ययस्य ग्रहण सङ्गच्छते । अन्यथाऽभावेनैवाऽत्ययस्याऽपि सङ्ग्रहणात्तद्व्यर्थ स्यात् । यथोक्त हरिणा—

**चतस्रो हि यथाऽवस्था निरुपाख्ये प्रकल्पिताः ।**
**एव द्वैविध्यमप्येतद् भावाऽभावव्यपाश्रयम् ॥**

(वा० प० ३।३।६६) इति ।

व्याख्याता चेय कारिका हेलाराजेन—**प्राक्प्रध्वंसाऽत्यन्तेतरेतरलक्षणे-**

---

१. अदर्शनमभाव इत्येक एवार्थ । प्र० पा० सू० १।४।११०,

२. मक्षिकाणामभावो निर्मक्षिकम् । सि० कौ० पा० सू० २।१।६,

३. हिमस्याऽत्ययोऽतिहिमम् । अत्ययो ध्वस । सि० कौ० पा० सू० २।१।६

**पाधिवशेन नीरूपस्य रूपभेदायोगाद्यथाऽभावस्य चतुर्धा भेदः कालपनिकः, तथा भावाऽभावभेदोऽपि** (हेला० ३।३।६६) इति ।

**सरूपाणामेकशेष एकविभक्तौ** (पा० सू० १।२।६४) इति सूत्रभाष्यस्य प्रदीपेऽप्यभावस्य चतुर्विधत्वमङ्गीकृतं कैयटेन । तथा ह्येतस्य वचनम्—**अभावाश्चत्वार** इति । तेनैतेनाऽभावस्य प्राक्प्रध्वंसाऽत्यन्ताऽन्योऽन्याऽभावा भेदा इत्युररीक्रियन्ते ।

एषोऽभावपदार्थः कमपि भावपदार्थमाश्रित्यैव सलक्ष्यते । यथा—घटाऽभाव, पटाभाव इत्यादि । एवमभावमाश्रित्य भावोऽपि प्रतीयते । यथा घटाभावाऽभाव. घट एव । एव पटाऽभावाभाव पट एव । अत एवोक्तं भर्तृहरिणा—

> **यथा भावमुपाश्रित्य तदभावोऽनुगम्यते ।**
> **तथाऽभावमुपाश्रित्य तद्भावोऽप्यनुगम्यते ॥**
>
> (वा० प० ३।३।६०) इति ।

**व्याकरणे प्रागभावः—**

यदा कार्यं स्वकारणे स्थित **भ**वति, तदा कार्यस्य कारणे प्रागभावो भवति । अय प्रागभावरूपोऽर्थः पतञ्जलिना ध्वनित, तथा ह्येतस्य वचनम्—**कश्चित्कञ्चित्तन्तुवायमाह—अस्य सूत्रस्य शाटकं वयेति । स पश्यति—यदि शाटको न वातव्य, अथ वातव्यो न शाटकः, शाटको वातव्यश्चेति विप्रतिषिद्धम्, भाविनी खल्वस्य सञ्ज्ञाऽभिप्रेता, स मन्ये वातव्यः । यस्मिन्नुते शाटक इत्येतद् भवति** (म० भा० १।१।४५) इति । एतेन पटो यदि तन्तुरूपेणाऽस्ति तर्हि तत्र पटस्य प्रागभावो लक्ष्यते । तन्तुभि पटो निर्मितश्चेत्तर्हि पटस्य प्रागभावो नश्यतीति गम्यते ।

**व्याकरणे ध्वंसाभाव.—**

यदा कारणात्कार्यं बहिर्भूत भवति, तदोत्पन्नो घटो लक्ष्यत इति व्यवहार. । उत्पन्नस्य घटस्य ध्वसो भवति चेत्तर्हि तस्य ध्वसाभावो भवति । अत एवोत्पन्नो घट स इदानी ध्वस्त इति प्रतीतिसाक्षिको व्यवहारः प्रवर्त्तते । अस्य ध्वसाभावस्य **अपे क्लेशतमसोः** (पा० सू० ३।२।५०) इति सूत्रस्य **क्लेशापहः, तमोपह**, इत्युदाहरणाभ्या प्रतीतिर्भवति । अत्र **क्लेशाऽपहः पुत्र., तमोपहः सूर्यः** । तेनैतेन क्लेशतमसोर्विनाशकौ पुत्रसूर्यौ वर्त्तेते । यतो हि पितु. क्लेश हन्ति पुत्र, तमो नाशयति सूर्यश्च । तथा च यतः क्लेशतमसोर्विनाशो भवति, अतः क्लेशतमसोर्ध्वंसाऽभावो भवतीति गम्यते । यथोक्तं नागेशेन—**उदयति सवितरि तमो नष्टम्** (उद्० पा० सू० ३।३।३७) इति । तेनैतेन तमो नष्टम्= तमसो ध्वस. ।

किञ्च **अव्यय विभक्ति**—(पा० सू० २।१।६) इत्यादिसूत्रे **अत्यय** इति पठित । अत्राऽत्ययः=ध्वम । स च कस्यचिद्वस्तुन एव भवति । अत एव हिमस्याऽत्ययो ध्वस इत्यस्मिन्नर्थेऽ**तिहिमम्**मित्युदाहृतम् । तेनैतेन हिमस्य ध्वसाऽभाव सूचित ।

**अन्योऽन्याभावः, अत्यन्ताऽभावश्च**—

घटो न पट, पटो न घट, चैत्रो न मैत्र, मैत्रो न चैत्र इत्यादावितरेतराऽभाव सलक्ष्यते । इह घटो नाऽस्ति, इह पटो नाऽस्तीत्यत्र व्यवहारस्याऽत्यन्ताऽभावो भासते । एते च व्यवहारा लौकिका सर्वै—प्रयुज्यमाना सलक्ष्यन्त इति । तेनैतेनैते वैयाकरणैरप्युररीक्रियन्त एवेति गम्यते ।

वैशेषिकैर् अभावस्य प्राग्ध्वसाऽत्यन्ताऽन्योऽन्याऽभावा स्वातन्त्र्येण मन्यन्ते । परन्तु वैयाकरणैरेकोऽभाव स्वतन्त्र स्वीक्रियते । एतस्यौपाधिका—प्राग्ध्वसाऽत्यन्ताऽन्योन्याऽभावा इतीयानेव वैशेषिकवैयाकरणयोर्नये भेदो लक्ष्यते ।

एतेषु चतुर्ष्वप्यभावेषु **अत्यन्ताभाव, अन्योऽन्याभावश्च** नञा द्योत्यते । यथा—भूतले घटो नास्ति, घटो न पट इत्यादौ । अत एवोक्त पतञ्जलिना—**गौर शुच्याचार पिङ्गल कपिलकेश दृष्ट्वाऽध्यवस्यति ब्राह्मणोऽयमिति । ततः पश्चादुपलभते नाऽय ब्राह्मणोऽब्राह्मणोऽयमिति**[1] (म० भा० पा० सू० २।२।६) इति । अत्राऽब्राह्मणोऽयमित्यस्य क्षत्रियादिरर्थ । तथा चाऽब्राह्मणोऽयमित्यत्र ब्राह्मणात्पूर्ववर्त्तिनञा ब्राह्मणत्वाभावरूपोऽर्थ क्षत्रियादिर्गृह्यते । यथोक्त कैयटेन **शब्दशक्तिस्वाभाव्यादसत्त्वरूपमर्थ वाक्येनाह** (प्र० पा० सू० २।२।६) इति । अत्र—असत्त्वम्=सत्त्वाभाव ।

**स्वमतपुष्ट्यै दार्शनिकान्तरमतस्योपन्यासः**—

**कुमारिलभट्टमतेनाऽभावस्योपन्यास** —

अभावविषयक शाब्दिकमत दर्शनान्तरेष्वपि क्वचिद् दृश्यते । अतो मीमासकादीनामभावपराणि मतानीह समासत—प्रदर्श्यन्ते । तथाहि कुमारिलो मीमासकोऽभावपदार्थोऽस्तीति मन्यते । स कथयति यदभावो भावभिन्नो नाऽस्तीति स्वीक्रियते चेत्तर्हि—**इह भूतले घटो नास्ती**ति प्रतीतिर्विरुध्येत, अभावस्य भावभिन्नत्वात् । भवति च सा प्रतीति । न च तत्र घटो नास्तीति वाक्याद् भूतल-

१ पतञ्जलिर्ब्राह्मणस्य **गौरश्शुच्याचार—पिङ्गल—कपिलकेश इत्येतानप्यभ्यन्तरान् ब्राह्मण्ये गुणान्कुर्वन्तीति** लक्षणमचिकीर्त्तत् । परन्तु **नैतल्लक्षण समीचीनम्**, ब्राह्मणाऽब्राह्मणवृत्तित्वादतिव्याप्ति । किञ्च दाक्षिणात्यब्राह्मणे कृष्णवर्णब्राह्मणे च लक्षणस्याऽगमनादव्याप्तिदोषोऽप्यस्तीति नेद ब्राह्मणस्य लक्षण ग्राह्यम् ।

मात्रस्यैव प्रतीतिः। तथा सति घटवति भूतलेऽपि सा प्रतीति स्यात्, भूतलस्य तत्राऽपि सत्त्वात्। यदि च यत्र केवल भूतलम्, तत्रैव सा प्रतीतिरुदेतीति मन्यते तर्हि किमिद केवल भूतलम्? भूतलस्वरूपमेव केवलभूतलेन गृह्यते चेत्तर्हि सत्यपि घटे तस्याऽक्षते। तथा चाऽत्र[1] घटो नाऽस्तीति बुद्धिरुद्भवेत्। न च तथा प्रतीतिरुद्भवति, प्रत्युत घटवति भूतले घटोऽस्तीत्येव। अत इह भूतले घटो नाऽस्तीति प्रतीतिबलादभावस्य तत्त्वान्तरत्व वश्यमाश्रयणीय स्यात्। यथोक्तम्—**इह भूतले घटो नाऽस्तीति तावदस्ति प्रतीतिः। एषा तावद्भूतलमात्रविषया न भवति, सत्यपि घटे प्रसङ्गात्। अथ केवलभूतलविषयेत्युच्यते तर्हि एतदपि चिन्तनीयमेव। यतो हि किमिदं कैवल्यम्? यदि तावद्भूतलस्वरूपमेव, तदा सत्यपि घटे तस्याऽनपायाद्घटो नाऽस्तीति धीस्स्यात्** (प्र० पञ्जिका पृ० २८३) इति। अपि च—**अभावो नाम तत्त्वान्तरमवश्यमाश्रयणीयम्** (मा० मेयो० प्रमे० परि० पृ० ११८) इति। इत्ययमेव मीमासकाना राद्धान्त। स च वैयाकरणैरप्यास्थीयते।

**अद्वैतवेदान्तिमतेनाऽभावस्योपन्यास —**

कौमारिलमतमेव वेदान्तिनोऽपि पुष्णन्ति। यतो हि व्यावहारिकसत्ताया भाट्टमतमेवाऽनुसरन्ति वेदान्तिन। अत एव **व्यवहारे भाट्टनय** इति तेषामुक्ति.। परमार्थसत्तायान्तु ब्रह्माऽतिरिक्त किञ्चिदपि नाऽस्तीति स्वीकुर्वते। तथा च श्रुतिरपि समुद्घोषयति—**एकमेवाऽद्वितीयम्** (छा० ६।२।१) इति। **नेह नानाऽस्ति किञ्चन** (बृहदा० ४।४।१९) इति।

एवञ्च यद्यत्र घट स्यात्तर्ह्युपलभ्येत, यतो नोपलभ्यते, अतो नाऽस्तीत्येव योग्यवस्तूपलम्भाऽभावजन्यमिह **भूतले घटो नाऽस्तीति** घटाऽभावज्ञानमनुपलब्धिप्रमाणकृत्यमित्येवमङ्गीकुर्वन्ति। अत एवाऽनुपलब्धेरतिरिक्तप्रमाणत्वमभ्युपगच्छन्ति। यथोक्तम्—**ज्ञानकरणाऽजन्याऽभावाऽनुभवाऽसाधारणकारणमनुपलब्धिरूपं प्रमाणम्** (वेदा० परिभा० अनुप० परि०) इति।

**अभावस्याऽधिकरणस्वरूपत्वसिद्धि —**

प्राभाकरास्तु—अभावस्याऽतिरिक्तपदार्थत्व नाभ्युपगच्छन्ति, प्रत्युत भावान्तरमेवाऽभाव इति। अतिरिक्ताऽभाववादिभिर्ये दोषा उद्घाटितास्तानित्थ परिहरन्ति। ते कथयन्ति यद् भावाना ज्ञान द्विधा भवति। अत्रैक भावान्तरससृष्टविषयम्, तदेकविषयञ्चेति द्वितीयम्। अपरमपि द्विविधम्, प्रतियोगिनि दृश्याऽदृश्यभेदात्। अत्र दृश्ये प्रतियोगिनि यत्तदेकविषय ज्ञानम्, तज्ज्ञान प्रति-

---

१. घटवति भूतले।

योग्यभाव इति विशेषतो व्यवह्रियत इह भूतले घटाऽभाव । अतो भूतले घटो नाऽस्तीत्युक्ते दृश्ये घटे भूतलमात्रस्यैव बोध इत्युक्त भवति । प्रतियोगिनि दृश्यत्वञ्चाऽन्यत्र प्रमितस्याऽन्यत्र प्रसक्तिरूपम् । इदञ्चाऽभावाऽतिरिक्तवादिभिरप्यवश्यमङ्गीकरणीयमेवाऽस्ति । अन्यथा प्रसक्तनिषेध आपद्येत, **प्रसक्त हि निषिध्यत** इति सिद्धान्तात् । एतदेव दृश्यत्वम्, एतच्च प्रभाकरमते ज्ञानविशेषमधिकरणविशेष वेति मन्यते । धर्मिकल्पनातो धर्मकल्पनमेव वर लाघवात् । अतोऽधिकरणस्वरूपातिरिक्तोऽभावो नाऽस्तीति सङ्गिरन्ते प्राभाकरा ।[1] यथोक्तम्—

> **अभावाख्य—पदार्थस्तु नाऽस्तीत्याह प्रभाकर ।**
> **घटाद्यभावस्तत्पक्षे केवलं भूतल मतम् ।।**
> (मा० मेयो० प्रमे० परि० श्लो० स० ४७) इति ।

**बौद्धमतेनाऽभावस्योपन्यासः—**

शून्यस्यैव विवर्त्तरूम खिलञ्जगद्भासमान लक्ष्यत इति माध्यमिको बौद्धो मन्यते । विज्ञानस्यैव विवर्त्तरूपमिति योगाचारास्सङ्गिरन्ते । तथा चाऽनयो प्रथमपक्षे शून्यमेव सर्वम्, द्वितीयपक्षे विज्ञानमेव सर्वमिति निष्कर्ष । एताभ्यामतिरिक्ता बाह्यवस्तुन. सत्ताऽस्ति । एतच्च बाह्यवस्तु क्षणिकम्, न तु चिरस्थायि । क्षणिकतरा बाह्यपदार्था अपि ज्ञानाकारविशेषदर्शनाऽनुमेया इति सौत्रान्तिका व्याचक्षते । बाह्यार्थस्याऽनुमेयत्व न स्वीकुर्वन्ति वैभाषिका इति । ते हि प्रत्यक्ष क्षणभङ्गुरञ्जगदिति भाषन्ते । तथा चैनेषा मतसङ्ग्राहक पद्यम्—

> **मुख्यो माध्यमिको विवर्त्तमखिल शून्यस्य मेने जगद्**
> **योगाचारमते तु सन्ति मतयस्तासां विवर्त्तोऽखिल ।**
> **अर्थोऽस्ति क्षणिकस्त्वसावनुमितिबुद्ध्येति सौत्रान्तिकः**
> **प्रत्यक्षं क्षणभङ्गुरञ्च सकलं वैभाषिको भाषते ।।**
> (मा० मेयो० प्रमे० परि० ४८) इति ।

योगाचारस्य विज्ञानविवर्त्तवाद प्रभाकर. स्वीकुरुते । अत एव श्रीहर्षमिश्रेण खण्डनखण्डखाद्ये प्रभाकरमतमुद्धृतम् । तथा हि—

> **गुरुर्धियमभावस्य स्थाने स्थानेऽभिषिक्तवान् ।**
> **प्रसिद्ध एव लोकेऽस्मिन् बुद्धबन्धु—प्रभाकर. ।।**
> (ख० ख० खा० परि० ४पृ० ४७७) इति ।

---

1. द्र० प्र० पञ्चिका पृ० २८७ ।

एतेन बौद्धप्राभाकरयोर्मतस्यैक्यमादाय बन्धुत्वमुक्तं श्रीहर्षेणेति गम्यते।

**सांख्यमतेनाऽभावस्योपन्यासः—**

साख्यास्तु—अभाव परिणामविशेषतयैव प्रतीयते, पदार्थाना प्रतिक्षण-परिणामित्वात्। तथा चाऽधिकरणस्य परिणामविशेष एवाऽभावो वर्त्तते, न तु भावभिन्नोऽभावः कश्चन पदार्थान्तरोऽस्तीति व्याचक्षते। अत एवाऽनुपलब्धेः पृथक्प्रमाणत्व स्वीकुर्वन्ति साख्या। यथोक्त वाचस्पतिमिश्रेण—

**अभावोऽपि प्रत्यक्षमेव। नहि भूतलस्य परिणामविशेषात् कैवल्यलक्षणादन्यो घटाभावो नाम। प्रतिक्षणं परिणामिनो हि सर्व एव भावा ऋते चितिशक्तेः। स च परिणामभेद ऐन्द्रियक इति नाऽस्ति प्रत्यक्षाऽनवरुद्धो विषयो यत्राऽभावाह्वय प्रमाणान्तरमभ्युपेयमिति** (सा० तत्त्वकौ० का० ५) इति।

**योगमतेनाऽभावस्योपन्यासः—**

**अभावप्रत्ययाऽलम्बनावृत्तिर्निद्रा** (यो० सू० १।१०) इति सूत्रेऽभावस्य जाग्रत्स्वप्नयोरभावस्येत्यर्थ। एषोऽभावोऽनयोरभिभवरूप एव, न तु वास्तवोऽभावोऽत्र विवक्षित शशशृङ्गादिवत्। अर्थान्निद्राऽवस्थाया जाग्रत्स्वप्नावनभिव्यक्तधर्मेण तिष्ठत। अस्मिन् विषये **अतीताऽनागतं स्वरूपतोऽस्त्यध्वभेदाद्धर्माणाम्** (यो० सू० ४।१२) इति योगसूत्रभाष्यमालोच्यम्। उक्तञ्चाऽत्रैव भाष्ये—**एकस्य चाऽध्वन. समये द्वावध्वानौ धर्मिसमन्वागतौ भवत एवेति नाऽभूत्वाऽभावस्त्रयाणामध्वनामिति** (यो० भा० ४।१२) इति।

अत्र **नाऽभूत्वाऽभाव** इत्यनेन भावस्यैव पदार्थस्य वर्त्तमानत्वाऽतीतत्वाऽनागतत्वादयः परिणामभूता वर्त्तन्ते, अतो नास्ति भावाद् भिन्नोऽभावो नामा कश्चित्।

एवञ्च वैशेषिकनैयायिककौमारिलमीमासकवेदान्तिनश्च भावाद्भिन्नोऽभावपदार्थोऽस्तीति ब्रुवते। प्राभाकरमीमासका बौद्धाश्च भूतलस्वरूप एवाऽभावो, नत्वतिरिक्तपदार्थरूप इति सङ्गिरन्ते। साख्या भावस्यैव परिणामरूपोऽभावो न तु पदार्थान्तरोऽभाव। वैयाकरणा वैशेषिकादेर्मतस्यानुमोदन कुर्वन्त. प्राक्प्रध्वसादीनौपाधिकान्भेदानेकस्यैवाऽभावस्य व्यवहरन्ति। तेनैतेन भावाद् भिन्नश्चाऽभावो वर्त्तत इति स्वीकुर्वन्त्येव शाब्दिकाः।

॥ इत्यभाव. ॥

# दशमः परिच्छेदः

## प्रमाणम्

**वैशेषिकदृशि प्रमाणम्—**

कस्यचिद् वस्तुनः प्रमितेरुत्पत्तौ प्रमाणमसाधारणं कारणं भवति । नहि प्रमाणमन्तरा कस्यचिद् वस्तुनो निष्पत्तिः कर्त्तुं शक्यते कैश्चित् । अत एव **प्रमेयसिद्धिः प्रमाणाद्धि**, इत्युक्तमीश्वरकृष्णेनेति ।[1] तथा च यतः प्रमेयाणां प्रमाकरणं प्रमाणमस्ति, अतस्तस्य पर्य्यालोचनमावश्यकमस्तीति बुद्ध्वा प्रमाणं विचार्य्यते । अत्राऽऽदौ वैशेषिकस्य मतमुपन्यस्यते ।

वैशेषिको हि द्विविधमेव प्रामुख्येण प्रमाणं मन्यते । अत्रैकं प्रत्यक्षमपरमनुमानञ्चेति । यथा ब्रूते—शङ्करमिश्रः प्रशस्तपादश्च—**प्रमाणं द्विविधं प्रत्यक्षं लैङ्गिकञ्च**[2]। अपि च **विद्यापि चतुर्विधा । प्रत्यक्षलैङ्गिकस्मृत्यार्षलक्षणाचेति**[3]। नैयायिकाद्यभिमतोपमानशब्दादीनामनुमानेऽन्तर्भावो भवति । यथाह—**शब्दादीनामप्यनुमानेऽन्तर्भावः समानविधित्वादिति**[4] ।

गौतमस्य मते तु—बुद्धिर्द्विधा, अनुभूतिस्मृतिभेदात् । पुनरनुभूतिश्चतुर्विधा, प्रत्यक्षाऽनुमित्युपमितिशब्दभेदात् । एतासां चतसृणामनुभूतीनाञ्च चत्वारि करणानि । एतानि च प्रत्यक्षाऽनुमानोपमानशब्दाः । तथा च गौप्तमीयं सूत्रम्—**प्रत्यक्षाऽनुमानोपमानशब्दाः प्रमाणानि** (गौ० सू० १।१।३) इति । अत्र ब्रूते विश्वनाथः—

> **विभुर्बुद्ध्यादिगुणवान् बुद्धिस्तु द्विविधा मता ।**
> **अनुभूतिः स्मृतिश्च स्यादनुभूतिश्चतुर्विधा ॥**
>
> (भा० परि० ५१) इति ।

अत्र प्रत्यक्षमपि द्विविधम्, प्रमाऽप्रमाभेदात् । अत्र **प्रमा**—तद्वति तत्प्रकारकञ्ज्ञानं यत्सा । यथा—इदं रजतमित्यत्र । अत्र तद्वति(=रजतत्ववति रजते) तत्प्रकारकम् (=रजतत्वप्रकारकम्), रजतविशेष्यकञ्च ज्ञानं भासते । इदमेव

---

१ सा० का० ४ ।

२. वै० सू० ६।२।१ अस्याऽवतरणिकायाम् ।

३ प्र० पा० भा० पृ० ६४ ।

४. प्र० पा० भा० पृ० १०६ ।

ज्ञान यथार्थानुभव प्रमेत्यपि गीयते। **अप्रमा**—तदभाववति तत्प्रकारकञ्च ज्ञानमप्रमा। यथा—शुक्ताविद रजतमित्यत्र। अत्र तदभाववति (=रजतत्वाऽभाववति शुक्तौ) तत्प्रकारकम् (=रजतत्वप्रकारकम्), रजतविशेष्यकञ्च ज्ञान शुक्तौ सूर्य्यकिरणसम्पर्कमहिम्ना जायते। ततश्च रजतार्थी शुक्तौ रजतबुद्धया तद् ग्रहीतु प्रवर्त्तते चेद्रजत (=शुक्ति) गृहीत्वा निश्चिनोति **नेदं रजतम्, शुक्तिरियम्**। तथा च पूर्वज्ञानस्य बाध, शुक्तिरियमिति निश्चयाद् भवति।

अत पर प्रत्यक्षाऽनुमित्युपमितिशाब्दाना ज्ञानाना यानि करणानि प्रत्यक्षादीनि वर्त्तन्ते, एतेषा क्रमशो विवेचना प्रस्तूयते। अत्राऽऽदौ प्रत्यक्षमिति। तथाहि—

**प्रत्यक्षं प्रमाणम्**—

प्रत्यक्षमपि द्विविधम्, लौकिकाऽलौकिकभेदात्। तत्र लौकिकमिन्द्रियार्थसन्निकर्षजन्यम्, यथाऽस्मदादीनाम्। अलौकिकन्त्वात्ममनसो सयोगविशेषजन्यम्, यथा योगिनाम्। एतयो क्रमशो विवेचना प्रस्तूयते।

**लौकिक प्रत्यक्षम्**—

विपयेन्द्रिययो सन्निकर्षाद्यज्ज्ञानमुत्पद्यते, तस्य करण प्रत्यक्ष भवति। एतदेव प्रत्यक्ष प्रमाणमिति कथ्यते। यथा घटमह पश्यामीति। अत्र घटस्य चक्षुरिन्द्रियेण सह सन्निकर्षे जाते तस्य प्रत्यक्ष ज्ञान भवति। अस्या प्रत्यक्षप्रमितावात्मा मनसा, मन इन्द्रियेण, इन्द्रिय विषयेण च परस्पर सयुज्यते। तेनैतेषा सन्निकर्ष, एतस्मात् सन्निकर्षात्प्रत्यक्षम्, एतदेव प्रत्यक्षप्रमाया असाधारण कारण सत्करण भवति। यथोक्त कणादेन—

**आत्मेन्द्रियमनोऽर्थसन्निकर्षाद् यन्निष्पद्यते तदन्यत्** (वै० सू० ३।१।२०) इति। सूत्रेऽस्मिन् यद्=ज्ञानम्। निष्पद्यते=जायते। तज्ज्ञानम्। अन्यद्= आत्मनि प्रत्यक्ष प्रमाणम्।

अपि च—**इन्द्रियार्थप्रसिद्धिरिन्द्रियार्थेभ्योऽर्थान्तरस्य हेतु.** (वै० सू० ३।१।२) इति। अत्रेन्द्रियम्=चक्षुरादि, अर्थ =शब्दादि, प्रसिद्धि =श्रोत्रग्रहणो योऽर्थ: स शब्द, चक्षुर्मात्रग्रहणो योऽर्थस्तद्रूपमित्यादि, इन्द्रियार्थेभ्य =इन्द्रियेभ्योऽर्थेभ्यश्च। अर्थान्तरस्य=आत्मन, हेतु =कारणम्, एतच्च प्रत्यक्षम्।

इदमेव प्रत्यक्षलक्षण गौतमोऽपि पुष्णाति। तथा हि—

**इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम्**। न्या० सू० १।१।४ इति।

**सूत्रेऽस्मिन्नव्यपदेश्यम्**=शब्दाऽजन्यम्। अव्यभिचारि=सशयविपर्य्ययरहितम्। व्यवसाय:=अर्थं ग्रहीतुमिन्द्रियस्य व्यापार.।

किञ्च ज्ञानाऽकरणक ज्ञान प्रत्यक्षमिति लक्षणान्तरमपि भवति। तथा चाऽनुमितौ व्याप्तिज्ञानस्योपमितौ सादृश्यज्ञानस्य, शाब्दबोधे पदज्ञानस्य, स्मृतावनुभवस्य च कारणत्वात्तत्र तत्र नाऽतिव्याप्ति ।

अत्र प्रथमक्षणे विषयेन्द्रिययो सन्निकर्ष, द्वितीयक्षणे घटघटत्वयोरपार्थक्येन ज्ञानम् । एतदेव निर्विकल्पक ज्ञानमिति कथ्यते । तृतीयक्षणे घटघटत्वयो पार्थक्येन प्रतीतिरिति। एषा एव सविकल्पक ज्ञानमित्युच्यते। यथा—अय घट इति ज्ञानम्। चतुर्थक्षणे ग्राह्याऽग्राह्ययोरपेक्षोपेक्षात्मके ज्ञाने इति क्रम ।[1]

एवञ्च यदा ग्राह्याऽग्राह्ययोरपेक्षोपेक्षात्मके ज्ञाने एवेति प्रत्यक्ष मन्यते तदैतस्य ग्राह्याऽग्राह्यबुद्धय फलम् (=उपादानहानात्मकम्), निर्विकल्पक ज्ञान करणम्, सविकल्पकमेव प्रत्यक्षमवान्तरव्यापारो भवति, अनन्तरत्वात्[2]। यदा च सविकल्पमेव प्रत्यक्ष ज्ञान मन्यते, तदेन्द्रियार्थसन्निकर्ष करणम्, निर्विकल्पकमेव[3] प्रत्यक्षमवान्तरव्यापारो भवितुमर्हति, सविकल्पकञ्च ज्ञान फलम्, पूर्वोक्तयुक्ते[4]। यदा निर्विकल्पक ज्ञान फलम्, तदेन्द्रियमेवाऽस्य करणम्, अत्रादौ इन्द्रियार्थसन्निकर्षोऽवान्तरव्यापार, अनन्तरत्वात्[5]। तथा चेदानी सविकल्पक-

---

१. सर्वेषु पदार्थेषु चतुष्टयसन्निकर्षादवितथमव्यपदेश्य यज् ज्ञानमुत्पद्यते, तत्प्रत्यक्ष प्रमाणम्, प्रमेया द्रव्यादय पदार्था, प्रमातात्मा प्रमितिर्गुणदोषमाध्यस्थ्यदर्शनम्। (प्र० पा० भा० पृ० ४७४-४७५),

२. कदा पुनर्ज्ञानं करणम् ? यदा उक्तसविकल्पकानन्तर हानोपादानयोरुपेक्षाऽपेक्षे बुद्धी प्रवर्त्तेते तदा निर्विकल्पक ज्ञान करणम्, सविकल्पक ज्ञानमवान्तरव्यापार, हानादिबुद्धय फलम्। तज्जन्यस्तज्जन्यजनकोऽवान्तरव्यापार । यथा कुठारजन्य कुठारदारुसयोग कुठारजन्यच्छिदाजनक ।

३. तत्र सामान्यविषयेषु स्वरूपाऽऽलोचनमात्रप्रत्यक्ष प्रमाणम्, प्रमेया द्रव्यादय पदार्था, प्रमातात्मा प्रमितिर्द्रव्यादिविषयस्य ज्ञानम्। प्र० पा० भा० पृ० ४७१ ।

४. कदा पुनरिन्द्रियार्थसन्निकर्ष करणम् ? यदा निर्विकल्पकानन्तर सविकल्पक नामजात्यादियोजनात्मक डित्थोऽयम्, ब्राह्मणोऽयम्, श्यामोऽयमिति विशेषणविशेष्यावगाहि ज्ञानमुत्पद्यते, तदेन्द्रियार्थसन्निकर्ष करणम्। निर्विकल्पकज्ञानमवान्तरव्यापार । सविकल्पक ज्ञान फलम्।

५. कदा पुनरिन्द्रिय करणम् ? यदा निर्विकल्परूपा प्रमा फलम्। तथा हि आत्मा मनसा सयुज्यते, मन इन्द्रियेण, इन्द्रियमर्थेन, इन्द्रियाणा वस्तुप्राप्यप्रकाशकारित्वनियमात् । ततोऽर्थसन्निकृष्टेमेन्द्रियेण निर्विकल्पक

निर्विकल्पकयो प्रसङ्गत प्राप्त स्वरूप विचार्य्यते । **सविकल्पकम्—विकल्प्यते** =विशिष्यते वस्तु येन स विकल्प =विशेषणम्, तेन सहित सविकल्पम्, सविकल्पमेव सविकल्पकम् । अथवा विकल्पयति=विशिनष्टि वस्तु यत् तद् विकल्पकम्=विशेषणम्, तेन सहित सविकल्पकम्=सविशेषणम् । अनया व्युत्पत्त्या सविकल्पक ज्ञान तदेव भवति, यस्मिन् विशेषणविशेष्यावगाहिनि ज्ञाने वस्तु भासते । यथा—अय गौरिति ज्ञानम् । अत्र ज्ञानस्य तिस्रो विषयता भासन्ते । तथाहि—गोत्वमिति विशेषणताख्या, गौरिति विशेष्यताख्या, अनयोर्य: समवायससर्ग , स ससर्गताख्या । तथा च यज् ज्ञानम् पूर्वप्रदर्शिता विषयता अवगाहते, एतादृशी विषयताऽवगाहिनी बुद्धिरेव सविकल्पक ज्ञानमित्युच्यते । यथा—ब्रवीति विश्वनाथ —

**अथवा तत्प्रकारं यज्ज्ञानं तद्वद्विशेष्यकम् ।**
**तत्प्रमा न प्रमा नापि भ्रमः स्यान्निर्विकल्पकम् ।।**
भा० परि० १३५ ।।

अत्र तत्प्रमा=विशेषणविशेष्याऽवगाहि ज्ञानम् । एतदेव सविकल्पकमिति । अपि च—**विशेषणतावच्छेदकप्रकारक ज्ञानं विशिष्टवैशिष्ट्यज्ञाने कारणम्** (न्या० सि० मु० भा० परि० ५८) इति । अत्र विशिष्टवैशिष्ट्यज्ञाने= सविकल्पकज्ञान इत्यर्थ । अत एव **नामजात्यादियोजनासहित ज्ञानं सविकल्पकमित्यपि** केचिदाचक्षते । **अभिलापससर्गयोग्यं प्रतिभास सविकल्पकमन्ये** ब्रुवते ।

किञ्च—समीपस्थितेऽर्थे **अयमिति** बुद्धि प्रवर्त्तते । समीपतरवर्तिनि च **एष** इति व्यपदेश । एवमेव क्रियाया स्वतन्त्रोऽयमिति बुद्धिमपेक्ष्य त्वयेद कार्य कृतमित्यत्र कर्त्तृत्वोपरक्ता बुद्धिर्जायते । कारणव्यापारविषयत्वबुद्धिमपेक्ष्य कृतमित्यत्र कर्मत्वोपरक्ता बुद्धि । अय भुजिक्रियाया कर्त्ता प्रयोजकश्चायमिति बुद्धिमपेक्ष्य भोजयेति । नियोज्यनियोक्तृव्यापारस्य विषयोऽयमिति बुद्धिमपेक्ष्यैनमिति । यथा ब्रूते कणाद —**अयमेष त्वया कृतं भोजयैनमिति बुद्ध्यपेक्षम्** (वै० सू० ८।२।१) इति ।

अपि च—**अयमेष** इत्यादिपूर्वप्रदर्शितव्यवहारो दृष्टविषयेष्वेव, नत्वदृष्ट-

---

नामजात्यादियोजनाहीन वस्तुमात्रावगाहि यत् किञ्चिदिदमिति ज्ञान जन्यते । तस्य ज्ञानस्येन्द्रिय करणम्, छिदाया इव परशु । इन्द्रियार्थसन्निकर्षोऽवान्तरव्यापारः, छिदाकरणस्य परशोरिव दारुसयोग । निर्विकल्पक ज्ञान फलम्, परशोरिव छिदा । तर्कभाषा

विषयेषु । एतेनाऽन्वयव्यतिरेकाभ्यामपि गम्यते । एतदेवाऽभिप्रेत्य ब्रूते कणादः—**दृष्टेषु भावाददृष्टेष्वभावात्** (वै० सू० ८।२।२) **इति ।**

एवञ्च गौरय नाऽश्व, अय शुक्ल, गौर्गच्छति, चैत्रोऽय न मैत्र इत्यादि-प्रतीतिसाक्षिको व्यवहार इह जगति प्रवर्त्तते । अस्य व्यवहारस्य प्रवर्त्तकम-साधारण कारणमस्ति किञ्चिदिति गम्यते । तच्च कारण किम् ? इति चिन्ताया सविकल्पक ज्ञानमेवाऽस्तीति निश्चीयते । अत एव **अखिलाया लोकयात्राया मूल-**मित्यामनन्ति व्यवहारविद ।

**निर्विकल्पकम्**—**विकल्पेभ्यः=विशेषरणेभ्यो निर्मुक्त निर्विकल्पम्, निर्वि-कल्पमेव निर्विकल्पकम्, अथवा विकल्पकेभ्यो=विशेषणेभ्यो निर्मुक्त निर्वि-कल्पक**मित्यनया व्युत्पत्त्या विशेषणविशेष्याभ्या हीन यज् ज्ञान भवति, तज् ज्ञान निर्विकल्पकमित्युच्यते । यथा—यत्किञ्चिदिदमिति । अत्र विशेषणम्, विशेष्यम्, अनयोर्य ससर्ग स न भासते । अतो यत्किञ्चिदिदमित्यत्र विशेषणताख्या, विशेष्यताख्या ससर्गताख्या च तिस्रो विषयता न सन्ति । तथा च विशेषणताख्यादिविपयताशून्य यज्ज्ञानमथवा विलक्षणविषयताशालि यज् ज्ञान तज् ज्ञान निर्विकल्पकमिति केचिदाहु । अत एवाऽत्र ब्रूते विश्वनाथ—**प्रथमतो घटघटत्वयोर्वैशिष्ट्यानवगाह्येव ज्ञानं जायते, तदेव निर्विकल्पकमि-त्युच्यते । निर्विकल्पके च घटत्वादिक न प्रकार, तेन घटत्वादिविशिष्टघटादि-वैशिष्ट्यभानं ज्ञाने न सम्भवति** (न्या० सि० मु० भा० परि० ५८) इति ।

अपि च—

> **ज्ञानं यन्निर्विकल्पाख्यं तदतीन्द्रियमिष्यते ।** भा० परि० ५८ इति
>
> **तत्प्रमा न प्रमा नाऽपि भ्रमः स्यान्निर्विकल्पकम् ।**
>
> भा० परि० १३५ ख ।
>
> **प्रकारतादिशून्यं हि सम्बन्धाऽनवगाहि तत् ।।**
>
> भा० परि० १३६ क ।

**अलौकिकं प्रत्यक्षम्**—

अलौकिक प्रत्यक्ष त्रिविधम्, सामान्यलक्षणज्ञानलक्षणयोगजभेदात्[1] । एतेषा क्रमशो विवेचना प्रस्तूयते । अत्राऽऽदौ (१) **सामान्यलक्षणं प्रत्यक्षम्—पर्वतो वह्निमान् धूमादि**त्यत्र धूमस्य चाक्षुष प्रत्यक्ष भवति । अस्मिन् प्रत्यक्षे धूमो विशेष्य, धूमत्वञ्च प्रकार । चक्षुरिन्द्रियेण सह सम्बद्धो धूमोऽस्ति । तथा च

१. अलौकिकस्तु व्यापारस्त्रिविध परिकीर्त्तित ।
सामान्यलक्षणो ज्ञानलक्षणो योगजस्तथा ।। भा० परि० ६३ इति ।

चक्षुरिन्द्रियसम्बद्धधूमविशेष्यकधूमत्वप्रकारकञ्च ज्ञानमुत्पद्यते। **अत्र** धूमत्वमिति सामान्यप्रत्यासत्त्या सकलधूमविषयक ज्ञान भवति। यतो ह्यशेषधूमेषु धूमत्वमिति सामान्यप्रत्यासत्त्यैव भासते[1]। इन्द्रियसम्बन्धञ्च लौकिकप्रत्यक्षस्थल एव सम्भवति, न तु मानसप्रत्यक्षस्थले। अत्र लौकिकसन्निकर्षाऽभावात्। तेन मानसप्रत्यक्षस्थले तु ज्ञानप्रकारीभूत सामान्यमात्र प्रत्यासत्तिरित्येव विवक्षितम्। लौकिकप्रत्यक्षस्थले तु—इन्द्रियसम्बद्धविशेष्यकज्ञानप्रकारीभूतमिति। अत एवाह —**इन्द्रियसम्बन्धश्च लौकिको ग्राह्यः। इदञ्च बहिरिन्द्रियस्थले। मानसप्रत्यक्षस्थले तु ज्ञानप्रकारीभूतं सामान्यमात्रं प्रत्यासत्ति** (न्या० सि० मु० भा० परि० ६३) इति।

२ **ज्ञानलक्षण प्रत्यक्षम्—सुरभि चन्दनमित्यत्र** सौरभञ्चन्दनञ्चन्दनत्वञ्च त्रय भासते। अत्र चन्दनस्य चन्दनत्वस्य च चाक्षुष प्रत्यक्ष भवति, **येनेन्द्रियेण या व्यक्तिर्गृह्यते तेनेन्द्रियेण तद्गता जातिरपीति** न्यायात्। किन्तु सौरभस्य चाक्षुष प्रत्यक्ष न सम्भवति, सौरभस्य चक्षुरिन्द्रियग्राह्यत्वाऽभावात्। सौरभस्य घ्राणग्राह्योऽपि तदानी घ्राणेन्द्रियेण सहाऽसति सम्बन्धे **सुरभि चन्दनमिति** ज्ञान भवति। अतस्तज्ज्ञानायाऽलौकिक सन्निकर्षः कल्प्यते स च पूर्वाऽनुभूतसौरभस्य स्मरणरूप। अस्य चक्षुर्निरूपितत्वन्तु चक्षु सयुक्तमन सयुक्तात्मसमवेतत्वादिति ग्राह्यम्। इदमेव ज्ञानलक्षण प्रत्यक्षमित्युच्यते[2]।

३ **योगजं प्रत्यक्षम्**—योगजप्रत्यक्ष द्विविधम्, युक्तयुञ्जानभेदात्। अत्र (१) **युक्तम्**—युक्तो योगी स भवति य समाहिताऽन्त करणकोऽस्ति। अस्यात्मनि सर्वदाऽतीताऽनागतविषयाणामपि आत्ममनसो सयोगविशेषाच्चाक्षुष प्रत्यक्षमिव ज्ञान भवति। यथाह कणाद—**आत्मन्यात्ममनसोः संयोगविशेषादात्मप्रत्यक्षम्** (वै० सू० ८।१।११) इति। अपि च—**तत्र युक्ताः—साक्षात्कर्तव्ये वस्तुन्यादरेण मनो निधाय निदिध्यासनवन्त, तेषामात्मनि स्वात्मनि च ज्ञानमुत्पद्यते। आत्मप्रत्यक्षम्=आत्मा प्रत्यक्ष. साक्षात्कारविषयो यत्र ज्ञाने तत्तथा** (उप० वै० सू० ६।१।११) इति। अमुमेव ब्रवीति विश्वनाथ—**युक्तस्य तावद्योगजधर्मसहायेन मनसा आकाशपरमाण्वादिनिखिलपदार्थगोचरं ज्ञानं सर्वदैव भवितुमर्हति** (न्या० सि० मु० भा० परि० ६६) इति।

(२) **युञ्जानं प्रत्यक्षम्**—युञ्जानयोगी स एव यो ह्यसमाहिताऽन्त करणको भवति। असौ च यदेच्छति यन्मेऽतीताऽनागतादिविषयाणाम्, व्यवहितविप्रकृष्टविषयाणामपि प्रत्यक्षमिव ज्ञान स्यादिति सङ्कल्पयते चेत्तदा योगजधर्ममहिम्ना

---

१. आसत्तिराश्रयाणान्तु सामान्यज्ञानमिष्यते। भा० परि० ६४ क

२ विषयी यस्य तस्यैव व्यापारो ज्ञानलक्षण। भा० परि० ६५ क

स्फीतेन्द्रियशक्त्या युञ्जानयोगी पूर्वोक्तान् प्रत्यक्षीकरोति । यथा ब्रवीति कणाद:
**असमाहितान्तःकरणा उपसंहृतसमाधयस्तेषाञ्च** (वै० सू० ९।१।१३) इति।
अपि चाह शङ्करमिश्र:—**निरयामा भूमिरित्याकलयन्त सकलमर्थजातं योगज-धर्मबलोपबृंहितेन्द्रियशक्त्या व्यवहितं विप्रकृष्टञ्च प्रत्यक्षीकुर्वन्ति** (उप० वै० सू० ९।१।१३) इति[1] अमुमेवाह विश्वनाथ:—

> **योगजो द्विविधः प्रोक्तो युक्तयुञ्जानभेदतः ।**
> **युक्तस्य सर्वदा भानं चिन्तासहकृतोऽपरः ॥**
>
> **भा० परि० ६५ ख ६६ क**

**प्रत्यक्षप्रमितेर्भेद:—**

प्रत्यक्षप्रमाया षड्विधो भेदो वर्त्तते । तथाहि १—पुष्पादीना घ्राणेन्द्रियेण सह सन्निकर्षे जाते गन्धस्य प्रत्यक्षप्रमा भवति । अत एवाऽस्याः प्रमाया घ्राणज प्रत्यक्षमित्यभिलाप । २—आमलकजम्बीरजम्बुफलादीना रसनेन्द्रियेण सह सम्पर्के जाते रसस्य प्रत्यक्षप्रमा भवति । अत एवाऽस्याः प्रमाया रासन प्रत्यक्षमित्याख्या । ३—घटपटादीना चक्षुरिन्द्रियेण सह सयोगे जाते रूपस्य प्रत्यक्षप्रमा प्रभवति । अत एवाऽस्या प्रमायाश्चाक्षुष प्रत्यक्षमित्यभिधानम् । ४—पृथिव्यप्तेजोवायूना त्वगिन्द्रियेण सह सम्पर्के सति मृदूष्णशीतोष्णादीना स्पर्शस्य प्रत्यक्षप्रमोत्पद्यते । अत एवाऽस्याः प्रमाया स्पार्शन प्रत्यक्षमिति व्यपदेश । ५—शब्दस्य श्रोत्रेणेन्द्रियेण सह सयोगे जाते शब्दस्य प्रत्यक्षप्रमोत्पद्यते । अस्या प्रमाया श्रावण प्रत्यक्षमिति नाम । ६—मनसा यज् ज्ञान प्रभवति तस्य मानस प्रत्यक्षमिति व्यवहार । एतेषा सङ्कलनया षड्विध प्रत्यक्ष भवतीति । यथोक्त विश्वनाथेन—

> **प्रत्यक्षमप्यनुमितिस्तथोपमितिशब्दजे ।**
> **घ्राणजादिप्रभेदेन प्रत्यक्षं षड्विधं मतम् ॥** भा० परि० ५२ इति ।
> **घ्राणजं रासनं चाक्षुषं स्पार्शनं श्रौत्रं मानसमिति षड्विधं प्रत्यक्षम्**[2] ।

**सन्निकर्षः—**

घटादीना प्रत्यक्षप्रमितौ षड्विध सन्निकर्ष १—तत्र घटादीना चाक्षुषादि

---

१ आत्मसमवायादात्मगुणेषु वै० सू० ९।१।१५, योगिना प्रत्यक्ष ज्ञानमुत्पद्यते । आत्मसमवेतानान्तु बुद्ध्यादीना सयुक्तसमवायादेव प्रत्यक्ष ज्ञानमुत्पद्यतेऽस्मदादीनामिवेति न तत्र सन्निकर्षान्तरापेक्षेत्यर्थः । उप० वै० सू० ९।१।१५

२. न्या० सि० मु० भा० परि० ५२ ।

प्रमायामिन्द्रियार्थयो संयोग । २—घटादीना रूपस्य चाक्षुषप्रमाया स्वसयुक्त-समवाय । ३—रूपत्वरसत्वादीना चाक्षुषरासनादिप्रमाया स्वसयुक्तसमवेत-समवाय । ४—शब्दस्य श्रावणप्रमाया समवाय । ५—शब्दत्वस्य श्रावण-प्रमाया समवेतसमवाय । ६—इह भूतले घटो नास्तीत्यत्र घटाभावो विशेषणम्, भूतलञ्च विशेष्यम् । अत्र घटाभावप्रतियोगिकभूतलानुयोगिकविशेषणविशेष्य-भाव । यथाह विश्वनाथ —

**विषयेन्द्रियसम्बन्धो व्यापारः सोऽपि षड्विधः ।**
**द्रव्यग्रहस्तु संयोगात् संयुक्तसमवायत ॥**
**द्रव्येषु समवेताना तथा तत्समवायतः ।**
**तत्राऽपि समवेताना शब्दस्य समवायत ॥**
**तद्वृत्तीनां समवेतसमवायेन तु ग्रह ।**
**प्रत्यक्ष समवायस्य विशेषणतया भवेत् ॥**
**विशेषणतया तद्वदभावाना ग्रहो भवेत् ।**
**यदि स्यादुपलभ्येतेत्येवं यत्र प्रसज्यते ॥**[1]

**स्मृति**—अनुभवजन्य यज्ज्ञान तत्स्मृतिरित्युच्यते । यथा—सोऽय चैत्रो यमह प्रयागेऽद्राक्षमित्यत्र प्रयागे प्रागनुभूतस्यैव (=दृष्टस्यैव) कालान्तरे पुनस्तस्य चैत्रस्य प्रत्यक्षे सञ्जाते सत्ययमनुभवजन्यसरकारस्योद्रेको भवति । तेनैतेन स्मृतिरुत्पद्यते । स्मृतेर्यत्र विषयो भवति तत्र **तत्ताया** बुद्धि प्रवर्त्तते, यया **तत्तया** अनुभूतस्य विषयस्य ग्रहण भवति । यथाह विश्वनाथ —

**विभुर्बुद्ध्यादिगुणवान् बुद्धिस्तु द्विविधा मता ।**
**अनुभूतिः स्मृतिश्च स्यादनुभूतिश्चतुर्विधा ॥**

भा० परि० ५१ इति ।

अपि च—**तत्र हि पूर्वानुभव कारणम्** ।

न्या० सि० मु० भा० परि० ५१ इति ।

अत्र—तत्र (=स्मृतौ) इति बोध्यम् ।

किञ्च—योगिनामात्मनि प्रणिधानादिसन्निधानादपि स्मृतिर्भवति । यथा ब्रूते कणाद —**आत्ममनसोः सयोगविशेषात्संस्काराच्च स्मृतिः** (वै० सू० ९।२।६) इति । अपि च—**संयोगविशेष प्रणिधानादिसन्निधानम् । एतस्मादपि समवायि-कारणादात्मनि समवायिनि स्मृतिर्विद्याविशेष उत्पद्यते ।** (उप० ९।२।६) इति ।

**अनुमानं प्रमाणम्**—

एकत्र सहचरितयोर्द्वयोर्व्याप्यव्यापकयोर्मध्ये व्याप्य दृष्ट्वा व्यापकस्याऽन्यत्र

---

१. द्र० तर्कभाषा, भा० परि० ५९-६२ इति च ।

(=अज्ञातसहचरितस्थले) येन यज्ज्ञान भवति, एतस्य ज्ञानस्य यत्करणम्, तदेव व्याप्तिज्ञानम् (=वह्निव्याप्योऽय धूम इत्येवरूपम्), तदनन्तर वह्निव्याप्यधूमवानयमिति व्यापारो जायते । अमुमेव परामर्शमाचष्टे[1] । परामर्शानन्तर पर्वतो वह्निमानिति निश्चीयते । एतदेवाऽनुमान प्रमाणमित्युच्यते । यथा—धूम दृष्टवा वह्नेरनुमानम् । अत्र यदा कश्चन पुरुष परिभ्रमन्नटव्या धूम पश्यति, तदा स वह्निधूमयोर्व्याप्ति स्मरति—यत्र यत्र धूम , तत्र तत्र वह्निरिति, यथा—महानसादौ । तथा च यतो धूमो महानसादौ वह्निसहचरितो भवति, यतश्चाऽय पिण्डादौ वह्ने सत्त्वेऽपि धूमो न तत्रोपलभ्यते । अतो धूमो व्याप्य , वह्निस्तस्य व्यापकोऽधिकदेशवृत्तित्वात् । एतेन वह्निव्याप्यधूमवानयमिति परामर्श उदेति । एतदनन्तर पर्वतो वह्निमान् धूमात्, महानसवदित्यनुमितिर्भवति । अत्र धूमेन हेतुना=लिङ्गेन । पर्वते=पक्षे । साध्य = वह्नि । साध्यते=निश्चीयते । इदञ्च ज्ञान लैङ्गिकमित्युच्यते । यतो हि लीनमर्थ गमयतीति लिङ्गम्, तस्माज्जात लैङ्गिकमिति व्युत्पत्तिर्भवति । अत एव प्रशस्तपादाचार्योऽपि ब्रवीति—**लिङ्गदर्शनात् सञ्जायमानं लैङ्गिकम्** (प्र० पा० भा० पृ० ४७६) इति ।

किञ्च—कार्य्येण कारणस्याऽनुमान भवति । यथा—धूमादालोकाद्वा वह्नेरनुमानम् । कारणेन कार्य्यस्याऽनुमानम् । यथा—बधिरो भेरीदण्डसयोगविशेषाच्छब्दस्याऽनुमान करोति । सयोगिन शरीरस्य दर्शनात्त्वगिन्द्रियस्याऽनुमान भवति । विरोधिनो विस्फूर्जतोऽहेर्दर्शनाज्झाटाद्यन्तरित नकुलमनुमिनोति । एव समवायिना जलौष्ण्येन तत्सम्बद्धतेजोऽनुमिनोति । अमुमेव कणादो ब्रूते—**अस्येद कार्यं कारणं संयोगि विरोधि समवायि चेति लैङ्गिकम्** (वै० सू० ९।२।१) इति ।

**अनुमितेर्भेदः—**

अनुमान द्विविधम्, स्वार्थपरार्थभेदात्[2] । अत्र स्वार्थम्—स्वसम्प्रत्ययस्य यत्कारण भवति तत्स्वार्थमनुमानम् । परार्थञ्च—अन्यस्याऽपि अवबोधस्य यत्कारण भवति तत्परार्थमनुमानम् । अनयो पार्थक्यमित्थ भवति । प्रथम तावत् **स्वार्थमनुमानम्**—यदा प्रमाता महानसादौ धूमवह्न्यो साहचर्यं दृष्ट्वाऽनयोर्व्याप्ति गृहीत्वा कदाचित् पर्वतसमीपमगच्छत् । स पाकार्थं धूम्रपानार्थं वा वह्निमन्वेषमाण पर्वतवर्त्तिनीमविच्छिन्नमूलामभ्रलिहा धूमलेखा दृष्ट्वा वह्नि सन्देग्धि । ततश्च धूमदर्शनादुद्बुद्धसस्कारो धूमवह्न्योर्या व्याप्तिर्गृहीता

---

१. व्यापारस्तु परामर्श करण व्याप्तिधीर्भवेत् । भा० परि० ६६

२ अनुमान द्विविधम्, स्वार्थं परार्थञ्च, उप० ९।२।१ वै० सू० इति ।

आसीत् ता स्मरति— **यत्र धूमस्तत्र वह्नि** । अस्मिन् पर्वतेऽपि धूमो **दृश्यते** तस्मादत्र वह्निरस्तीति स्वयमेव प्रमाता निश्चिनोति ।

**परार्थमनुमानम्**—स एव प्रमाता यो वह्निधूमयोर्व्याप्ति गृहीत्वाऽन्यमुपदिशति । स उपदेशाय पञ्चावयवात्मक किञ्चिदनुमानवाक्य[1] प्रयुङ्क्ते चेत्तदा परार्थानुमान भवति । तद्यथा—पर्वतो वह्निमानिति प्रतिज्ञा, धूमादिति हेतु, यो यो धूमवान् स स वह्निमान् यथा—महानसमित्युदाहरणम्, तथा चाऽयमित्युपनय, तस्मात्तथेति निगमनम् । एतेन पञ्चाऽवयववाक्येन प्रतिज्ञादिमता प्रमात्रा प्रतिपादितात् पञ्चरूपोपपन्नात् लिङ्गादन्योऽपि जन पक्षे (=सन्दिग्धसाध्यवति) वह्नि निश्चिनोति । तेनैतत्परार्थाऽनुमानम्[2] ।

**अनुमितेः करणम्**—

१—**व्याप्तिः**—**पर्वतो वह्निमान् धूमादित्यत्र** साध्यो वह्नि, हेतुर्धूम, साध्यवान् महानसादि, साध्यवदन्य जलह्रदादि, अत्र वृत्तित्वं मीनशैवालादीनाम्, अवृत्तित्व धूमस्य । धूमवान् वह्नेरित्यादौ साध्यो धूम, साध्यवान् महानसादि, साध्यवदन्यस्तप्तायःपिण्ड, अत्र वह्नेर्वृत्तित्वमेवाऽस्ति, नत्ववृत्तित्वम् । अतो नास्त्यतिव्याप्ति । एतेन यत्र यत्र धूमस्तत्र तत्र वह्निरिति **व्याप्तिः** सिध्यति । यथा ब्रूते विश्वनाथः—

**व्याप्तिः साध्यवदन्यस्मिन्नसम्बन्ध उदाहृतः** (भा० परि० ६८ ख) इति ।

परन्तु व्याप्तिरिय न समीचीना । यतो हि **इदमभिधेयं प्रमेयत्वादित्यादौ** साध्यम्=अभिधेयम्, साध्यवदिदपदबोध्यमखिलञ्जगत् । अतोऽन्यस्याऽप्रसिद्धत्वाद् व्याप्तेर्लक्षणस्याऽगमनादव्याप्ति । किञ्च **सत्तावान् जातेरित्यत्र** साध्या—सत्ता, साध्यवद्—द्रव्यगुणकर्म, साध्यवदन्य—सामान्यविशेषसमवायाऽभावा, अत्र हेतुतावच्छेदक. सम्बन्ध समवाय, एतेन सम्बन्धेन सामान्यादौ न कोऽपि व्यवतिष्ठते । अतो हेतुताऽवच्छेदकसम्बन्धस्याऽप्रसिद्धत्वादप्यव्याप्ति. । **तथा च** पूर्वोक्ताया व्याप्तेर्लक्षणस्य दोषग्रस्तत्वाल्लक्षणान्तरमवतारयति । तथाहि—**पर्वतो वह्निवान् धूमादित्यत्र** हेतुर्धूम, हेतुमान् पर्वत, अस्मिन् हेतुमति पर्वते वह्निर्नास्तीत्याकारकोऽभावो धर्तु न शक्यते, वह्नेश्चात्र सत्त्वात् । अतोऽत्र घटो नास्ति, पटो नास्तीत्याकारक एवाऽभावो ग्रहीतु शक्यते । अस्य प्रतियोगी घट पटश्च भवति । अप्रतियोगी वह्निरस्ति । एतेनाऽप्रतियोगिना साध्येन (=वह्निना), हेतो (=धूमस्य), पक्षे (=पर्वते), ऐकाधिकरण्यम् (=सा-

---

१. तानि च वाक्यानि प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि ।

उप० वै० सू० ९।२।२

२. द्र० तर्कभाषा ।

मानाधिकरण्यम्) अस्ति। एतेन वह्निधूमयो साध्यहेत्वोस्साहचर्य्यनियमो व्याप्ति-रस्तीति। यथा ब्रूते विश्वनाथ —

**अथवा हेतुमन्निष्ठविरहाऽप्रतियोगिना।**
**साध्येन हेतोरैकाऽधिकरण्यं व्याप्तिरुच्यते** ।। भा० परि० ६९

२—**परामर्शः**—अनुमितौ किञ्चिद्व्याप्यम्, किञ्चिद्व्यापक च भवति। यथा—पर्वतो वह्निमान् धूमादित्यत्र साध्यो वह्निः, स च व्यापक, तप्तायःपिण्डे वह्ने सत्त्वेऽपि धूमस्याऽसत्त्वात्। एतेन वह्नेरपेक्षया धूमस्य न्यूनदेशवृत्तिता सिद्धा भवतीति गम्यते। अतो धूमो व्याप्य, वह्निश्च व्यापक। व्याप्यो धूमःपक्षे (=साध्यस्य सन्दिग्धस्थले) अस्तीत्याकारको यो हि निश्चय स एव परामर्शाख्यो व्यापार इत्युच्यते। तथा च धूमो वह्निव्याप्यो वह्निव्याप्य-धूमवानय पर्वतश्चेति क्रमशो व्याप्तेःपरामर्शस्य च स्वरूपमस्ति। यथाह विश्वनाथ —

**व्याप्यस्य पक्षवृत्तित्वधी परामर्श उच्यते**। भा० परि० ६८ क

३—**पक्षता**—अत्र का नाम पक्षता। अस्या किं स्वरूपम्? कथञ्च साऽनुमितिमुपकरोतीति विचार्य्यते। तथाहि—साध्यस्य सन्दिग्धाऽधिकरणमेव पक्षो भवति, अत्र साध्यस्य हेतोर्वा या स्थिति (=वृत्ति), अस्या स्थिते (=वृत्ते) यो हि सम्प्रत्यय स एव **पक्षता** इत्युच्यते। अत्र पक्षता, पक्षधर्मता, पक्षवृत्तिता पक्षवृत्तित्वञ्चेत्यनर्थान्तरम्। तथा च द्वे पक्षते स्त। तत्रैका साध्यस्य पक्षता, अपरा हेतोःपक्षता चेति। अत्र साध्यस्य या पक्षता सा हेतो पक्षतया निश्चीयते। यतो हि पक्षे हेतो सत्त्वादेव पक्षे साध्यस्य विद्यमानताया निष्पत्ति-र्भवति।

सिद्धिर्हि अनुमिति प्रतिरुन्द्धे। सिद्धिश्च साध्यवत्ताज्ञानम्। यथा—पक्ष साध्यवानिति निश्चयः। परन्तु **पर्वतो वह्निमानिति** सिद्धे सत्त्वेऽपि **पर्वते वह्नि-विषयकाऽनुमितिर्मे स्यादि**त्याकारिका या इच्छा, तयाऽप्यनुमितिर्भवत्येव। यद्यप्यत्र साध्यवत्ताज्ञानमनुमितिज्ञानस्य प्रतिबन्धकमस्ति, तथापि सिषाधयिषा उत्ते-जिकाऽस्ति। एषा हि सत्यामपि सिद्धावनुमिति जनयत्येव। यथा—अग्निर्दाह जनयति। परन्तु चन्द्रकान्तमणि त प्रतिबध्नाति। यतो हि चन्द्रकान्तमणि-रग्नेर्दाहशक्ति प्रतिरुन्द्धे। किन्तु सत्यपि चन्द्रकान्तमणौ प्रतिबन्धके सूर्यकान्तमणे सन्निधाने सञ्जातेऽग्निर्दाह जनयति, उत्तेजकस्य सूर्यकान्तमणे सत्त्वात्। सूर्य-कान्तमणिश्चन्द्रकान्तमणेःप्रतिबन्धिका शक्तिमभिभवति। तथा चोत्तेजकस्य सत्त्वे प्रतिबन्धकशक्तेरभिभवे च सञ्जातेऽग्निर्दहति[1]। एतेनोत्तेजकाऽभाववि-

---

१. द्र० न्या० सि० मु० भा० परि० २।

शिष्टचन्द्रकान्तमणेरभावस्य सत्त्व एवाग्नेर्दाहं प्रति कारणताऽस्ति, न तु स्वतन्त्रस्याऽग्नेर्वा। तथाऽत्र सिषाधयिषाविरहविशिष्टा या केवलसिद्धि साऽनुमितेः प्रतिबन्धिकाऽस्ति। केवलाया सिद्धेर्वा सेति। पूर्वोक्ताया द्विविधाया सिद्धेरभावो यत्र वर्त्तते तत्र पक्षताऽस्तीति निश्चीयते।

एवञ्च सिषाधयिषामात्रमपि न पक्षताऽस्ति। यतो हि सिषाधयिषा विनाऽपि घनगर्जितेन मेघस्याऽनुमान भवति। यथा—गगन मेघवद् घनगर्जनात्। अत एव साध्यसन्देहोऽपि न पक्षताऽस्ति, सन्देह विनाऽपि साध्यस्याऽनुमितिर्भवति। तथा च यत्र सिद्धिर्नास्ति तत्र सिषाधयिषाया सत्यामसत्यामपि पक्षताऽस्तीति निर्धार्यते। अस्या=पक्षताया सम्प्रत्ययस्य निश्चये सत्यनुमितिर्भवति। यथाह विश्वनाथ —

**सिषाधयिषया शून्या सिद्धिर्यत्र न विद्यते[1]।**
**स पक्षस्तत्र वृत्तित्वज्ञानादनुमितिर्भवेत् ॥**

भा० परि० ७० इति।

अत्र वृत्तित्वज्ञानात्=पक्षताया सम्प्रत्ययादित्यर्थ। अस्मादनुमितिर्भवतीति विज्ञायते। एतेनाऽनुमितेर्द्वे अङ्गे भवत। व्याप्ति=पक्षता च। अनयोर्व्याप्त्या यत्र हेतुरस्ति तत्र साध्य इति सामान्यरूपेणैव हेतोरधिकरणे साध्यस्य निश्चयो भवति। पक्षतया त्वस्मिन्नधिकरणे (=पक्षे) अय साध्य इति विशेषरूपेणैव साध्यस्य सिद्धि। पर्वते हेतो=पक्षतयैव (=पक्षवृत्तित्वेनैव) पर्वते साध्यस्य (=अग्ने) पक्षताया (=पक्षवृत्तिताया) एवाऽनुमितिर्जायते। एव न स्याच्चेदनुमिते सार्थक्यमेवाऽनुपपद्येत, हेतोरधिकरणे साध्यस्य सामान्यरूपेणैव सिद्धिस्तु व्याप्तिज्ञानादेव सम्पन्नत्वादित्यवगम्यते।

पक्षताया=कुक्षौ पक्षस्य प्रवेशात् पक्षस्तावद्विचार्य्यते—

४—**पक्ष** —यस्मिन् धर्मिणि साध्यात्मको धर्म सन्दिग्धो भवति स धर्मी पक्ष इत्युच्यते। यथा—पर्वते (=धर्मिणि) धूमेन (=लिङ्गेन, हेतुना) अग्नेरनुमितौ स पर्वत (=धर्मी) पक्षो भवति। यतो हि अनुमिते=प्राक् पर्वतेऽग्ने स्थिति सन्दिग्धा भवति। यथोक्तम्—**सन्दिग्धसाध्यधर्मा धर्मी पक्षः, यथा धूमानुमाने पर्वत=पक्षः** (तर्कभाषा) इति[2]।

५—**सपक्षः**—यस्मिन् धर्मिणि साध्यात्मकधर्मस्य निश्चयोऽस्ति, स धर्मी सपक्षो भवति। यथा—महानसम्। यतो ह्य[3]नुमिते=प्रागेव पौन=पुन्येन

---

१ तिष्ठतीति पाठान्तरम्

२ सन्दिग्धसाध्यवान् पक्ष। न्या० सि० मु० भा० परि० ७३

३ निश्चितसाध्यवान् सपक्ष.। न्या० सि० मु० भा० परि ७३

महानसे धर्मिणि साध्यस्याऽग्नेर्धूमस्य च साहचर्यादस्ति निश्चयोऽग्ने । यथोक्तम्–**सपक्षस्तु निश्चितसाध्यधर्मा धर्मी, यथा—महानसम्, धूमानुमाने** (तर्कभाषा इति ।

६—**विपक्षः**—यस्मिन् धर्मिणि साध्याभावस्य निश्चयो भवति, स धर्मी विपक्षोऽस्ति । यथा—जलह्लद । यतो ह्यस्मिन् धर्मिणि साध्यस्याऽग्नेरभावो निश्चित एवाऽस्ति । यथोक्तम्—**विपक्षस्तु निश्चितसाध्याऽभाववान् धर्मी, यथा—तत्रैव महाजलह्लदः**[1] (तर्कभाषा) इति ।

**अथाऽनुमितेऽप्रतिबन्धकानां हेतूनामुपन्यासः**—

अनुमितेऽप्रतिबन्धको यो हि हेतु स हेत्वाभास इत्युच्यते । अस्य द्वे व्युत्पत्ती भवत । अनयोरेका आभासत इत्याभास , हेतोराभास हेत्वाभास इति । अपरा च हेतुवदाभासत इति हेत्वाभास इति । अत्र प्रथमव्युत्पत्त्या हेत्वाभासस्य हेतुवृत्तिर्दोषो ह्यर्थ , अपरया च व्युत्पत्त्या हेत्वाभासस्य दुष्टहेतु (=असद्धेतु ), इत्यर्थ , हेतोरसत्त्वादपि हेतोरिव प्रतीयमानत्वात् ।

यो हि साक्षादनुमितिमाहोस्विदनुमितेर्लिङ्गपरामर्श प्रतिरुन्द्धे, स हेत्वाभासो हेतुवृत्तिदोष ब्रूते । अस्य पञ्चधा भेदोऽस्ति, स चाऽनैकान्तो विरुद्धोऽसिद्ध प्रकरणसमत्व कालात्ययापदिष्टत्वञ्चेति । अत्र प्रकरणसमत्वम् (=सत्प्रतिपक्ष ) कालात्ययापदिष्टत्वम् (=बाध ) इति च साक्षादनुमितिं प्रतिरुन्द्धे, अनैकान्तो विरुद्धोऽसिद्धश्चाऽनुमितेर्लिङ्गपरामर्शञ्च ।

यस्यामनुमितावुपरिनिर्दिष्टा दोषा लभ्येरन्, तस्यामनुमितावपि प्रयुज्यमानास्ते दोषा हेत्वाभासा (=दुष्टहेतव ) भवन्ति, हेतुवदाभासमानत्वात् । एते च कति सन्तीति चिन्तायां ब्रूते—अनैकान्तो विरुद्धोऽसिद्धऽप्रकरणसमत्व कालात्ययापदिष्टत्वञ्चेति । एतेष्वपि पूर्ववत् प्रकरणसमत्वम्, कालात्ययापदिष्टत्वञ्च साक्षादनुमिति प्रतिरुणद्धि, एवमनैकान्तो विरुद्धोऽसिद्धश्चेत्यनुमितेर्लिङ्गपरामर्शञ्च । एतेन हेत्वाभासस्य पञ्चधा भेदोऽस्तीति गम्यते । आह च विश्वनाथ —

**अनैकान्तो विरुद्धश्चाऽप्यसिद्धऽप्रतिपक्षितः ।**
**कालाऽत्ययापदिष्टश्च हेत्वाभासास्तु पञ्चधा ॥**

भा० परि० ६१ इति ।

क्रमशो हेत्वाभासान् विभजते १—**अनैकान्त** —यस्मिन् हेतौ साध्यस्य व्यभिचारो दृश्यते, अर्थाद्यो हि हेतुर्नियमेन साध्यस्याऽधिकरणे न तिष्ठति, किन्तु कस्यचित्साध्यस्याऽभावाऽधिकरणेऽपि, सोऽनैकान्तिको भवति, हेतोर्व्यभिचरितत्वात् । यथाह केशवमिश्र —**सव्यभिचारोऽनैकान्तिक** इति । **अस्य त्रयो भेदा**

---

१ साध्याऽभाववान् विपक्ष , न्या० सि० मु० भा० परि० ७३

सन्ति । के च ते ? साधारणोऽसाधारणोऽनुपसहारी चेति[1] । एतेषा क्रमशो विवेचना प्रस्तूयते । तथाहि—

१—**साधारण** —यस्या अनुमितेर्हेतुर्विपक्षे तिष्ठति स साधारण । अथवा पक्षसपक्षवृत्तित्वे सति विपक्षवृत्तिर्यो हेतु स इति । यथा—**पर्वतो धूमवान् वह्ने**रित्यत्र साध्यो धूम, हेतुर्वह्नि । अत्र यो हि वह्निर्हेतु, स साध्यस्याऽभावाऽधिकरणे तप्तायःपिण्डे, यस्मिन्निश्चितसाध्याऽभाववति विपक्षेऽपि तिष्ठति, यो हि साध्यत्वेन गृहीतो धूम, स नेति । एव **शब्दो नित्यः प्रमेयत्वा**दित्यत्र नित्यत्व साध्यम्, प्रमेयत्वञ्च हेतु । इद प्रमेयत्व हेतु=साध्यस्याऽभावाऽधिकरणे घटपटादावपि (=विपक्षेऽपि) तिष्ठति, सन्दिग्धसाध्यवति पक्षे (=शब्दे), निश्चितसाध्यवति सपक्षेऽपि (=आकाशकालादावपि) । एतदेवाऽभिप्रेत्याऽऽहतुर्विश्वनाथकेशवमिश्रौ—**साधारणः साध्यवदन्यवृत्तिर्हेतुः** (न्या० सि० मु० भा० परि० ७२) इति । अपि च—**तत्र पक्षसपक्षविपक्षवृत्तिः साधारणः । यथा—शब्दो नित्यः प्रमेयत्वाद् व्योमवत् । अत्र प्रमेयत्व हेतुस्तच्च नित्याऽनित्यवृत्ति** (तर्कभाषा) इति ।

अय हि साधारणो व्याप्तेर्यज्ज्ञान तत् प्रतिरुन्द्धे । यतो हि साध्यहेत्वोर्यो हि साहचर्य्यनियमो व्याप्ति, स **धूमवान् वह्ने**रित्यत्र न सम्भवति, तप्तायःपिण्डे साध्यस्याऽसत्त्वेऽपि वह्ने सत्त्वात् । तथा च यथा—**वह्निमान् धूमादि**त्यत्र साहचर्यनियमो व्याप्ति, अस्या व्याप्त्यामनुकूलस्तर्को **धूमो यदि वह्निव्यभिचारी स्यात्तर्हि वह्निजन्यो न स्यात्त**थाऽत्र तर्को **धूमवान् वह्ने**रित्यत्र दातु न शक्यते वह्नेर्धूमाऽजन्यत्वात्, व्यभिचरितत्वाच्च । इदमेवाऽभिप्रेत्य विश्वनाथ सङ्गिरते—**तेन च व्याप्तिग्रहस्य प्रतिबन्धः क्रियते** (न्या० सि० मु० भा० परि० ७२) इति । अत्र तेन=साधारणेन, व्याप्तिग्रह =व्याप्तेर्ज्ञानमिति । अस्य प्रतिबन्ध =निरोध इति ।

२—**असाधारण** ---यस्या अनुमितेर्यो हि हेतुत्वेन गृहीतो भवति स साध्यस्य यदधिकरणम्, तस्मिन्नधिकरणे न तिष्ठतीति चेत् स हेतुरसाधारणो भवतीति केचिदाचक्षते । यथोक्त विश्वनाथेन—**असाधारणं साध्याऽसमानाधिकरणो हेतुः** (न्या० सि० मु० भा० परि० ७२) इति ।

यस्या अनुमितेर्यो हेतु, सपक्षे न तिष्ठति तमसाधारणो हेतुरित्यन्ये ब्रुवते । यथाह विश्वनाथ —**अन्ये तु सपक्षाऽवृत्तिरसाधारणः** (न्या० सि०

---

१. आद्य साधारणस्तु स्यादसाधारणकोऽपर ।
तथैवाऽनुपसहारी त्रिधाऽनैकान्तिको भवेत् ॥ भा० परि० ७२

**सपक्षाऽवृत्तिरसाधारण** इति मते तु **शब्दोऽनित्य शब्दत्वादित्यादौ** पक्षे (=शब्दे) साध्यस्य निश्चये सति नाऽस्त्यसाधारणोऽनैकान्तिको हेतु, अस्य (=शब्दत्वस्य) पक्षे (=शब्दे) निश्चितत्वादिति । यथा सङ्गिरते विश्वनाथ - **अन्ये तु सपक्षाऽवृत्तिरसाधारण. सपक्षश्च निश्चितसाध्यवान् । इत्थञ्च शब्दोऽनित्य शब्दत्वादित्यत्र यदा पक्षे साध्यनिश्चयस्तदा नाऽसाधारण्यम्, तत्र हेतुनिश्चयादिति वदन्ति** (न्या० सि० मु० भा० परि० ७२) इति ।

अस्मिन् मते प्रतिज्ञाहानि (=वदतोव्याघात) दोषोऽस्त्येव । यतो हि पक्षे (=शब्दे) साध्यस्य निश्चये अनित्यत्वस्य साध्यहेत्वो सामानाऽधिकरण्येऽपि सपक्षे (=घटपटादौ) साध्यस्य (=अनित्यत्वस्य सत्त्वादपि शब्दत्वस्याऽसत्त्वादस्त्येवाऽसामानाऽधिकरण्यम् । अतोऽत्राऽस्त्येवाऽसाधारणोऽनैकान्तिक इति । अत=**पक्षमात्रवृत्तिर्हेतुरसाधारणोऽनैकान्तिक** इति मे मति ।

अथ ह्यसाधारण साध्यसामानाधिकरण्यस्य यज् ज्ञानम्, तत् प्रतिरुन्द्धे यतो हि पूर्वप्रदर्शितायामनुमितौ (=शब्दो नित्य शब्दत्वादित्यत्र, भूर्नित्या गन्धवत्त्वादित्यत्र च साध्य हि नित्यत्वम्, अस्य यदधिकरणमाकाशादि, अस्मिन्नाकाशादौ (=सपक्षे) साध्यस्य (=नित्यत्वस्य) वृत्तित्वेऽपि शब्दत्वस्य गन्धवत्त्वस्य हेतोश्चाऽवृत्तित्वात् सामानाधिकरण्य न सम्भवति, साध्यहेत्वोभिन्नाधिकरणत्वादिति । तथा च साध्यसमानाऽधिकरणो हेतुर्व्याप्तिरिति न सङ्गच्छते । एवमेव शब्दोऽनित्य शब्दत्वादित्यत्र साध्यम् (=अनित्यत्वम्) अस्याऽधिकरणम् (=घटपटादि) । अत्र (=सपक्षे) साध्यस्य=अनित्यत्वस्य सत्त्वेऽपि शब्दत्वस्य (=हेतो) असत्त्वादस्त्येवाऽसाधारणोऽनैकान्तिक इति । अमुमेव ब्रूते विश्वनाथ —**तेन साध्यसामानाधिकरण्यग्रहः प्रतिबध्यते** (न्या० सि०मु०भा०परि० ७२) अत्र तेन । असाधारणेनेति, साध्यसामानाधिकरण्यस्य ग्रह =ज्ञानमिति ।

३ —**अनुपसंहारी**—यस्या अनुमिते शरीरे यो हि पक्षत्वेन गृहीतो भवति, तस्मिन् पक्षे य साध्यस्योपसहारम् (=समर्पणम्) न करोति सोऽनुपसहारी हेतुरित्युच्यते । यथा—**सर्वमनित्यं प्रमेयत्वादित्य**त्राऽनित्यत्व साध्यम्, **प्रमेयत्व** हेतु, सर्वम् (=विश्वम्) इति च पक्ष । अस्मिन् पक्षेऽनित्यत्वस्य साध्यस्य प्रमेयत्व हेतुरुपसहारम् (=समर्पणम्) न करोति । यतो हि सर्वस्य पक्षत्वे सञ्जाते सर्वत्रैव साध्यस्य सन्देहोऽस्ति, पक्षस्य सन्दिग्धसाध्यवत्त्वात् । नहि किञ्चिदेतादृश स्थलमस्ति यत्राऽनित्यत्वस्य सन्देहो नाऽस्ति, किन्तु सर्वत्रैव साध्यस्य =अनित्यत्वस्य सन्देहोऽस्ति, सर्वस्य पक्षत्वात् । अत उपरि निर्दिष्टाया अनुमिते शरीरेऽनित्यत्व नास्तीत्याकारकोऽभावो धर्तुं न शक्यते, किन्तु घटो नाऽस्ति पटो नाऽस्तीत्याकारक एव, अस्याऽभावस्य प्रतियोगी घट=पटश्च, अप्रतियोगि चाऽनित्यत्व भवति । अत्र ब्रूते विश्वनाथः—**अनुपसंहारी चात्यन्ताभावाऽप्रतियोगिसाध्यकादि.** (न्या०सि०मु०भा०परि०७२) इति ।

अय ह्यनुपसहारी व्यतिरेकव्याप्तेर्यज् ज्ञानम्, तत् प्रतिरुन्द्धे। यथाह— **अनेन च व्यतिरेकव्याप्तिज्ञानप्रतिबन्धः क्रियते** (न्या० सि० मु० भा० परि ७२) इति। अत्राऽनेन=अनुपसहारिणेत्यर्थ।

२—**विरुद्ध** —यस्या अनुमिते शरीरे साध्यस्य निष्पत्तये हेतुत्वेन यो ह्युपादीयते, स (=हेतु) साध्यस्य व्याप्यो न भवति, प्रत्युत साध्यस्य यो ह्यभावस्तस्य व्याप्य। तथा चाऽस्य हेतु साध्यस्य निष्पत्तावसमर्थो भवति, साध्याऽभावस्य सिद्धौ तु समर्थ। यथा—**शब्दो नित्य: कृतकत्वादात्मवदित्यत्र** साध्य नित्यत्वम्, कृतकत्वञ्च हेतु.। साध्यम् (=नित्यत्वम्) आकाशादावस्ति, अत्र कृतकत्व (=कार्यत्वम्) हेतुर्नास्ति, घटपटादौ साध्य (=नित्यत्व) नाऽस्ति, अत्र कृतकत्वम् (=कार्यत्वम्) हेतुरस्ति। यतो हि यत् कृतकत्वम् (=कार्यत्व) भवति तदनित्यमेव भवति। अतो नित्यत्वस्य (=साध्यस्य) अनुमितौ (=निष्पत्तौ) कृतकत्व हि विरुद्धो हेतुरस्तीति गम्यते। यतो हि कृतकत्व हेतुर्नित्यत्व साध्य न साधयति, प्रत्युत नित्यत्वाऽभावमनित्यत्वमेव। यथाहतुर्विश्वनाथकेशवमिश्रौ —**विरुद्धस्तु साध्यव्यापकीभूताभावप्रतियोगी** (न्या० सि० मु० भा० परि० ७२) इति। अपि च **साध्यविपर्य्ययव्याप्तो हेतुर्विरुद्धः। यथा—शब्दो नित्यः कृतकत्वादात्मवत्, कृतकत्वं हि साध्यनित्यत्वविपरीताऽनित्यत्वेन व्याप्तम्, यत्कृतक तदनित्यमेव, न नित्यमित्यतो विरुद्ध** कृतकत्वम् (तर्कभाषा) इति।

अय हि विरुद्धो हेतु **शब्दो नित्यः कृतकत्वादित्यत्र** साध्यस्य (=नित्यत्वस्य) यो ह्यभाव शब्दे (=पक्षे) साध्यम् (=नित्यत्व नास्तीत्याऽऽकारकोऽभावोऽनित्यत्वम्, अस्य ग्रह =ज्ञानञ्जनयति। तथा च साध्याभावज्ञानोत्पादकत्वेनाऽनुमिति प्रतिरुन्द्धे। यथाह विश्वनाथ —**अय साध्याभावग्रहसामग्रीत्वेन प्रतिबन्धकः** (न्या० सि० मु० भा० परि० ७२) इति।

पञ्चसुहेत्वाभासेष्वन्यतमोऽय विरुद्धोऽतीव निकृष्टो हेतुर्वर्त्तते। यतो ह्यनुमानप्रयोक्तुरज्ञता सूचयति। साध्यत्वस्य निष्पत्तय उपादीयमानो हेतु साध्य न साधयति, किन्तु साध्याभावमेव। यथाह विश्वनाथ —**सत्प्रतिपक्षे तु प्रतिहेतुः**[1] (=**द्वितीयहेतु**) **साध्याऽभावसाधकः। अत्र तु हेतुरेवेति विशेष। साध्याऽभावसाधक एव हेतु साध्यसाधकत्वेनोपन्यस्त इत्यशक्तिविशेषोपस्थापकत्वाच्च विशेषः** (न्या० सि० मु० भा० परि० ७२) इति।

३—**असिद्धः**—यस्या अनुमिते शरीरे हेतुत्वेन गृहीतो यो हि हेतुस्तस्मिन् हेतौ व्याप्तिपक्षधर्मतयोरुभयोरन्यतरो वा निश्चितो न भवति सोऽसिद्धो हेतुरित्युच्यते। अस्य त्रिधा भेद, आश्रयाऽसिद्ध, स्वरूपाऽसिद्ध, व्याप्यत्वाऽसिद्धश्चेति। क्रमश एतेषा व्याख्या प्रस्तूयते। तथाहि—१—**आश्रयासिद्ध** —

---

१. शब्दो नित्य. कृतकत्वादात्मवत्, शब्दोऽनित्य कार्य्यत्वाद् घटवत्।

यस्यामनुमितावाश्रयत्वेन यो गृहीतो भवति स यदि निश्चितो न स्यात्तर्हि स आश्रय (=पक्ष) आश्रयाऽसिद्ध (=पक्षाऽसिद्ध) इति भवति। यथा-**काञ्चनमयः पर्वतो वह्निमानित्यत्र** काञ्चनमयः पर्वत आश्रयत्वेन गृहीतो वर्त्तते, किन्तु पक्षोऽयमाश्रयत्वेन निश्चितो न भवति, **पर्वतो न काञ्चनमय** इति ज्ञानेनैतादृश आश्रयस्य (=पक्षस्य) प्रतिषिद्धत्वात्। एव **गगनाऽरविन्दं सुरभि, अरविन्दत्वात्, सरोजारविन्दवदित्यत्र** गगनाऽरविन्दमाश्रय, असौ चाऽऽश्रय इह जगति न दृश्यते। अतो नाऽस्त्येव स इति कल्प्यते।

उपरि प्रदर्शितायामनुमितौ काञ्चनमयः पर्वत, गगनाऽरविन्दञ्च पक्ष। अनयोः पक्षयोः काञ्चनमयः, गगनञ्च पक्षताया अवच्छेदक (=विशेषणम्) अवच्छेद्यस्य (=विशेष्यस्य) पर्वतस्य अरविन्दस्य च सत्त्वेऽपि, अवच्छेदकस्य (=विशेषणस्य) असत्त्वाद्विशेषणाऽभावप्रयुक्तो विशिष्टाऽभाव इति रीत्या निश्चीयते। एतेन काञ्चनमये पर्वते, गगनारविन्दे च साध्यहेत्वो पक्षधर्मताया (=पक्षवृत्तिताया) अर्थात् पक्षे साध्यस्य हेतोश्च सत्ताया सिद्धिर्न भवति। यतो ह्याश्रयस्य निश्चये सञ्जात एवाऽत्र कस्यचिदाधेयस्य वृत्तित्व सिध्येदिदानी नत्वायस्य निश्चयो नाऽस्तीत्यनुभव सिद्ध एवेति गम्यते। यथाहतुर्विश्वनाथकेशवमिश्रौ—**आश्रयाऽसिद्धिः पक्षे पक्षतावच्छेदकस्याऽभावः। यत्र च काञ्चनमयः पर्वतो वह्निमानित्यत्र पर्वतो न काञ्चनमय इति ज्ञाने विद्यमाने काञ्चनमये पर्वते परामर्शप्रतिबन्धः फलम्** (न्या० सि० मु० भा० परि० ७२) इति। अपि च **तत्र लिङ्गत्वेनाऽनिश्चितो हेतुरसिद्धः। तत्राऽसिद्धस्त्रिविध—आश्रयाऽसिद्धः, स्वरूपाऽसिद्धो व्याप्यत्वाऽसिद्धश्चेति। आश्रयाऽसिद्धो यथा—गगनाऽरविन्दं सुरभि, अरविन्दत्वात्। अत्र गगनारविन्दमाश्रयः, स च नाऽस्त्येव** (तर्कभाषा) इति।

२—**स्वरूपासिद्ध**—यस्या अनुमिते शरीरे व्याप्यत्वेनोपात्तो यो हि हेतु. स स्वस्वरूपेण पक्षे न तिष्ठेत्तर्हि व्याप्यत्वेनाऽभिमतस्य हेतो स्वरूपाऽसिद्धिर्भवति। यथा—**ह्रदो द्रव्य धूमादित्य**नुमितौ पक्षो ह्रद, साध्य द्रव्यम्, धूमो हेतु। व्याप्यत्वेन गृहीतोऽय धूमो हेतुर्ह्रदे न तिष्ठति। एव **शब्दोऽनित्यश्चाक्षुषत्वादित्यत्राऽपि** शब्दः पक्ष, अनित्यत्व साध्यम्, चाक्षुषत्व हेतु। इद हि चाक्षुषत्व हेतुर्व्याप्यत्वेनाऽभिमतोऽस्ति, स च शब्दे (=पक्षे) नैव व्यवतिष्ठते। यतो हि शब्दस्य श्रावणत्वमेव, न तु चाक्षुषत्वम्। चाक्षुष हि रूप भवति, न तु शब्द, अय हि श्रावण। तथा च द्रव्यव्याप्यधूमवान् ह्रद, अनित्यत्वव्याप्यचाक्षुषत्ववाञ्शब्द इत्याकारकपरामर्शो भवितु नाऽर्हति। यथाहतुर्विश्वनाथकेशवमिश्रौ—**स्वरूपाऽसिद्धस्तु पक्षे व्याप्यत्वाऽभिमतस्य हेतोरभावः। अत्र च ह्रदो द्रव्य धूमादित्यादौ पक्षे व्याप्याऽभिमतस्य हेतोरभावे ज्ञाते पक्षे साध्यव्याप्यहेतुमत्ताज्ञानरूपस्य**

**परामर्शस्य प्रतिबन्धः फलम्** (न्या० सि० मु० भा० परि० ७२) इति । अपि च **स्वरूपाऽसिद्धो यथा—शब्दोऽनित्यश्चाक्षुषत्वाद् घटवद् । अत्र चाक्षुषत्व हेतु, स च शब्दे नास्त्येव, तस्य श्रावणत्वात्** (तर्कभाषा) इति ।

३—**व्याप्यत्वाऽसिद्ध**—यस्या अनुमिते शरीरे साध्यत्वेन हेतुत्वेन वा यो हि गृहीतो भवति तस्मिन् साध्ये हेतौ वा व्याप्ते सिद्धिर्न स्याच्चेत् स साध्यो हेतुर्वा व्याप्यत्वाऽसिद्ध इत्युच्यते । अस्य द्वौ भेदौ भवत । व्याप्तिग्राहकप्रमाणाऽभावात् । उपाधिसद्भावाच्च । क्रमशो विवेचना प्रस्तूयते ।

१—**व्याप्तिग्राहकप्रमाणाऽभावात् इति तावद् विचार्यते**—शब्द क्षणिक सत्त्वात् । अत्र शब्द=पक्ष, क्षणिकत्व साध्यम्, सत्त्व हेतु । अत्र सत्त्वक्षणिकवयोर्व्याप्तिर्न सिध्यति ।यतो हि सत्त्वक्षणिकत्वयोर्व्याप्तेर्ग्राहक किञ्चित्प्रमाण नोपलभ्यते । अतो व्याप्तिग्राहकप्रमाणग्याऽसत्त्वात् पक्षे क्षणिकत्वस्य (=साध्यस्य) सत्त्वेन ( =हेतुना) निष्पत्तिर्न भवति । यथाह केशवमिश्र —**व्याप्यत्वाऽसिद्धस्तु द्विविध.। एको व्याप्तिग्राहकप्रमाणाऽभावात्, अपरस्तूपाधिसद्भावाद्। तत्र प्रथमो यथा—शब्द क्षणिक. सत्त्वात् । यत् सत् तत् क्षणिक यथा जलधरपटलम्, तथा च शब्दादिरिति । न च सत्त्वक्षणिकत्वयोर्व्याप्तिग्राहक प्रमाणमस्ति** (तर्कभाषा) इति ।

न चोपरि प्रदर्शितायामनुमितौ सत्त्वस्य (=हेतो) सोपाधिकत्वमस्ति । येन पक्षे क्षणिकत्व न साधयति सत्त्वमिति हेतु । पक्षे क्षणिकत्वस्य निष्पत्तिस्तु —शब्द क्षणिक=कण्ठताल्वादिनाऽभिघातेनोत्पत्तिमत्त्वात् । अत्रोत्पत्तिवचनेन (=हेतुना) पक्षे (=शब्दे) क्षणिकत्वस्य (=अनित्यत्वस्य साध्यस्य) सिद्धिर्भवति । अत्र सत्त्वक्षणिकत्वयोर्व्याप्तौ प्रमाण नास्तीत्यत्र तात्पर्यम् । एवमेवाह केशवमिश्रः—**सोपाधिकतया सत्त्वस्य व्याप्यत्वाऽसिद्धावुच्यमानाया क्षणिकत्वमन्यप्रयुक्तमित्यभ्युपगत स्यात्** (तर्कभाषा) इति ।

२—**उपाधिसद्भावात् इति च चिन्त्यते—क्रत्वन्तर्वर्त्तिनी हिंसाऽधर्मसाधनम्, हिंसात्वात्, क्रतुबाह्यहिंसावदित्यनुमितौ** क्रत्वन्तर्वर्त्तिनी हिसा पक्ष, अधर्मसाधनत्व साध्यम्, हिंसात्व हेतु, क्रतुबाह्यहिंसावदिति दृष्टान्त । यत्र यत्र हिसात्व तत्र तत्राऽधर्मसाधनत्वमिति **मा हिंस्यात् सर्वा भूतानीति** निषेधविधेरध्यवसीयते। परन्त्विय व्याप्तिर्न सङ्गच्छते, **अग्नीषोमीय पशुमालभेतेति**विधे=क्रत्वन्तर्वर्त्तिनी हिसा हिसा न भवतीति निश्चीयते । एतेन क्रत्वन्तर्वर्त्तिनी हिसाऽधर्म न **प्रसूते, प्रत्युत धर्ममेवेति** गम्यते । तथा चाऽधर्मसाधनत्वे हिसात्वस्य कारणत्व(=प्रयोजकत्वम्) नाऽस्ति, किन्तु तत्र निषिद्धत्वस्यैवाऽस्ति । निषिद्धत्वञ्चाऽत्रोपाधिरस्ति । यतो हि यत्र यत्राऽधर्मसाधनत्वम्, तत्र तत्र निषिद्धत्वमवश्यमेव तिष्ठति । एतेन निषिद्धत्व साध्यस्याऽधर्मसाधनत्वस्य व्यापकत्वमस्तीति निश्चीयत उक्तव्याप्ते । हिंसात्व

हेतुर्निषिद्धत्व न व्याप्नोति । यतो हि यत्र यत्र हिसात्व तत्र तत्र निषिद्धत्वमवश्यमेव तिष्ठेदिति नैष नियमोऽस्ति, अग्नीषोमीय पशुमालभेतेत्यत्र हिसाऽस्ति, किन्तु निषिद्धत्व नाऽस्ति । एतेन निषिद्धत्व हिंसाया अव्यापकमस्तीति सिध्यति । एवञ्च साध्यव्यापकत्वे सति साधनस्याऽव्यापकत्वमुपाधेर्लक्षण निस्सरति । अत्र ब्रूते केशवमिश्र.—**द्वितीयो यथा—क्रत्वन्तर्वर्त्तिनी हिंसाऽधर्मसाधनम्, हिंसात्वात्, क्रतुबाह्यहिंसावत् । अत्र ह्यधर्मसाधनत्वे हिंसात्वं न प्रयोजकम्, किन्तु निषिद्धत्वमेव प्रयोजकम्, उपाधिरिति यावत् । तथा हि साध्यव्यापकत्वे सति साधनाऽव्यापक उपाधिरित्युपाधिलक्षणम्, तच्चाऽस्ति निषिद्धत्वे । निषिद्धत्व हि साध्यस्याऽधर्मसाधनत्वस्य व्यापकम्, यतो यत्र यत्राऽधर्मसाधनत्व तत्र तत्राऽवश्यं निषिद्धत्वमपीति । एव साधनं हिंसात्वं न व्याप्नोति निषिद्धत्वम्, नहि यत्र यत्र हिसात्व तत्र तत्राऽवश्य निषिद्धत्वम्, ग्नीयपशुहिसाया निषिद्धत्वाऽभावात् । तदेव निषिद्धत्वस्योपाधे सद्भावादन्यप्रयुक्तव्याप्त्युपजीविहिसात्व व्याप्यत्वाऽसिद्धमेव** (तर्कभाषा) इति ।

अनयैव दिशा **स श्यामो मैत्रीतनयत्वादित्यत्र** शाकपाकजन्यत्वमुपाधि श्यामत्वे प्रयोजकम्, न तु मैत्रीतनयत्वम् मैत्र्या अष्टमगौरवर्णपुत्रे मैत्रीतनयत्वस्य सत्त्वेऽप्यत्र श्यामत्वस्याऽभाव । मैत्र्या सप्तसु श्यामपुत्रेषु मैत्रीतनयत्वस्य सत्त्वेऽपि श्यामत्वे कारणत्व शाकपाकजन्यत्वमित्यस्यैव न तु मैत्रीतनयत्वस्य, अतोत्र शाकपाकजन्यत्वमुपाधिः । तथा च यत्र यत्र श्यामत्व तत्र तत्र शाकपाकजन्यत्वमिति व्याप्तिः फलति । नहि भवति यत्र तत्र मैत्रीतनयत्व तत्र तत्र शाकपाकजन्यत्वम्, मैत्र्या अष्टमगौरवर्णपुत्रेऽसत्त्वात् । एतेन शाकपाकजन्यत्वस्य साधनाऽव्यापकत्वमपि गम्यते । अतः शाकपाकजन्यत्वमित्युपाधिरस्तीति निश्चीयते । यथा ब्रूते—केशवमिश्रः—**यत्र यत्र मैत्रीतनयत्वं तत्र तत्र श्यामत्वमपीति भूयोदर्शन समानमवगम्यते, तथापि मैत्रीतनयत्वश्यामत्वयोर्न स्वाभाविकः सम्बन्धः, किन्त्वौपाधिक एव, शाकाद्यन्नपरिणामस्योपाधेर्विद्यमानत्वात् । तथाहि —तनयश्यामत्वे मैत्रीतनयत्व न प्रयोजकम्, किन्तु शाकाद्यन्नपरिणतिभेद एव प्रयोजकः, प्रयोजकश्चोपाधिरित्युच्यते** (तर्कभाषा) इति । अपि च—

> **साध्यस्य व्यापको यस्तु हेतोरव्यापकस्तथा ।**
> **स उपाधिर्भवेत्तस्य निष्कर्षोऽय प्रदर्श्यते ॥**
>
> भा० परि० १३८ इति ।

साध्याऽप्रसिद्धि साधनाऽप्रसिद्धिश्चेति भेदेन पुनरपि व्याप्यत्वाऽसिद्धेर्द्वौ भेदौ भवत । एतयोरपि क्रमशो विवेचना प्रस्तूयते । तत्राऽऽदौ साध्याऽप्रसिद्धिरिति प्रथमो

यथा—**पर्वतः काञ्चनमयवह्निमान् धूमादित्यत्र** साध्यम्—काञ्चनमयवह्निः। अस्मिन् साध्ये **काञ्चनमय** इति साध्यांऽशस्य वह्नेरवच्छेदकं (=विशेषणम्) पर्वते (=पक्षे) धूमं दृष्ट्वा धूमेन लिङ्गेन वह्निः साध्यते, किन्त्वनेन धूमेन लिङ्गेन काञ्चनमयवह्निः साधयितुं न शक्यते, इह जगति वह्नेः सत्त्वेऽपि काञ्चनमयवह्नेरसत्त्वात्। अत्राऽवच्छेदकाऽभावविशिष्टाऽवच्छेद्याभावो वर्त्तते। तथा च साध्ये (=वह्नौ) साध्यताऽवच्छेदकस्याऽभावे परिज्ञाते सति साध्यताऽवच्छेदकविशिष्टसाध्यव्याप्यवत्ताया ज्ञानं न सम्भवति। एतेन काञ्चनमयवह्निव्याप्यधूमवानयं पर्वत इत्याकारकपरामर्शज्ञानं प्रतिरुन्द्धे। तेन पर्वतः काञ्चनमयवह्निमान् धूमादित्यनुमितिर्नोत्पद्यते। यथाह विश्वनाथः—**साध्याऽप्रसिद्धिरपि व्याप्यत्वाऽसिद्धिः। सा च साध्ये साध्यतावच्छेदकाऽभावे ज्ञाते साध्यतावच्छेदकविशिष्टसाध्यव्याप्यवत्ताज्ञानरूपपरामर्शप्रतिबन्धः फलम्** (न्या० सि० मु० भा० परि० ७२) इति।

२—**साधनाऽप्रसिद्धिः—पर्वतो वह्निमान् काञ्चनमयधूमादित्यत्र** हेतौ (=धूमे) **काञ्चनमय** इत्यवच्छेदकं, अस्याऽच्छेद्यो धूमः। अवच्छेद्यस्य धूमस्य प्रसिद्धत्वेऽपि, अवच्छेदकस्य काञ्चनमयस्याऽप्रसिद्धत्वात्काञ्चनमयधूमस्याऽप्यप्रसिद्धिः। तेनैतेन हेतुना पर्वते (=पक्षे) वह्निः साधयितुं न शक्यते। अत्राऽवच्छेदकाभावविशिष्टाऽवच्छेद्याऽभावो वर्त्तते। तथा चाऽस्य वह्निव्याप्यकाञ्चनमयधूमवानयं पर्वत इति परामर्शज्ञानं प्रतिरुणद्धि। यतो हि **तद्वत्ताबुद्धिं प्रति तदभाववत्ताबुद्धिः प्रतिबन्धिका** भवति। यथाह विश्वनाथः—**एवं हेतौ हेतुतावच्छेदकाऽभावः साधनाऽप्रसिद्धिः। यथा च काञ्चनमयधूमादित्यादौ। अत्र हेतुताऽवच्छेदकविशिष्टहेतोर्ज्ञानाऽभावात्तद्धेतुकव्याप्तिज्ञानादेरभावः फलम्** (न्या० सि० मु० भा० परि० ७२) इति।

एवं **पर्वतो वह्निमान् नीलधूमादित्यत्राऽपि** धूमत्वमेवाऽवच्छेदको ग्राह्यः। तदवच्छिन्नो धूम एवाऽवच्छेद्यो हेतुः, न तु नीलाऽवच्छेदकेनाऽवच्छेद्यस्य धूमस्य हेतुत्वं ग्राह्यम्, नीलधूमस्य गुरुधर्मवत्त्वात्। सम्भवति लघुधर्माऽवच्छेदके गुरुधर्मस्याऽनङ्गीकारात्। तथा च नीलधूमो न हेतुत्वेन ग्राह्यः। यथाह—विश्वनाथः—**एवं वह्निमान् नीलधूमादित्यादौ गुरुतया नीलधूमत्वं हेतुताऽनवच्छेदकमपि व्याप्यत्वाऽसिद्धिरित्यपि वदन्ति** (न्या० सि० मु० भा० परि० ७२) इति।

४—**प्रकरणसमत्वम्** (=सत्प्रतिपक्षः)—यस्या अनुमितेः शरीरे पक्षे साध्यस्य निष्पत्तये यो हि हेतुः प्रयुज्यते, तस्मिन्नेव पक्षे साध्यस्य विपरीतार्थस्य साधकोऽन्यो हेतुरुपादीयते चेत् स हेतुः प्रकरणसमत्वमित्युच्यते। यथा—**ह्रदो वह्निमान् धूमादित्यादौ** हेतुर्धूमः, साध्यं वह्निः, अस्य (=साध्यस्य) विपरी-

तार्थो वह्न्यभावः, अस्य साधकोऽन्यो हेतुर्जलं गृह्यते । अतो जलमिति हेतुः प्रकरणसमत्वमित्यभिधीयते । अस्य निश्चयोऽनुमित्यन्तरस्य प्रयोगे भवति । तथाहि—**ह्रदो वह्न्यभाववान् जलादित्यनुमिति** पूर्वप्रदर्शितामनुमितिं प्रतिरुन्द्धे, **तद्वत्ताबुद्धिं प्रति तदभाववत्ताबुद्धिः प्रतिबन्धिका** भवतीत्यनुभवात् । अनयैव रीत्या **शब्दो नित्योऽनित्यधर्मरहितत्वात्, शब्दोऽनित्यो नित्यधर्मरहितत्वादि-** त्यत्राऽपि यथोक्तदिशाऽनुगमो निश्चीयते । यथाहतुर्विश्वनाथकेशवमिश्रौ—**सत्प्रतिपक्षः साध्याऽभावव्याप्यवान् पक्षः । अत्र च परस्पराऽभावव्याप्यवत्ता-ज्ञानात् परस्पराऽनुमितिप्रतिबन्ध फलम्** (न्या० सि० मु० भा० परि० ७२) इति । अपि च **प्रकरणसमस्तु स एव यस्य हेतोः साध्यविपरीतसाधकं हेत्वन्तरं विद्यते । यथा**—शब्दो नित्योऽनित्यधर्मरहितत्वादिति । **अयमेव हि सत्प्रतिपक्ष इति चोच्यते** (तर्कभाषा) इति ।

५—**कालात्ययापदिष्टत्वम्** (=बाध.)—यस्या अनुमितेः शरीरे यस्मिन् पक्षे साध्यस्य निष्पत्तये यः साधको हेतुर्गृह्यते, पक्षे तस्मिन्नेव साध्यस्य विपरीतार्थस्य सिद्धये प्रमाणान्तरमुपादीयते चेत् स हेतुः कालात्ययापदिष्ट इत्युच्यते । यथा— **वह्निरनुष्णो द्रव्यत्वात्** । अत्र द्रव्यत्वस्य हेतोः साध्यमनुष्णत्वम्, अस्य अनुष्णत्वस्याऽभावः (=साध्याऽभावो विपरीतार्थः) प्रत्यक्षप्रमाणान्तरेण निश्चीयते । यतो हि वह्नेरुष्णत्व स्पार्शनप्रत्यक्षेणैवाऽनुभूयते । तथा च द्रव्यत्वादिति हेतुर्वह्नौ (=पक्षे) अनुष्णत्व साधयितु न प्रभवति । एतेन साध्याऽभाववान् पक्षो बाध इति गम्यते । एष बाध साक्षादनुमिति प्रतिरुन्द्धे । यथा—सत्प्रतिपक्ष । यथाहतु-र्विश्वनाथकेशवमिश्रौ—**बाधस्तु पक्षे साध्याभावादिः । एतस्याऽनुमितिप्रतिबन्धः फलम्** (न्या० सि० मु० भा०परि० ७२) इति । अपि च— **पक्षे प्रमाणान्तरा-वधृतसाध्याऽभावो हेतुर्बाधितविषयः कालात्ययापदिष्ट इति चोच्यते । यथा— अग्निरनुष्णः कृतकत्वाज्जलवत् । अत्र हि कृतकत्वस्य हेतोः साध्यमनुष्णत्वं तदभावः प्रत्यक्षेणैवाऽवधारितः, स्पार्शनप्रत्यक्षेणैवोष्णत्वोपलम्भात्** (तर्कभाषा) इति ।

**शब्दःप्रमाणम्**—

अय गौरित्यनेन सास्नाद्यर्थोऽवगम्यते । अत्रेय जिज्ञासा जागर्ति यद् गौरिति पद कथ सास्नाद्यर्थ बोधयति, पदमिद कथ नाऽन्यमर्थ प्रत्याययतीत्य-त्रोच्यते—पदजन्यपदार्थोपस्थितौ त्रीण्यसाधारणानि कारणानि सन्ति, तानि च पदपदार्थशक्तिरूपाणि । एतानि कारणानि क्रमशो व्याक्रियन्ते । अत्राऽऽदौ **पदज्ञानम्**—पदज्ञान करण भवति । अत्र पदज्ञानमित्यस्य पदस्योच्चारण-मित्यर्थ । पदज्ञानमित्यस्य कैश्चिज्**ज्ञायमान पदं करण**मित्युक्तम्, तन्नोचितम् ।

**यतो** हि शब्दमात्रस्य ज्ञानं श्रोत्रादेव भवतीति प्राकृतिकम् । पदमपि शब्दविशेषस्यैव नाम, अस्यापि ज्ञानं श्रोत्रादेव, परन्तु मौनिपुरुषेण—अक्षरलेखनेन हस्तादिचेष्टया वा परं प्रत्यायितस्तत्र पदस्योच्चारणाऽभावेऽपि केवलपदज्ञानमात्रेण शाब्दबोधो भवति । अतो ज्ञायमानं पदं न करणम् किन्तु पदज्ञानमेव करणमस्तीति । यथाह विश्वनाथ—**पदज्ञानन्तु करणम्** । अत्र 'तु' इत्यस्य पृथगन्वय, तथा च **पदज्ञानं करणम्, न तु ज्ञायमानं पदम्** (=ज्ञानविषयीभूत पदम्) **करणम्, पदाभावेऽपि मौनिश्लोकादौ शाब्दबोधात्** (न्या० सि० मु० भा० परि० ८१) इति ।

२—**पदार्थज्ञानम्**—पदज्ञानाऽनन्तरं पदजन्या या पदार्थस्य स्मृतिः **सैव** व्यापार । अन्यथा (=पदार्थज्ञानमात्रस्य व्यापारत्वस्वीकारे) पदज्ञानवत पुरुषस्य प्रत्यक्षादिप्रमाणेन पदार्थस्योपस्थितौ सत्यामपि शाब्दबोध स्यात् । न चैतद् युक्त प्रतिभाति । अतः पदजन्यपदार्थस्मृतेरेव व्यापारत्वम् । अत एवोक्तं विश्वनाथेन—**द्वारं तत्र पदार्थधीरिति** । अत्र तत्र (=पदज्ञाने) पदार्थधी (=पदजन्यपदार्थस्मृति), द्वारम् (=व्यापार) इति । अपि च—पदार्थधीरिति—**पदजन्यपदार्थस्मरणं व्यापारः । अन्यथा—पदज्ञानवत प्रत्यक्षादिना पदार्थोपस्थितावपि शाब्दबोधापत्ते** (न्या० सि० मु० भा० परि० ८१ ) इति ।

३—**शक्तिज्ञानम्**—पदजन्या या पदार्थोपस्थिति, सा चोपस्थितिरपि शक्तिज्ञानाधीनैवेति मन्तव्यम् । अन्यथा (=शक्तिज्ञानानधीने) घटादिपदात् समवायेनाऽऽकाशस्य स्मृतौ सत्यामाकाशस्यापि शाब्दबोधापत्ति स्यात् । सा न स्यादेतदर्थं शक्त्या पदार्थोपस्थितेः कारणत्वमित्युच्यते । अत एवाह विश्वनाथ—**शक्तिधीः सहकारिणीति । अपि च—तत्रापि वृत्त्या पदजन्यत्वं बोध्यम् । यथा घटादिपदात् समवायसम्बन्धेनाऽऽकाशस्मरणे जाते आकाशस्यापि शाब्दबोधापत्तेः** (न्या० सि० मु० भा० परि० ८१) इति ।

४—**वृत्तिः**—वृत्तिश्चाऽर्थस्मृत्यनुकूलः **पदपदार्थयोः परस्परसम्बन्धः**, स च द्विविध, शक्तिलक्षणाभेदात् । अत्र शक्तिरिति पदेन सह पदार्थस्य सम्बन्धरूप । स च सम्बन्ध ऐश्वर सङ्केतरूप । यथाऽस्माच्छब्दादयमर्थो बोद्धव्यः, इदं पदमिममर्थं बोधयतु इति च । अपि च आधुनिके नाम्न्यपि शक्तिरस्त्येव । अत **एवैकादशेऽहनि पिता नाम कुर्य्यादित्यैश्वर** सङ्केत । नव्या **ऐश्वरः सङ्केत** इत्यस्य शक्तित्व न स्वीकुर्वन्ति । किन्त्विच्छैव शक्तिरित्येवमामनन्ति । तेनैतेनाऽऽधुनिकेऽपि नाम्नि शक्तिरस्त्येव । एतेनाऽऽधुनिके तु सङ्केते न शक्तिरिति स्वीकुर्वतो वादिनो मतमपास्तम्, आधुनिके नाम्न्यपि सङ्केतकर्त्तुरिच्छायाः सत्त्वात् । अत्र ब्रूते विश्वनाथ—**वृत्तिश्च शक्तिलक्षणान्यतरः सम्बन्ध । शक्तिश्च पदेन सह पदार्थस्य सम्बन्ध । स चाऽस्माच्छब्दादयमर्थो**

**बोद्धव्य इतीश्वरेच्छारूपः । आधुनिके नाम्नि शक्तिरस्त्येव । एकादशेऽहनि पिता नाम कुर्य्यादितीश्वरेच्छायाः सत्त्वात् । आधुनिके तु सङ्केते न शक्तिरिति सम्प्रदायः । नव्यास्तु ईश्वरेच्छा न शक्तिः, किन्त्विच्छैव । तेनाऽऽधुनिके सङ्केतेऽपि शक्तिरस्त्येवेत्याहुः** (न्या० सि० मु० भा० परि० ८१) इति ।

एवञ्च पदजन्यपदार्थोपस्थितावेव शक्तिरूपस्य सम्बन्धस्य कारणत्वमस्ति । यतो हि पूर्वं शक्तिग्रहाऽभावे सति पदज्ञाने जातेऽपि शक्तेस्सम्बन्धत्वेन पदार्थस्य स्मृतिर्न स्यात् । तथा **चैकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकं भवतीति** न्यायेन यथा—हस्तिनं दृष्ट्वा हस्तिपकस्य स्मृतिर्भवति, एवं हस्तिपकं दृष्ट्वा हस्तिनं, तथा—शक्तेरभावे शक्तिसम्बन्धेन पदार्थस्य स्मृतिर्न निष्पद्येत । अतः पूर्वं शक्तिग्रहः, शक्तिग्रहे जाते सति पदज्ञानम्, पदज्ञाने जाते सति पदजन्यपदार्थोपस्थितिः, पदजन्यपदार्थोपस्थितौ सत्यामेक**सम्बन्धिज्ञानमपरसम्बन्धिस्मारकं भवतीति** न्यायेनाऽर्थस्य स्मृतिः, अर्थस्मृतौ सत्यां शाब्दबोधो भवति । यथाह विश्वनाथः—**शाब्दबोधः फलम्, अपि चाऽत्रैव शक्तिज्ञानस्योपयोगः । पूर्वं शक्तिग्रहाभावे पदज्ञानेऽपि तत्सम्बन्धेन स्मरणाऽनुपपत्तेः । पदज्ञानस्य चैकसम्बन्धिज्ञानविधयार्थस्मारकत्वम्** (न्या० सि० मु० भा० परि० ८१) इति । अमुमेवाऽर्थमनया कारिकया स्पष्टीकरोति—

**पदज्ञानन्तु करणं द्वारं तत्र पदार्थधीः ।**
**शाब्दबोधः फलं तत्र शक्तिधीः सहकारिणी ॥** भा० परि० ८१

इदं पदमिममर्थं बोधयति, अस्मिन्नर्थेऽस्य पदस्य शक्तिः । यथा—गौरित्यत्र गौरितिपदं सास्नादिमन्तमर्थं बोधयति । यतो ह्यस्य पदस्य सास्नाद्यर्थे शक्तिरस्ति, अतो गौरिति पदं तमेवाऽर्थमभिव्यनक्ति नाऽन्यमिति ।

शक्तिग्रहश्च व्याकरणादितो भवति । एतेषां क्रमशो विवेचना प्रस्तूयते । अत्राऽऽदौ **व्याकरणम्**—भू सत्तायाम्, 'भू' इति धातुः, 'तिप्' इति प्रत्ययः, 'शप्' इति विकरणः, एवमागमाऽऽदेशवर्णविकारादीनां शक्तिग्रहं व्याकरणेनैव कश्चिन्निश्चिनोति । अस्य क्वचिद् बाधोऽपि दृश्यते । यथा—आख्यातस्य कर्त्तरि शक्तिरिति शाब्दिकाः । तेन चैत्रः पचतीत्यादावाख्यातवाच्येन कर्त्रा सह चैत्रस्याऽभेदेनाऽन्वयो भवति । येन विक्लित्त्यनुकूलव्यापाराश्रयश्चैत्र इति शाब्दबोधः । अस्य गौरवदोषग्रस्तत्वादाख्यातस्य कर्त्तरि शक्तिरिति त्यज्यते, किन्तु लाघवादस्य कृतावेव शक्तिरिति तार्किकाः । कृतिश्च चैत्रादिषु विशेषणतया प्रतीयते । एतेन विक्लित्त्यनुकूलकृतिमांश्चैत्र इति बोधः । न च—आख्यातस्य कृतौ शक्तिरित्युच्यते चेत् कर्त्तुरनुक्तत्वाद**नभिहिते** (पा० सू० २।३।१८) इत्यस्याऽधिकारे स्थितेन **कर्त्तृकरणयोस्तृतीया** (पा० सू० २।३।१८) इत्यनेन चैत्रादिपदानन्तर

तृतीया विभक्ति स्यादिति वाच्यम् ? कर्त्तु सख्याया अनभिधान यत्र भवति तत्रै वोक्तसूत्रस्य प्रवृत्तिर्भवतीति विवक्षितत्वात् । सख्याभिधानयोग्यश्च कर्मत्वाद्यनवरुद्ध ऽप्रथमान्तपदोपस्थाप्यश्चैत्र. । अत्र कर्मत्वादीत्यस्येतरविशेषणत्वतात्पर्याऽविषयत्वमर्थ । तेनैतेन **चैत्र इव मैत्रो गच्छतीत्यादौ** चैत्रे सख्याया अन्वयो न भवति । यस्य कर्मादौ विशेषणत्वेन तात्पर्यं नास्ति, तस्य प्रतिषेधार्थं प्रथमान्तपदोपस्थाप्य इति द्वितीय विशेषणम् । अथवा धात्वर्थाऽतिरिक्ताऽविशेषणत्व प्रथमदलार्थ । तेन **चैत्र इव मैत्रो गच्छतीत्यत्र** चैत्रस्येवार्थे विशेषणत्वान्न क्षति । **स्तोकं पचतीत्यादौ क्रियाविशेषणानां कर्मत्वमित्यनुशासनात् स्तोकमित्यत्र** द्वितीयान्तपदोपस्थाप्यत्वेन **प्रथमान्तपदोपस्थाप्य** इति द्वितीयविशेषणस्याऽसत्त्वान्न दोष. । अत आख्यातस्य कृतावेव शक्तिर्न तु कर्त्तरि । एव तिडो भावनाया शक्तिरस्तीति मीमासकः । अस्य मते चैत्र ऽपचतीत्यत्र विक्लित्यनुकूला भावना इति बोध । अनया (=भावनया) चैत्रादे ऽकर्त्तुराक्षेपो भवति । यतो हि कर्त्तार विना भावनाऽनुपपन्ना भवति । अस्य मतमपि न समीचीन प्रतिभाति । यतो ह्यस्मिन् मतेऽपि महान् गौरवदोषोऽस्ति । तथाहि—**रथो गच्छतीत्यादौ** तु स्वव्यापारे आश्रयत्वे वा लक्षणयैव सामञ्जस्य सङ्गच्छेत । **जानातीत्यादौ** त्वाश्रयत्वे, **नश्यतीत्यादौ** प्रतियोगित्वे च निरूढलक्षणाया कल्पना स्यादिति महद्गौरवम् । अतो लाघवादस्मन्मतमेव युक्तम् ।

२—**उपमानम्**—कश्चिदारण्यको ग्रामीणमुपदिशति **गोसदृशो गवयपदवाच्य** इति । स एव ग्रामीणो यदाऽरण्य गच्छति तदा तत्र गवय पश्यति । गवये गोसादृश्यज्ञान यदुत्पन्नं तदेवोपमिते ऽकरणम् । तदनन्तर **गोसदृशो गवयपदवाच्य** इत्यतिदेशवाक्यार्थस्य या स्मृतिस्सैव व्यापार इति कथ्यते । ततोऽय गवयो गवयपदवाच्य इति यज्ज्ञान जायते, तदेवोपमिति फलम्, न त्वय गवयपदवाच्य इत्युपमिति , गवयान्तरे शक्तिग्रहाऽभावाद् ।

३—**कोशः**—कोशादपि शक्तेर्ग्रहो भवति । यथा—इन्द्रो मघवा विडौजा पाकशासन इत्यादीना शक्तेर्ग्रह । सति बाधस्थले त्यागोऽपि भवति । यथा—नीलादीना नीलरूपादौ नीलादिविशिष्टे च द्रव्ये शक्ति ऽकोशेन व्युदपादि यथा—**गुणे शुक्लादय ऽपुंसि गुणिलिङ्गास्तु तद्वति** (अ० को० १/१७ धीवर्ग ) इति । तथापि लाघवान्नीलादावेव शक्ति', नीलादिविशिष्टे तु लक्षणैवाऽस्तीति ।

४—**आप्तवाक्यम्**—आप्तवाक्यादपि शक्तेर्ग्रहो भवति । यथा—**कोकिल ऽपिकपदवाच्य** इत्याप्तवचनात् पिकपदस्य शक्तिग्रहो भवति ।

५—**व्यवहार**—प्रयोजको वृद्ध ऽप्रयोज्य वृद्धमादिशति त्व घटमानय, तच्छ्रुत्वा प्रयोज्यो वृद्धो घटमानयति । तदवधार्य्य पार्श्वस्थो बालो घटानयनरूप कार्य **घटमानय** इति शब्दप्रयोज्यमित्यवधारयति । ततश्च घट नय, गामा-

नय इत्यादावावापोद्वापाभ्यां घटादिपदानां कार्यान्वितघटादौ शक्तिं गृह्णाति। इत्थञ्चेह भूतले नीलो घट इत्यादिशब्दान्न शाब्दबोधो जायते। यतो हि घटादिपदानां कार्यान्वितघटादिष्वेव सामर्थ्यमस्ति। कार्यताबोधं प्रति लिङादीनां सामर्थ्यात्तदभावान्न शाब्दबोधो भवतीति केषाञ्चिन्मतम्। तन्न युक्तं प्रतिभाति। आदौ कार्यान्वितघटे शक्तित्वस्य निश्चयेऽपि लाघवेन पश्चात् तस्य परित्यागस्यौचित्यमस्ति। अत एव **चैत्र पुत्रस्ते जातः, कन्या ते गर्भिणी जाता** इत्यादौ मुखप्रसादमुखमालिन्याभ्यां सुखदुःखे अनुमाय तत्कारणत्वेन शाब्दबोधं निश्चित्य तत्कारणतया तं शब्दमवधारयति। तथा च व्यभिचारात्कार्यान्विते न शक्तिः। न च तत्र **तं पश्ये**त्यादिशब्दान्तरमध्याहार्य्यम्, प्रमाणाऽभावात्। **चैत्र पुत्रस्ते जातो मृतश्चे**त्यादौ तदभावस्य सुस्थितत्वाच्च लाघवादन्वितघटेऽपि शक्तिं त्यक्त्वा घटपदस्य घटमात्रे शक्तिमवधारयति।

६—**वाक्यशेष**—वाक्यस्य शेषादपि शक्तिग्रहो भवति। यथा—**यवमयश्चरुर्भवती**त्यत्र यवपदस्य दीर्घशूकविशेषे आर्य्याणां प्रयोगः, कङ्गौ च म्लेच्छानाम्। अत्र हि **अथाऽन्या ओषधयो म्लायन्तेऽथैते मोदमानास्तिष्ठन्ती**ति वाक्यस्य शेषाद्दीर्घशूके शक्तिर्निश्चीयते, कङ्गौ तु शक्तेर्भ्रमात्प्रयोगः, नानाशक्तिकल्पने गौरवात्। हर्य्यादिपदे तु विनिगमनाभावान्नानाशक्तिकल्पनमेव **युक्तम्**। अतो वाक्यशेषादपि शक्तिग्रहः[1]।

७—**विवरणम्**—विवरणादपि शक्तेर्ग्रहो भवति। विवरणञ्च तत्समानार्थकपदान्तरेण तदर्थकथनम्। यथा—**घटोऽस्ति**, इत्यस्य **कलशोऽस्ति**, अनेन विवरणेन घटपदस्य **कलशे शक्ते**र्ग्रहो भवति। एवं **पचति** इत्यस्य **पाकं करोती**त्यनेन विवरणादाख्यातस्य यत्नार्थकत्वं कल्प्यते। एवं **अस् भुवी**त्यस्य **भू सत्तायामि**त्यनेन विवरणेन **अस्** धातोर्भुवि शक्तेर्ग्रहः।

८—**प्रसिद्धपदसान्निध्यम्**—कस्मिँश्चिद्वाक्ये किञ्चित्पदं प्रसिद्धम् (=सुज्ञातम्), किञ्चित्पदमप्रसिद्धम् (=अज्ञातम्) भवेच्चेत् प्रसिद्धपदस्य सन्निधानादप्रसिद्धस्याऽपि पदस्य शक्तेर्ग्रहो भवति। यथा—**इह सहकारतरौ मधुरं पिको रौती**त्यादौ वाक्ये सहकारतरुः प्रसिद्धः, पिकश्चाऽप्रसिद्धः। अत्र सहकारतरोः सान्निध्यात् पिकपदस्य कोकिले शक्तेर्ग्रहो भवति। इयं शक्तिर्जातौ तिष्ठत्याहोस्विद् व्यक्ताविति चिन्तायाम्, जातौ व्यक्तौ वा शक्तिकल्पने व्यभिचारादानन्त्यात् कल्पनागौरवप्रसङ्गाच्च शक्तिर्न जातौ नाऽपि व्यक्तौ, किन्तु जात्या-

---

१—वसन्ते सर्वशस्यानां जायते पत्रशातनम्।
सम्मोदमानास्तिष्ठन्ति यवाः कणिशशालिनः॥
उद्० उप० २।१।१७

कृतिविशिष्टव्यक्तावेव शक्तिर्विश्राम्यतीति निर्धार्यते । उपरि प्रदर्शितानां शक्ति-ग्राहकहेतूनां सङ्ग्राहकं पद्यं स्मर्य्यते—

**शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्च ।**
**वाक्यस्य शेषाद् विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धा ॥** इति[1] ।

**लक्षणा—**

शक्त्या वाक्यार्थस्य प्रतीतिर्यत्र न भवति तत्र लक्षणा । अनया लक्षणया कश्चिदन्यो ह्यर्थः प्रतीयते स च शक्यसम्बन्ध एव भवति । अत एव **शक्यार्थबाधे शक्यसम्बन्धरूपा लक्षणेत्युच्यते** । अस्या लक्षणाया द्वे कारणे स्त । तत्रैकमन्वयाऽनुपपत्तिरपरं तात्पर्याऽनुपपत्तिश्च[2] । अनयोः क्रमशो विवेचना प्रस्तूयते । तथाहि—

१—**अन्वयाऽनुपपत्तिः**—

**गङ्गायां घोष** इत्यत्र गङ्गापदस्य भगीरथरथखाताऽवच्छिन्नजलप्रवाहरूपो हि शक्यार्थ । घोषपदस्य ह्याभीरपल्लीरूपोऽर्थ । अस्य शक्यार्थे जलप्रवाहे स्थिति-र्न सम्भवतीत्यन्वयाऽनुपपत्त्याऽन्वयस्योपपत्तये शक्यसम्बन्धार्थो लक्षणया गम्यते । असौ च शक्यसम्बन्धाऽर्थो लक्ष्यार्थस्तटः । अत्र घोषस्याऽन्वयोपपत्ति । तेनैतेन गङ्गाया घोष इत्यस्य गङ्गायास्तटे घोष इति बोध । अनेन शैत्यपावनत्वाद्य-भिव्यञ्जन प्रयोजन वक्तुस्तादृशवाक्यप्रयोगस्येति गम्यते ।

२—**तात्पर्य्याऽनुपपत्ति**—

**यष्टीः प्रवेशय** इत्यत्र यष्टेः प्रविशिक्रियायामन्वयस्योपपत्तिरस्त्येव । किन्तु भोजनतात्पर्येणैव **यष्टीः प्रवेशय** इत्यतिदेशवाक्यस्य प्रयोगः । तथा चाऽत्र प्रविशिक्रियायामन्वयस्योपपत्तेस्सत्त्वेऽपि भुजिक्रियाया यष्टेस्तात्पर्य्याऽ-नुपपत्तिर्भवति । अतो **यष्टीरित्यस्य यष्टिधरे** लक्षणा भवति । एतेन यष्टीः प्रवेशय इत्यस्य यष्टिधरान् प्रवेशयेति बोध । इय जहत्स्वार्थलक्षणेत्युच्यते, गङ्गादिपदस्य स्वार्थं विहाय तीरादेरन्यार्थस्य बोधकत्वात् ।

**काकेभ्यो दधि रक्ष्यतामित्यत्र** काकेभ्यो दध्नो रक्षणम्, मार्जारेभ्यो नेति वक्तुर्नैतत् तात्पर्य्यमस्ति । किन्तु सर्वतो दध्नो रक्षणतात्पर्य्यमेव काकेभ्यो दधि रक्ष्यतामित्यस्य । अतोऽत्र काकपदस्य दध्न उपघातके लक्षणा प्रवर्त्तते ।

---

१. द्र० न्या० सि० मु० भा० परि० ८१ ।

२. लक्षणा शक्यसम्बन्धस्तात्पर्य्याऽनुपपत्तित । भा० परि० ८२ क

मुख्यार्थबाधे तद्युक्तो ययाऽन्योऽर्थः प्रतीयते ।
रूढेः प्रयोजनाद्वाऽसौ लक्षणाशक्तिरर्पिता ॥

सा० द० का० २/५

**छत्रिणो यान्ति—**

इत्यत्र छत्रिपदस्यैकसार्थवाहित्वे लक्षणा भवति। अत्रच्छत्रिणामच्छत्रिणा च मध्ये छत्रिणो भूयास इति भूयसा व्यपदेशोभवतीत्युक्तलक्षणो व्यवहार। इयमजहत्स्वार्थलक्षणेत्युच्यते, छत्रिणोऽपरित्यागात्।

**अवच्छेदके न लक्षणा—**

शक्यार्थसम्बन्धरूपा लक्षणेत्यभिहितम्। तत्र शक्यार्थसम्बन्धस्तीरत्वेन रूपेण गृहीतश्चेत् तीरत्वेन तीरबोध। गङ्गातीरत्वेन रूपेण गृहीतश्चेदनेनैव तीरादेस्स्मरणमपि स्यात्। तथा चाऽत्र लक्ष्यताऽवच्छेदके (=तीरत्वाऽऽदौ) न लक्षणा, तीरत्वप्रकारकबोधस्य तत्र लक्षणामन्तराप्युपपत्ते। परन्तु लक्ष्यताऽवच्छेदके यथा लक्षणा नाऽङ्गीक्रियते तथा शक्यताऽवच्छेदके (=जलप्रवाहत्वादौ) अपि शक्तिर्न स्यादिति, तत्प्रकारकशक्यार्थस्य स्मरण प्रति तत्पदस्य सामर्थ्यमस्तीति सूपपादनीयत्वात्।

**लक्षितलक्षणा—**

यत्र शक्यार्थस्साक्षात्सम्बन्धेन न प्रतीयते, प्रत्युत परम्परासम्बन्धेनैव तत्र लक्षितलक्षणेत्युच्यते। यथा—**द्विरेफो रौतीत्यत्र** द्विरेफादिपदे रेफद्वयस्य सम्बन्धो भ्रमर इति पदे विज्ञायते। अत्र भ्रमरपदस्य सम्बन्धो मधुपजन्तुविशेषे ज्ञायते। तेनाऽत्र स्ववाच्यरेफद्वयघटितपदवाच्यत्वरूप—परम्परासम्बन्धो भ्रमरेऽस्ति। अतोऽत्र लक्षितलक्षणेत्यभिधीयते। परन्तु **द्विरेफो रौतीत्यत्र** द्विरेफस्य लाक्षणिक भ्रमरपद शाब्दबोध न जनयति। किन्त्वत्र (=द्विरेफो रौति) लाक्षणिकार्थस्य शाब्दबोध प्रति रौतीति पदान्तरस्यैव कारणत्वम्। एव गङ्गाया घोष इत्यत्र घोषरूप यत्पदान्तरम्, अस्य कारणत्वम्, शक्तिलक्षणाऽन्तरसम्बन्धेनेतरपदार्थाऽन्वितस्वशक्यार्थशाब्दबोध प्रति पदाना सामर्थ्याऽवधारणात्।

**वाक्ये न लक्षणा—**

**शक्त पदमिति** मते शक्ति—पदे तिष्ठति। अतश्शक्यसम्बन्धरूपा लक्षणा पद एव। यथा—गङ्गेत्यादिपदे। पदसमूहो वाक्यम्। अत्र शक्तेरभावात्-शक्यसम्बन्धरूपा लक्षणाऽपि न भवति। यत्र **गम्भीरायां नद्यां घोष** इत्युक्त तत्र नदीपदस्य नदीतीरे लक्षणा, 'गम्भीरा' इति पदार्थस्य नद्या सहाऽभेदेनाऽन्वयः, क्वचिदेकदेशाऽन्वयस्याऽपि स्वीकृतत्वात्। यद्यत्रैकदेशाऽन्वयो नाऽङ्गीक्रियते तदा नदीपदस्य गम्भीरनदीतीरे लक्षणा, अत्रैव 'गम्भीरा' इति पद तात्पर्य्यं ग्राहयति।

**बहुव्रीहिसमासे न लक्षणा—**

चित्रगुरित्यत्र गोपदस्य गोस्वामिनि लक्षणा, चित्रपद गव्यभेदेनाऽन्वेति।

अथ क्रम एकदेशेऽन्वयस्य स्वीकारे भवति । एकदेशेऽन्वयो न मन्यते चेत्तदा गोपदस्यैव चित्रगोस्वामिनि लक्षणा भवति । अत्रैव चित्रपदं तात्पर्यं ग्राहयति । **एवमारूढवानरो वृक्ष** इत्यत्र वानरपदस्य वानरारोहणकर्मणि लक्षणा भवति अत्रैवाऽऽरूढपदं तात्पर्यं ग्राहयति ।

**तत्पुरुषसमासे पूर्वपदे लक्षणा—**

राजपुरुष इत्यत्र राजपदस्य राजसम्बन्धिनि लक्षणा । राजसम्बन्धस्य पुरुषेण सहाऽभेदेनाऽन्वयो भवति । अत्र राजपदार्थेन सह पुरुषादिपदार्थस्य न साक्षादन्वयो भवति, निपाताऽतिरिक्तनामार्थयोर्भेदेनाऽन्वयबोधस्याऽव्युत्पन्नत्वात् । अन्यथा राजा पुरुष इत्यत्राऽपि तथाऽन्वयबोधस्स्यात् । घटो न पट इत्यत्र घटपटाभ्यां नञस्साक्षादेवाऽन्वयान्निपाताऽतिरिक्ते युक्तम् । नीलो घट इत्यादौ नामार्थयोरभेदसम्बन्धेनाऽन्वयाद्भेदेनेति विशेषणम् । न च राजपुरुष इत्यादौ लुप्तविभक्तेस्स्मरणं कल्प्यमिति वाच्यम् ? अस्मृतविभक्तेरपि राजपुरुष इति वाक्याच्छाब्दबोधो भवति । अत उक्तदिशैवाऽनुगन्तव्यं स्यात् ।

**द्वन्द्वे न लक्षणा—**

धवखदिरौ छिन्धि । अत्र धव, खदिरश्च विभक्त्यर्थद्वित्वप्रकारेणैव छिदिक्रियायामन्वेति । तेनाऽत्र लक्षणा विनैव बोधः । न च धवखदिरयोर्यत्परस्परमेकक्रियायामन्वयित्वमाकाङ्क्षारूपं साहित्यम्, अस्मिन् साहित्ये लक्षणास्तीति वाच्यम् ? साहित्यशून्ययोरपि द्वन्द्वदर्शनात् । यथा—**आद्यन्तौ टकितौ** (पा० सू० १।१।४६) इति सूत्रे आद्यन्तावित्यत्र, टकितावित्यत्र च परस्परं साहित्याभावेऽपि द्वन्द्वसमासस्य चाऽत्र सत्त्वात् । तथा च यत्र साहित्यम्, तत्र द्वन्द्वसमास इति नियमो नास्ति । न च धवखदिरौ छिन्धीत्यत्रैकक्रियाऽन्वयित्वरूपं साहित्यमस्तीति वाच्यम् ? धवखदिरौ पश्य छिन्धीत्यत्र क्रियाया भेदस्याऽसत्त्वात्साहित्यस्याऽननुगमत्वात् । अत एव राजपुरोहितौ सायुज्यकामौ यजेतामित्यत्र लक्षणाया अभावाद् द्वन्द्वसमास आश्रीयते, तस्मात्साहित्यं नार्थं, परन्तु वास्तवभेदो यत्र दृश्यते तत्र द्वन्द्वो भवति । यथाऽत्रैव धवखदिरौ । अत्र धवखदिरयोर्भेदस्य सत्त्वात् समास इति । न च नीलघटयोरभेद इत्यत्राऽभेदस्य सत्त्वे कथं द्वन्द्वसमास इति वाच्यम् ? अत्र नीलपदस्य नीलत्वे, घटपदस्य च घटत्वे लक्षणा, **अभेद** इत्यस्य चाऽऽश्रयाऽभेद इत्यर्थादत्र नीलत्वघटत्वयोराश्रयभेदस्य च सत्त्वाद् द्वन्द्वसमास उपपद्यते । **समाहारद्वन्द्वे तु**—यदि समाहारोऽप्यनुभूयत इत्युच्यते तदा अहिनकुलमित्यादाविव समासोत्तरपदेऽहिनकुलसमाहारे लक्षणा, पूर्वपदन्तु तत्रैव तात्पर्यग्राहकम् । न च **भेरीमृदङ्ग वादये**त्यत्र कथं समाहारस्याऽन्वयः, अपेक्षाबुद्धिविशेषरूपस्य वादनाऽसम्भवादिति वाच्यम् ? अभिघाताख्यसंयोगाऽ-

वच्छिन्नक्रिया हि वादनपदस्यार्थं । अस्याऽपेक्षाबुद्धिविशेषरूपसमाहारेऽसम्भवस्तथापि स्वाश्रयवृत्तित्वरूपपरम्परासम्बन्धेन वादनक्रियाया समाहारेऽन्वयेनाऽदोषात् । अत्र स्वशब्देनाऽपेक्षाबुद्धिरूपसमाहारो गृह्यते, अस्याऽऽश्रयो विषयतासम्बन्धेन भेरीमृदङ्गादि, तद्वृत्तित्व वादनरूपक्रियायास्सत्त्वात् । एव **पञ्चमूली**त्यत्र दिग्वर्थसमाहारद्वन्द्वसमास. । अत्राऽप्युत्तरपदस्य समाहारे लक्षणा, पूर्वपद तात्पर्य्यग्राहक भवति ।

नव्यास्तु—अहिनकुलमित्यत्र अहिर्नकुलश्च प्रतीयते, प्रत्येकमेकत्वाऽन्वयो भवति । समाहारसञ्ज्ञा च यत्रैकत्व नपुसकत्वञ्च **द्वन्द्वश्च प्राणितूर्य्यसेनाङ्गानाम्** (पा० सू० २।४।२) इति सूत्रेणोक्त तत्रैव भवति । अन्यत्रैकवचनमसमीचीनमेवेति ब्रुवते ।

**पितरौ श्वशुरा**वित्यादौ पितृपदे जनकदम्पत्यो, श्वशुरपदे स्त्रीजनकदम्पत्योर्लक्षणा भवति । घटा इत्यत्र तु लक्षणा न भवति । घटत्वेन रूपेण नानाघटोपस्थितिसम्भवात् ।

**कर्मधारयसमासे न लक्षणा—**

नीलोत्पलमित्यत्राऽभेदसम्बन्धेन नीलपदार्थ उत्पलपदार्थे प्रकार, अत्र च न लक्षणाया प्रवृत्तिर्भवति । अत एव **निषादस्थपति याजयेदि**त्यत्र निषादश्चाऽसौ स्थपतिश्चेति कर्मधारय एव, न तु तत्पुरुष, तथा सत्युत्तरपदे लक्षणा, पूर्वपदन्तु तत्रैव तात्पर्यग्राहकमिति स्यात् । न च निषादस्य सङ्करजातिविशेषस्य वेदाऽध्ययनस्याऽधिकाराऽभावाद् याजनाऽसम्भव इति वाच्यम् ? निषादस्य विद्याप्रयुक्तेस्तत एव प्रकल्पनात् । न च निषादाना विद्याकल्पने भवता मते गौरव स्यादिति वाच्यम् ? लाघवेन मुख्यार्थस्याऽन्वये तदनुपपत्त्या कल्पनाया फलमुखगौरवतयाऽदोषत्वात् । अत एव **फलमुखं गौरव न दोषाऽऽधायकमिति** व्यवहार. । उपकुम्भमर्धपिप्पलीत्यादौ कुम्भसम्बन्ध्यभिन्न समीपम्, एव पिप्पलीसम्बध्यभिन्नमर्धमित्याकार पूर्वपदार्थप्रधानश्शाब्दबोधः । इत्थञ्च समासे न क्वापि शक्ति, पदशक्त्यैव निर्वाहाद् ।

शब्दजसम्प्रत्ययस्य आकाङ्क्षाऽऽसत्तियोग्यतातात्पर्य्याणा कारणत्वमस्ति । एतेषा स्वरूपस्य निर्धारण वैयाकरणसिद्धान्तलघुमञ्जूषाया[1] नागेशेन, न्यायसिद्धान्तमुक्तावल्या[2] विश्वनाथेन च व्याख्यायि । तत एव बुभुत्सुभिरवबोधनीयम् ।

---

१. वै० सि० लघुमञ्जूषायामाकाङ्क्षादिनिरूपणम् ।
२. भा० परि० ८२-८४ न्या० सि० मुक्तावली ।

एवञ्च न्यायदर्शने प्रमाणचतुष्टयेऽन्यतम प्रमाण शब्दस्यापि सुस्थापित वर्त्तते । अत एव **प्रत्यक्षाऽनुमानोपमानशब्दाः प्रमाणानि** (गौ० सू० १।१।३) इति । परन्तु वैशेषिकदर्शने प्रत्यक्षाऽनुमानौ द्वे एव प्रमाणे स्त । प्रत्यक्षाऽनुमानाभ्यामन्येषामुपमानादीना प्रमाणानामनुमान एवाऽन्तर्भावात् ।

शब्दस्य न पृथक् प्रमाणान्तरत्वम्, प्रत्युतैतस्याऽनुमान एवाऽन्तर्भाव । यथा—धूमवह्न्योर्व्याप्ति स्मृत्वा धूमेन वह्नेरनुमान भवति तथा शब्दार्थयोर्व्याप्तिग्रहवता पुरुषेण गोशब्दश्श्रूयते चेत्तर्हि स गवार्थयोर्व्याप्ति स्मरति। अस्य शब्दस्याऽयमर्थ , अस्मिन्नर्थेऽय शब्द इति । एतया व्याप्त्या उच्चरितोऽय गोशब्दस्सास्नादिमन्तमर्थ बोधयति । एतादृग्व्याप्तिग्रहवता जनेनैव शब्देन शाब्द ज्ञान कर्तु शक्यते, नाऽन्यैः कैश्चिद् । एतस्माच्छब्दो नाऽनुमानात्पृथक् प्रमाणान्तरमस्ति । अपि त्वनुमान एवैतस्याऽन्तर्भावो भवतीति । यथोक्त कणादेन—

**एतेन शाब्द व्याख्यातम्** (वै० सू० ९।२।३) इति । सूत्रेऽस्मिन्नेतेन= लैङ्गिकज्ञानस्य कथनेन । शाब्दम्=शाब्दज्ञानस्य करण शब्दप्रमाणमपि । व्याख्यातम्=अनुमानेऽन्तर्भूतम् ।

इदमेव मत प्रशस्तपादाचार्योऽप्यनुमन्यते—**शब्दादीनामनुमानेऽन्तर्भाव, समानविधित्वात् । यथा—प्रसिद्धसमयाऽसन्दिग्धलिङ्गदर्शनप्रसिद्धचनुस्मरणाभ्यामतीन्द्रियेऽर्थे भवत्यनुमानमेव शब्दादिभ्योऽपि** ( प्र० पा० भा० पृ० ५१२ ) इति ।

**उपमानम्—**

कश्चिदारण्यको हि जनो ग्राममागच्छत् । सोऽत्राऽऽगत्य ग्राम्य विविधवस्तुजातमपश्यत् । तेष्वन्यतम गामपि येनाऽस्याऽन्तःकरणे प्रागनुभूतविविधवस्तूना गोश्च ज्ञानमजनिष्ट । अतः पश्चाद्दैवात्कश्चिद्ग्रामीणोऽप्यरण्यमगमत् । तत्र गत्वाऽटव्या पर्य्यटन् तस्यैवाऽऽरण्यकस्य सन्निधावसेधीद् यः पूर्व ग्राममाव्राजीत् । तमारण्यकमासाद्य स तमपृच्छत् कीदृशो गवयो भवतीति ? **गोसदृशो गवय** इति प्रतिब्रूते । पश्चादगवयज्ञो गवये गृहीतगोसादृश्यशक्तिको ग्रामीणस्ततोऽन्यत्राऽटव्यामेवाऽन्वेषमाणो गवय परिभ्रमन्त तमद्राक्षीत् । अस्मिन् गवये गोसादृश्यज्ञान यत्सञ्जातमासीत्पूर्वम्, तदेवोपमितेरसाधारण कारण सत्करण भवति एतदनन्तर **गोसदृशो गवयपदवाच्य** इत्यतिदेशवाक्यस्य यत्स्मरण जायते तदेव स्मरण व्यापार इत्युच्यते । अस्माद् व्यापाराद् **गवयो गवयपदवाच्य** इति निश्चिनोति । एतदेवोपमितिःप्रमाणम्, न त्वय गवयपदवाच्य इत्युपमिति, तथा सति गवयान्तरेऽपि शक्तेर्ग्रहाऽभावप्रसङ्गाद् । अत्र ब्रूते विश्वनाथ—

> **ग्रामीणस्य प्रथमतः पश्यतो गवयादिकम् ।**
> **सादृश्यधीर्गवादीनां या स्यात्सा करणं मतम् ।।**
> **वाक्यार्थस्याऽतिदेशस्य स्मृतिर्व्यापार उच्यते ।**
> **गवयादिपदाना तु शक्तिधीरुपमा फलम् ।।**
>
> भा० परि० ७९—८० इति ।

**यत्राऽऽरण्यकेन केनचिद्ग्रामीण प्रत्युक्तं 'गोसदृशो गवयपदवाच्य' इति । पश्चाद् ग्रामीणेन क्वचिदरण्यादौ गवयो दृष्टस्तत्र गोसादृश्यज्ञानं यज्जातं तदुपमितिकरणम् । 'तदनन्तर गोसदृशो गवयपदवाच्य' इत्यतिदेशवाक्यार्थस्मरणं यज्जायते तदेव व्यापारः । तदनन्तरं तत्र गवयो गवयपदवाच्य इति ज्ञानं यज्जायते तदुपमिति, नत्वयं गवयपदवाच्य इत्युपमिति, गवयान्तरे शक्तिग्रहाऽभावप्रसङ्गात् ।** (न्या० सि० मु० भा० परि० ७९-८०) इति ।

अस्या उपमितेस्स्वातन्त्र्येण प्रामाण्य नाङ्गीकुरुते वैशेषिक । किन्त्वस्या अनुमान एवान्तर्भाव इति मनुते । तथाहि—

**उपमानम्—**

उपमानमपि न पृथक्प्रमाणमस्ति, किन्त्वस्याऽनुमानेऽन्तर्भावो भवति । यतो हि यदा कश्चिद्ग्रामीणोऽटव्या भ्रमन् कञ्चिद्गवयज्ञमारण्यक पृच्छति कीदृशो गवयो भवति, स आह, गौरिव गवय इति । अत्राऽऽप्तस्यास्य वचन शब्द एवाऽन्तर्भवति । एतेन ग्रामीणस्य पुरुषस्याऽन्तःकरणे गौरिव गवयो भवतीति यज्ज्ञान जात तज्ज्ञानमपि शाब्दज्ञानमेवाऽस्ति । अतोऽस्य शब्दस्य शाब्दज्ञानस्याप्यनुमानेऽन्तर्भावो भवति । यथोक्तम्—**आप्तेनाऽप्रसिद्धस्य गवयस्य गवा प्रतिपादनादुपमानमाप्तवचनमेव** (प्र० पा० भा० पृ० ५३०) इति ।

**अर्थापत्ति —**

जीवन् चैत्रो गृहे नास्तीत्यत्र **नाऽस्तीति** वाक्येन गृहे चैत्रस्याऽभावो गम्यते, जीवन् चैत्र इति वाक्येन चैत्रस्य गृहे सद्भावोऽपि । यतो हि जीवतश्चैत्रस्य गृहेऽवस्थितिर्भवत्येव । यथा—जीवन्नहं गृहे तिष्ठामीति । तथा च यतो जीवन् चैत्रो गृहे नोपलभ्यते, अतश्चैत्रस्याऽर्थापत्तिप्रमाणेन बहिर्वृत्तित्वमस्तीति निश्चीयते, युगपदभावभावयोर्विरोधात् । अस्या अर्थापत्तेश्चैत्रो बहिरस्ति, जीवनसम्बन्धित्वे सति गृहेऽनुपलभ्यमानत्वात्, अहमिवेत्यनुमान एवान्तर्भाव ।

पीनोऽयञ्चैत्रो दिवा न भुङ्क्त इति वाक्य श्रुत्वा रात्रिभोजनस्य कल्पना जायते । यतो हि नहि भोजनमन्तरा शरीरस्य पीनत्व सम्भवति । यतश्चैत्रस्य पीनत्व दृश्यते, अतश्चैत्रस्य रात्रिभोजन कल्प्यते । इयमपि श्रुताऽर्थापत्तिरनु-

मान एवाऽन्तर्भवति । तथा चाऽनुमानाऽऽकार --दिवाऽभुञ्जानश्चैत्रो रात्रौ भुङ्क्ते पीनत्वात्, यथाऽस्मदादिपीनत्ववत् । यथोक्तम्—**दर्शनार्थादर्थापत्तिर्विरोध्येव, श्रवणादनुमिताऽनुमानम्** (प्र० पा० भा० पृ० ५३४) इति ।

**अनुपलब्धिः—**

उपलब्धियोग्यस्य वस्तुनोऽभाव दृष्ट्वा, एतस्य प्रत्ययोत्पत्तयेऽनुपलब्धिरपि पृथक्प्रमाणमस्तीति कैश्चिदुच्यते । एतन्न युक्तम्, यतो हि यथोत्पन्न कार्यं स्वकारणस्य सद्भावे लिङ्ग भवति, तथोपलब्धियोग्यस्य वस्तुनोऽभाव दृष्ट्वा कारण नाऽस्तीति गम्यते । कारण भवेच्चेत्तर्हि तदवश्यमुपलभ्येत, यतो नोपलभ्यते, अतो नास्ति तदित्येव निश्चीयते ।

एवञ्चाऽनुपलब्धिरपि न प्रमाणान्तरमस्ति, किन्त्वनुमान एवैतस्या अन्तर्भावो भवतीति गम्यते । यथोक्तम्—

**अभावोऽप्यनुमानमेव, यथोत्पन्न कार्यं कारणसद्भावे लिङ्गम्, एवमनुत्पन्न कार्यं कारणाऽसद्भावे लिङ्गम्** (प्र० पा० भा० पृ० ५४२-५४३) इति ।

**सम्भव —**

यतश्शत द्विशत सहस्रे सम्भवति, अतस्सम्भवोऽपि प्रमाणान्तरमस्तीति गम्यते । तन्न युक्तम्, यतो हि शत द्विशतमित्यादीनामविनाभावेन सहस्रेऽनुभवात् । अतस्सम्भवस्य नास्ति प्रमाणान्तरत्वम्, प्रत्युतैतस्याऽनुमानेऽन्तर्भावो भवति । यथोक्तम्—**सम्भवोऽप्यविनाभावित्वादनुमानमेव** (प्र० पा० भा० पृ० ५५२) इति ।

**ऐतिह्यम्—**

इह वटे यक्ष प्रतिवसतीत्यत्र जनश्रुतिबलाद् वटवृक्षे यक्षस्य ज्ञानमुत्पद्यते । तस्य कारणमैतिह्य प्रमाणान्तरमस्तीति कैश्चित्स्वीक्रियते । एतन्न युक्तम् । यद्यस्योपदेष्टा कश्चन आप्तोऽस्तीति निश्चित भवेत्तर्हि आप्तोपदेशवचनत्वेनाऽऽगम एव प्रमाणम्, नत्वैतिह्याख्य प्रमाणान्तरमस्तीति । एतच्चाऽनुमानेऽन्तर्भवति । अत एवैतिह्यमप्यनुमानमेवाऽस्ति ।

**चेष्टा—**

चेष्टया यज्ज्ञान भवति, एतदपि न प्रमाणान्तरमस्ति । यतो हि कराऽऽकुञ्चनादिलक्षणोऽभिनयोऽनेनाऽभिप्रायेण क्रियत इत्येव यस्य पुरुषस्य प्रसिद्धोऽभिनय , तस्य चेष्टया करविन्यासेनाऽऽह्वानविसर्जनादिप्रतीतिर्भवति, नाऽऽन्यस्य, अत एषाऽपि व्याप्तिज्ञानपूर्वकमनुमानमेवाऽस्ति । अतश्चेष्टाया प्रमाणान्तरत्व

न सिध्यति । यथोक्तम्—**प्रसिद्धार्ऽभिनयस्य चेष्टया प्रतिपत्तिदर्शनात् तदपि अनुमानमेव** (प्र० पा० भा० पृ० ५सु६) इति ।

**वैयाकरणदृशा प्रमाणम्—**

अथ वैयाकरणदिशा प्रमाण विचार्य्यते । तथा चेमानि प्रत्यक्षादिप्रमाण-सम्बद्धानि सूत्राणि । तथा हि—

| | |
|---|---|
| १—**प्रतिपरसमनुभ्योऽक्ष्णः**[1] | पा० सू० ५।४।१०७ ग० सू० |
| २—**द्वितीये चाऽनुपाख्ये** | पा० सू० ६।३।८० |
| ३—**उपदेशे—** | पा० सू० १।३।२, ७।२।६२ |
| ४—**उपदेश आद्योच्चारणम्** | पा० सू० १।१।६१ सि०कौ० |
| ५—**आख्यातोपयोगे** | पा० सू० १।४।२६ |
| ६—**आदिरन्त्येन—** | पा० सू० १।१।७१ |
| ७—**अदर्शनम्—** | पा० सू० १।१।६० |
| ८—**त्यदादिदृशोऽनालोचने—** | पा० सू० ३।२।६० |
| ९—**पश्यार्थैश्चाऽनालोचने—** | पा० सू० ८।१।२५ |
| १०—**उपमानानि सामान्यवचनैः** | पा० सू० २।१।५५ |

प्रत्यक्षस्य यादृश लक्षण वैशेषिकैरास्थितम्, तादृशमेव शब्दशास्त्रेप्युप-लभ्यते । तथा च स्पष्टीकरोति पतञ्जलि—**मनसा युक्तानीन्द्रियाण्युपलब्धौ करणानि भवन्ति** (म० भा० पा० सू० ३।२।११५) इति ।

एतेन मनसा सयुक्तेन्द्रियार्थसन्निकर्षोत्पन्न यज्ज्ञान तत्प्रत्यक्षमिति निष्कर्ष । अस्य प्रत्यक्षस्य बहुषु सूत्रेषु स्वरूप प्रादर्शि भाष्यकृता । तथा हि—**प्रत्यक्षं तावदाख्यानमुपदेशस्तद्यथा—अगोज्ञाय कश्चिद्गा सक्थनि कर्णे वा गृहीत्वोपदि-शति—अयं गौ** (म० भा० पा० सू० १।३।२) इति । अपि च—**ननु च प्रत्यक्ष-मुपलभ्यते इषे त्वोर्जे त्वा** (म० भा० पा० सू० ३।३।३०) इति । अपि च—**अन्यथाजातीयका खल्वपि, प्रत्यक्षेणाऽर्थसम्प्रत्ययोऽन्यथाजातीयकः सम्बन्धात् ॥ राज्ञस्सखा राजसखा । सम्बन्धादेतद्गन्तव्यं नून राजाप्यस्य सखेति** (म० भा० पा० सू० २।१।२४) इति । अपि च—**ये तावदेते शौभिका नामैते प्रत्यक्षं कंसं घातयन्ति, प्रत्यक्षञ्च बलि बन्धयन्ति** (म० भा० पा० सू० ३।१।२६) इति ।

एतेन वैशेषिकसमर्थितमेव प्रत्यक्ष शाब्दिकैरपि स्वीक्रियत इति गम्यते । अस्यैव प्रत्यक्षस्योल्लेख—**प्रतिपरसमनुभ्योऽक्ष्ण** इत्यनेनाऽपि लक्ष्यते ।

---

१ प्रति+अक्षि+टच्=प्रत्यक्षम्,

**अनुमानम्—**

अनुमानमपि तदेव यद्वैशेषिकैरास्थितम्। एतच्च स्पष्टीकृत पतञ्जलिना। तद्यथा **धूम दृष्ट्वा अग्निरत्रेति गम्यते, त्रिविष्टब्धक दृष्ट्वा परिव्राजक**— (म० भा० पा० सू० ३।२।१२) इति। एतेन भाष्येण धूमेन वह्नि , त्रिविष्टब्धकेन=त्रिदण्डेन परिव्राजकस्य चानुमिति । अस्या अनुमितेरनुमान करण भवति, अनुमितिकरणमनुमानमिति व्युत्पत्तिवलात् । पाणिनिनाऽपि **द्वितीये चाऽनुपाख्ये** (पा० सू० ६।३।८०) इति सूत्रस्याऽनुपाख्येन=अनुमेय ज्ञानमस्तीति पर्य्यालोच्यते। अत एव **उपाख्यं प्रत्यक्षं तद्भिन्नेऽनुमेये** (लघुश० शे० पा० सू० ६।३।८०) इति सूत्रे प्रोक्त नागेशेन[1]।

**शब्दस्य प्रमाणान्तरत्वम्—**

अथ गौरित्यादौ सास्नालाङ्गूलककुदखुरविषाणिना बोधो भवति। अस्याऽर्थस्य वाचको गौ, वाच्यश्च सास्नाद्यर्थ । यथा—ईश्वरस्य वाचक=प्रणव, वाच्यश्चेश्वर.। अत एव **तस्य वाचक=प्रणवः** (यो०सू०१।२७) इति सूत्रमुक्तमेवाऽर्थमभिव्यनक्ति। कमप्यर्थ बुबोधयिषया च शब्दस्य प्रयोगो भवति। बोद्धा च शब्द श्रुत्वा वक्तुर्हृदयस्थितमभिप्राय विजानाति । एतेन शब्दार्थयोस्तादात्म्यरूपा व्याप्ति फलति । यतो हि शब्दार्थयोस्तादात्म्यात्साहचर्य्यमप्यस्ति। येन सास्नाद्यर्थव्याप्यगोशब्दवदिदमयं **गौरिति** वाक्यमिति परामर्श.। अमुना परामर्शाख्यव्यापारेणाऽस्य गौरिति वाक्यम्, सास्नाद्यर्थवद्, आकाङ्क्षादिमत्पदकदम्बकत्वात्, घटमानयेत्यादिपदकदम्बवदित्यनुमिति । तथा च शब्दादर्थस्याऽनुमितिरेव स्यान्न तु शब्दार्थयोर्वाच्यवाचकरूपस्सम्बन्धस्तेनैतेन शब्दस्याऽनुमितावेवाऽन्तर्भावो भवितुमर्हति, नत्वस्य प्रमाणान्तरत्वम्, मानाऽभावात् कल्पनागौरवाच्च।

उपरि प्रदर्शित वैशेषिकस्य मत न समीचीनम्, शब्देनाऽर्थस्याऽनुमितेरसत्त्वात्। शब्दो हि समवायेनाऽऽकाशे तिष्ठति। स एव हेतुर्भवितुमर्हति य सन्दिग्धसाध्यवति पक्षे व्यवतिष्ठमानस्साध्य साध्नोति, हेतो=पक्षधर्मताज्ञानस्य निश्चये सत्येव तेन हेतुना साध्यस्य निष्पत्तिर्भवति। अथ यश्छब्दो हेतु, अस्याऽऽकाशवृत्तित्वेन पक्षवृत्तित्वस्याऽसत्त्वादनुमितिर्न सेत्स्यतीति । किञ्चाऽर्थव्याप्यशब्दवदिदमिति परामर्शमन्तराऽपि गौरयमिति शब्दात्सास्नाद्यर्थस्य प्रतीतेर्जायमानत्वान्नाऽस्याऽनुमितित्व सम्भवति।

किञ्च शब्दार्थयोर्व्याप्यव्यापकभावस्स्वीक्रियते चेत्कश्चिदन्न मोदक वोच्चारयेत्तद्युच्चारयितुर्मुखमन्नै=पूर्य्येत, मुखे माधुर्य्यं वाऽऽपतेत्, अग्निमुच्चार येत्त-

---

1. राक्षसी साक्षादनुपलभ्यमाना निशयाऽनुमीयते। सि० कौ० पा० सू० ६।३।८०।

ह्यु च्चारयितुर्मुख दहेत्, असिमुच्चारयेत्तह्यु च्चारयितुर्मुख छिन्द्यात् । नह्यन्नमोदकाऽग्न्यसीनामुच्चारेण मुखमन्नै पूर्य्यते, अग्निना मुखं दह्यते, असिना मुख छिद्यते, मोदकेनोच्चारयितुर्मुखे माधुर्य्यमापतति वा । अतश्शब्दार्थयोर्नाऽस्ति व्याप्यव्यापकभावरसम्बन्ध । अमुमेव ब्रूते गौतम —**पूरणप्रदाहपाटनाऽनुपपत्तेश्च सम्बन्धाऽभाव.** (गौ० सू० २।१।५३) इति । अपि च—**अन्नाऽग्न्यसिशब्दोच्चारणे पूरणप्रदाहपाटनानि गृह्येरन्, न च गृह्यन्ते अग्रहणात्—नाऽनुमेय प्राप्तिलक्षणस्सम्बन्ध । तस्मान्न शब्देनाऽर्थ प्राप्तः** (न्या० भा० गौ० सू० २।१।५३) इति । अत्र वाचस्पति —**यदि शब्दस्याऽर्थेन व्याप्तिस्स्यात्तदाऽन्नाऽग्न्यसिशब्दैर्मुखपूरणमुखदाहमुखपाटनानि स्युः, शब्दस्य व्याप्यस्य सत्त्वेनाऽन्नादेरर्थस्यापि सत्त्वात्** (न्या० वा० ता० टी० गौ० सू० २।१।५३) इति ।

किञ्च—पर्वतादिपक्षे वह्नेर्निश्चये सति तदनन्तर वह्नेरनुमितिर्मे जायतामितीच्छयैवाऽनुमितिर्भवति । यतो हि सिद्धिरनुमितेः प्रतिबन्धिकाऽस्ति । किन्तु शाब्दबोधस्तु सिद्धे सत्त्वेऽपीच्छामन्तराऽपि भवति । अतोऽत्राऽनुमितिशाब्दबोधयोर्महद्वैषम्यमस्तीति । एतेन शब्दस्य प्रमाणान्तरत्व गम्यते ।

किञ्च गौरयमिति पदस्य श्रावणप्रत्यक्षाऽनन्तर सास्नादिपदार्थस्य स्मरणे सति—**एते पदार्था, परस्पर संसर्गवन्त', आकाङ्क्षादिमत्पदस्मारितत्वादित्य**नुमितिस्स्यादिति वक्तु न शक्यते, व्याप्तिस्मरणादिक विनाऽपि **गौरयमित्यस्मा**त्सास्नादिपदार्थसम्प्रत्ययस्य जायमानस्याऽनुमितित्वस्याऽसम्भवात् । किञ्चाऽय **गौ**रित्यस्मात्सास्नादिपदार्थस्य स्मृतिस्स्यादित्यपि वक्तु न शक्यते, स्मृतावनुभूतस्य ग्रहणाय **तत्तया** उल्लेखो भवति । यथा—सोऽयञ्चैत्रो यमह मथुरायामद्राक्षमित्यत्राऽनुभूतस्य **चैत्रस्य** ग्रहणाय तत्तया उल्लेखोऽत्र दृश्यते । न चाऽय **गौ**रित्यत्र तत्तया उल्लेखो दृश्यते । किन्तु पुरोवर्त्तिन सास्नादिमन्त पदार्थं दृष्ट्वैवाऽय गौरिति प्रात्यक्षिको ह्यनुभवोऽत्र, न तु स्मृति । किञ्चाऽयं गौरित्यत्र सास्नादिपदार्थस्य स्मृतित्वमुच्येत चेत्तर्हि गौर्गच्छतीत्यत्राऽपि स्मृतित्वमापद्येत, तथा सत्यनुमितिशाब्दबोधयोरुच्छेदस्स्यात् । न च तार्किकैर्गौर्गच्छतीत्यादिस्थले स्मृतित्व स्वीक्रियते, किन्तु शब्दजन्यबोध एव, विनिगमनाविरहादय गौरित्यत्राऽपि स्मृतित्व न स्वीक्रियेत । न च तथा, अतो नाऽस्त्यत्र स्मृति । किञ्च पुरोवर्त्तिन गा दृष्ट्वा कश्चिदय गौरिति ब्रूते, पश्चात् पदजन्यपदार्थोपस्थितौ सत्यामह शाब्दयामीत्यनुव्यवसायति । एतेन प्रत्यक्षाऽनुभूतस्यापि शब्दजसम्प्रत्ययो भवति । तथा च शब्दजज्ञानस्य स्मृतित्वमनुमितित्व वा कल्पयितुं न शक्यते । किञ्चोपरि प्रदर्शिताऽनुव्यवसायस्य प्रयोजिका शाब्दत्वजातिस्तदवच्छिन्ने शाब्दे ज्ञान आकाङ्क्षाऽऽसत्तियोग्यतातात्पर्य्याणा कारणत्वस्य कल्पनाऽऽवश्यकत्वे तद्वृत्त्यनुमितित्वस्य, व्याप्तिस्मृते', परामर्शस्य, सिद्धेरभावस्य,

पक्षधर्मतादीनाञ्च कल्पनाया महान् गौरवदोष आपद्येत । अतश्शब्दजसम्प्रत्यय-स्थलेऽनुमित्यादेश्च कल्पनमनुपयुक्तमेव । किञ्च पक्षे (=पर्वतादौ) वह्निनिश्चये सत्यनन्तरमसत्यामनुमित्सायामनुमितिर्न भवति, शब्दजसम्प्रत्ययस्तु सिद्धेस्सत्त्वेऽसत्यामप्यनुमित्सायाञ्जायत एव । न च सिद्धेस्सत्त्वेऽपि यथा परार्थाऽनुमितिस्तथा शाब्दबोधोऽपि स्यादिति वाच्यम् ? परार्थाऽनुमितौ पर्वतो वह्निमान्, धूमात्, यो यो धूमवान् स स वह्निमानित्यादिक पञ्चावयवात्मक वाक्य प्रयुज्यते, शाब्दबोधस्तु परप्रयुक्तादपि वाक्यात्स्वस्यैव शाब्दबोधो भवतीति महान् भेद । तथा च सिद्धि-प्रतिबध्यतावच्छेदककुक्षौ शब्दजसम्प्रत्ययाऽतिरिक्ताऽनुमितिज्ञान प्रति सिद्धि=प्रतिबन्धिका भवतीत्यवश्यं सन्निवेश्य स्याद् । तेनैतेन महान् गौरवदोष आपद्येत । न च ज्ञानस्य क्षणिकत्वात्प्रत्यक्षज्ञाननाशोत्तरक्षणेऽनुमितिस्स्यादिति वाच्यम् ? तथा प्रतीतेरसत्त्वात् । किञ्चैकक्षणविलम्बेऽप्यनुभवविरोधो नाऽस्तीत्युच्येत चेत् सिद्धिनाशाऽनन्तरक्षण एवाऽनुमितेरापत्तेस्सिषाधयिषाकालेऽप्यनुमितिर्न स्यात् । अत एव यत्र वह्निव्याप्यधूमवान् पर्वतो वह्निमानिति प्रत्यक्ष तत्पश्चात्सिषा-धयिषा जायते । सिषाधयिषाया उत्पत्तौ सत्यामनुमितेरुत्पत्तये सिषाधयिषाविर-हविशिष्टसिद्ध्यभावस्य कल्पना प्रवर्त्तत इति न्यायविदः । एतेन शब्दस्य प्रमा-णान्तरत्व सिद्ध भवति । इदमेवाऽभिप्रेत्य नागेशो ब्रूते—**आप्तोपदेशरूपश्शब्द=प्रमाणम्** (वै० सि० लघुम०) इति ।

किञ्च शब्दशास्त्रे प्रमाणाना मध्ये शब्दस्यैव प्राधान्य प्रमाणत्वमस्तीति पतञ्जलिना समुद्घोषितम् । तथाहि—**शब्दप्रमाणका वय यच्छब्द आह, तदस्माकं प्रमाणम्, शब्दश्च शब्दज्ञाने धर्ममाह** (म० भा० पस्पशा०) इति । अपि च—**शब्दप्रमाणका वयं यच्छब्द आह, तदस्माकं प्रमाणम्, शब्दश्चेह सत्तामाह—अयं दण्ड, अस्तीति गम्यते** (म० भा० पा० सू० २।१।१) इति ।

पाणिनिरपि **आख्यातोपयोगे** (पा०सू०१।४।२८), **उपदेशे**—(पा० सू०१।३।२), **उपदेशेऽत्वत** (पा० सू० ७।२।६२), इति सूत्रेष्वाख्यातोपदेशशब्दस्यैव प्रमाणत्वमुररीचकार । यतो हि शब्दस्यैवाऽऽख्यानमुपदेशनञ्च भवति । शब्द श्रुत्वा श्रोता शाब्दञ्ज्ञानङ्करोति । शब्दश्च श्रोतुरन्त=करणे प्रविश्य शाब्द-ञ्ज्ञानञ्जनयति । अत एवैतस्य शाब्दस्य कारण शब्दस्सिध्यति ।

किञ्च यथा लोके प्रत्यक्षस्य प्राधान्यम्, तथा शब्दशास्त्रे शब्दस्यैव प्रमुख प्रामाण्य स्वीकुर्वते शाब्दिका । प्रत्यक्षस्य च क्वचिद्बाधोऽपि दृश्यते । यथा—अलातचक्र प्रत्यक्षेण दृश्यते, अनुमानेनैतन्नास्तीति गम्यते[1] । तथा च

---

१ भवति च प्रत्यक्षादप्यनुमानबलीयस्त्वम् । यथा—अलातचक्र प्रत्यक्षेण दृश्यते, अनुमानाच्च गम्यते नैतदस्तीति । म० भा० पा० सू० ३।२।१२४.

यथा प्रत्यक्षस्य क्वचिदनुमानेन बाधो भवति, तथा शब्दस्य केनाऽप्यन्येन प्रमाणेन बाधो न भवति। अत एव शब्दस्य मूर्धन्य प्रामाण्य स्वीकुर्वन्ति वैयाकरणा।

किञ्चाऽस्मिञ्जगति येषा वस्तूनामत्यन्ताऽभावः (=त्रैकालिकससर्गावच्छिन्नप्रतियोगिको यो ह्यभावस्तेषामपि शब्दशक्तिस्वाभाव्याच्छब्दो बोधञ्जनयत्येव। यद्यप्यत्र शब्दजन्यपदार्थोपस्थितेरुत्तरकाले वस्तुनोऽसत्त्वाच्छाब्दज्ञानस्य बाधस्सुनिश्चितस्तथापि शब्दशक्तिमहिम्ना स भवत्येव। यथा—

**एष बन्ध्यासुतो याति खपुष्पकृतशेखरः।**
**कूर्म्मक्षीरचयैस्स्नातश्शशशृङ्गधनुर्धरः॥**

उपरि निर्दिष्टे पद्ये बन्ध्यायाः पुत्र, आकाशस्य पुष्पम्, कच्छपस्य पयः (=दुग्धम्), शशकस्य (=शशस्य) शृङ्गञ्च नाऽस्ति। तथापि पद्येनानेन तादृशबोधस्तु शब्दस्य सामर्थ्याद्भवति। एव वह्निना सिञ्चतीत्यत्र वह्निकरणकसेकस्य योग्यताया वह्नावसत्त्वेऽपि तादृशवाक्यादपि बोध। तथा च सत्यसत्यपि वस्तुनि शब्दो बोधञ्जनयति। यतो हि सर्वमपि ज्ञान सूत्रे गुम्फितपुष्पमिव शब्दे प्रत्यवभासते। किञ्च यत्किञ्चिदपि वस्तुजात दृष्टिपथमायाति, तन्निखिलमपि यथा सच्चिदानन्दात्मके ब्रह्मणि भासते, तथा शब्दब्रह्मण्यपि। अमुमेवार्थं ब्रूते भगवान् कृष्ण—

**मत्तः परतरन्नाऽन्यत्किञ्चिदस्ति धनञ्जय।**
**मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव॥** गी० ७/७

अपि च भर्तृहरि—

**न सोऽस्ति प्रत्ययो लोके यश्शब्दाऽनुगमादृते।**
**अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते॥** वा० प० १।१२३

किञ्च यत्सच्चिदानन्दात्मक ब्रह्म, अस्य ब्रह्मण एवेद विवर्त्तरूपञ्जगद् **एकमेवाऽद्वितीयम्**, (छा० ६।२।१), **नेह नानाऽस्ति किञ्चन** (बृहदा० ४।४।१९) **तदैक्षत बहु स्यां प्रजायेयेति** (छा० ६।२।३) इत्युपनिषद्भिर्निश्चीयते।[1] एव शब्दविदो यच्छब्दतत्त्वम्, तदेव ब्रह्म, अस्यैव ब्रह्मणो विवर्त्तरूपोऽय प्रपञ्चोऽस्तीति मन्वते। यथाह भर्तृहरि—

**अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्**
**विवर्त्ततेऽर्थभावेन प्रक्रिया जगतो यतः॥** वा० प० १।१

---

१. सर्वं खल्विद ब्रह्म तज्जलानिति छा० ३।४।१

एवञ्च यतश्शब्दब्रह्मणो विवर्त्तरूपमिदमर्थजातम्, अस्मिन्ननुस्यूततया शब्दो भासते। अतोऽनुविद्धमिव सर्वं ज्ञानमिति सुष्ठु सङ्गच्छते।

**अर्थापत्तिः—**

यथा—मातरि साधु वर्त्तितव्यम्, पितरि साधु वर्तितव्यमित्युक्ते सति या यस्य माता, तस्या आज्ञा पालयितव्या पुत्रेण, यो यस्य पिता, तस्य शुश्रूषा कर्त्तव्या च पुत्रेणेत्यनुक्तेऽपि स्वस्या मातरि स्वस्मिन् पितरि वा सम्बन्धात्तदध्यवसीयते। यतो हि मातृपितृशब्दौ सम्बन्धिवाचकौ स्त। सम्बन्धो हि द्विष्ठो भवति। यथेह भूतले घट इत्युक्ते भूतलघटयोस्संयोग उभयवृत्तितया भासते, तद्वदत्राऽपि गम्यते।

तथा आदिरित्युक्ते, अन्त्यमित्युक्ते वा, अनुक्तेऽप्यस्याऽयमादि, अस्येदमन्त्यमिति सम्बन्धात्प्रतीयते य प्रति यो ह्यादि, य प्रति यदन्त्यमिति। एताभ्यामाद्यन्ताभ्या मध्ये तिष्ठन्ति ये ते आक्षिप्यन्ते। यतो ह्याद्यन्त्यशब्दौ सम्बन्धिवाचकौ वर्तेते। यथोक्त पतञ्जलिना—**सम्बन्धिशब्दैर्वा तुल्यमेतत्। तद्यथा सम्बन्धिशब्दो मातरि वर्त्तितव्यम्, पितरि शुश्रूषितव्यम्। न चोच्यते स्वस्यां मातरि, स्वस्मिन् पितरीति। सम्बन्धाच्च गम्यते—यो यस्य माता, यो यस्य पितेति। एवमिहाऽपि—आद्यन्त्यमिति सम्बन्धिशब्दौ—एतौ स्तः। तत्र सम्बन्धादेतद्गन्तव्यम्—यं प्रति य आदि, अन्त्यमिति च भवति तस्य ग्रहणं भवति, स्वस्य च रूपस्येति** (म० भा० पा० सू० १।१।७१) इति।

एतेन भाष्येण **अर्थापत्ति**=**प्रमाण**मिति ध्वनित पतञ्जलिना। यथा—दिवाऽभुञ्जानस्य चैत्रस्य रात्रौ भोजनस्याऽऽक्षेपो भवति, तस्य पीनत्वदर्शनात्। नहि भोजनमन्तरा शरीरस्य पीनत्व सम्भवति। तथा न ह्याद्यन्त्यौ विना मध्यमस्याऽवस्थितिर्भवितु शक्नोति। अत आद्यन्त्याभ्या मध्यमस्याऽऽक्षेपो भवति, अत एव सूत्रे आद्यन्तयोर्ग्रहण सङ्गच्छते। यथा पीनत्वेन भोजनस्य, तथा आद्यन्त्याभ्या मध्यमस्य चेति। एतदेवाऽर्थापत्ति=प्रमाणमिति कथ्यते।

**अनुपलब्धिः—**

प्राप्तियोग्यस्य वस्तुनो यदा प्राप्तिर्न भवति, तदैतस्य वस्तुनो ज्ञानमनुपलब्धिप्रमाणेन भवति। यथा—इह घटस्स्याच्चेत्तर्हि घटोऽवश्यमुपलभ्येत, यतो नोपलभ्यते, अतस्स नाऽस्तीति गम्यते। किञ्चाऽभावस्य ज्ञाने प्रतियोगिनो ज्ञानमावश्यक भवति। तथा च दर्शनम्=प्रत्यक्षम्, अदर्शनम्=अप्रत्यक्षम्, दर्शनाऽभावश्च। अस्याऽभावस्य ज्ञाने प्रतियोगिन=प्रत्यक्षस्य ज्ञानमावश्यक

भवति । नहि प्रतियोगिज्ञानमन्तरा एतस्याऽभावो ज्ञातु शक्यते कैश्चित् । एवमालोचनम्=प्रत्यक्षम् । अनालोचनम्=प्रत्यक्षाऽभाव ।

अमुमेवाऽऽशय कैयटोऽपि विशदीकरोति—**उपलब्धिलक्षणप्राप्तस्य द्रव्यस्याऽनुपलम्भादसत्त्वनिश्चयो युक्तः** (प्र० पा० सू० ५।१।११६) इति ।

नागेशोऽपि पूर्वप्रदर्शितमेवाऽनुमन्यते—**विविक्ततया ग्रहणाऽभावादसत्त्वनिश्चय । उपलब्धिलक्षणं प्रमाणमेव सत्त्वनिश्चायकम्, उपलब्धिलक्षणात्प्रमाणात् प्राप्तस्य प्राप्तसत्त्वनिश्चययोग्यस्याऽनुपलम्भादसत्त्वनिश्चयः** (उद्० पा० सू० ५।१।११६ ) इति । एतेनाऽनुपलब्धेः प्रमाणत्वमवगम्यते ।

**अभ्यास —**

मणिरूप्यादीना परीक्षणार्थमभ्यासाख्यमपि प्रमाणमस्तीति हरिणाऽभिधीयते । यतो ह्यभ्यासमन्तरा एतस्य वास्तव ज्ञान न भवति । एतस्य वास्तव ज्ञान त्वभ्यासग्रहवता जनेनैव क्रियते । अभ्यासशून्यवता पुसा मणिरूप्यादेर्वास्तव ज्ञान कर्तु न शक्यते । अतोऽभ्यासोऽपि प्रमाणमस्तीति गम्यते ।

यथाह हरिः—

> **परेषामसमाख्येयमभ्यासादेव जायते ।**
> **मणिरूप्यादिविज्ञानं तद्विदां नाऽनुमानिकम्** ।। वा० प० १।३५, इति ।

**अदृष्टम्—**

पितृरक्षःपिशाचादयो व्यवहितविप्रकृष्टाऽतीताऽनागतादीनामपि वस्तूना ज्ञान प्रत्यक्षमिव कुर्वन्ति । अतीताऽनागतादीना ज्ञान कर्तु न शक्नुमो वयम् । अतोऽदृष्टमपि प्रमाणमस्ति । यतो ह्यदृष्टबलेनैव पितृरक्षःपिशाचादीना प्रत्यक्षमिव ज्ञानञ्जायते व्यवहितादीनामपि वस्तूनाम् । यथाह हरि.—

> **प्रत्यक्षमनुमानञ्च व्यतिक्रम्य व्यवस्थिताः ।**
> **पितृरक्षःपिशाचानां कर्मजा एव सिद्धयः** ।। वा० प० १।३६, इति ।

अस्या भर्तृहरिकारिकाया व्याख्यानेऽम्बाकर्त्रीकार आह—**याः खलु रक्षःपिशाचानां सिद्धयो व्यवहितविप्रकृष्टाऽतीतादिविज्ञानानि, तानि प्रत्यक्षाऽनुमानञ्च व्यतिक्रम्य व्यवस्थितानि, तदजन्यत्वात् । इदञ्चोपलक्षणमागमाभ्यासयोरपि । अतस्तेषां तास्सिद्धयःकर्मजा एव, स्वकृतसुकृतदुष्कृताऽन्यतरकर्मजन्या एवेत्यदृष्टमपि पञ्चमं प्रमाणमिति सिद्धम् ।**

एतेभ्योऽन्यान्यपि च सम्भवैतिह्यचेष्टादीनि[1] प्रमाणानि अप्रतिषिद्धञ्चाऽनुमत भवतीति न्यायेन सम्मतानीत्र वैयाकरणाना सर्वदर्शनपारिषदत्वाद् व्याकरणस्येत्यवधार्यते ।

**उपमानम्—**

शब्दशास्त्रे प्रमाण तदेव, यत्प्रमेय परितःपरिच्छिनत्ति । यथा—प्रस्थादीनि प्रमाणानि । एतैर्व्रीह्यादेःपरितःपरिच्छेदो भवति । यत् प्रमेय परितो न परिच्छिनत्ति, तत् प्रमाण नास्ति । उपमान नहि परित उपमेय परिच्छिनत्ति किन्तु किञ्चित्सादृश्यमेवाऽभिदधाति । अत उपमान न प्रमाणम्, परितःपरिच्छेदकाऽभावात् । अत एवोप**मानानि सामान्यवचनैः** (पा० सू० २।१।५५) इति सूत्रभाष्ये पतञ्जलिराह—**मानं हि नामाऽनिर्ज्ञातज्ञानार्थमुपादीयते निर्ज्ञातमर्थं ज्ञास्यामीति । तत्समीपे यन्नाऽत्यन्ताय मिमीते तदुपमानम्—गौरिव गवय इति । गौर्निर्ज्ञातो गवयोऽनिर्ज्ञातश्च** (म० भा० पा० सू० २।१।५५) इति । इममेवाऽऽशय कैयटनागेशावपि स्पष्टीकुरुत —**मानं हीति—यथा प्रस्थादि । तेन हि साकल्येन मेय परिच्छिद्यते** (प्र० पा० सू० २।१।५५) इति ।

अपि च—**अनिर्ज्ञातार्थस्य साकल्येन ज्ञापकत्वं हि तत्त्वम्**[2] । **यथा प्रस्थाद्यज्ञातस्य परिमाणरूपार्थस्य साकल्येन ज्ञापकम्, न तथोपमानम् । गौर्हि गवयं कतिभिश्चिद् धर्मैरेव तद्गतैर्ज्ञापयति, न साकल्येन** (उद्० पा० सू० २।१।५५) इति ।

**इममेवाशयं हरिरपि स्पष्टीकरोति—**

**अनिर्ज्ञातस्य निर्ज्ञान येन तन्मानमुच्यते ।**
**प्रस्थादिकेन मेयात्मा साकल्येनाऽवधार्यते ॥**
**अनिर्ज्ञातं प्रसिद्धेन येन तद्धर्म गम्यते ।**
**साकल्येनाऽपरिज्ञानादुपमान तदुच्यते ॥**

(वा० प० ३।१४।३६३-३६४) इति ।

एवञ्चोपमान न प्रमाणान्तरम्, अपि तु प्रत्यक्ष एवान्तर्भवति । यतो

---

१ यर्त्तर्हि तर्दिङ्गितञ्चेष्टित निमिषितमिति । म० भा० पस्पशा० ।
अपि च द्र० पा० सू० २।३।१३, अस्य प्रत्युदाहरणम्, तच्च, चेष्टाया किम् ? मनसा हरिं व्रजति, चेष्टायान्तु ग्राम ग्रामाय वा गच्छति । एतेन चेष्टाया स्वरूप स्पष्ट लक्ष्यते ।

२. प्रमाणमित्यर्थं ।

हि गो:, गवयस्य च प्रत्यक्षज्ञानवन्त कञ्चन पुमास कश्चित्पृच्छति—कीदृशो गवय ? स प्रष्ट्रे प्रत्युत्तर ददाति—गौरिव गवयो भवतीति । एतेन प्रष्टा गोसदृशो गवयो भवतीति निश्चिनोति । इदञ्च प्रत्यक्षमेव प्रमाणम्, न तु ततोऽतिरिक्त प्रमाणमस्तीति । यथोक्तम्—**सादृश्य स्फुटमत्र प्रत्यक्षेणाऽवधार्यत इति तदपेक्षोपमानस्येति नेदं मानम्, अपि तु तस्य समीपं किञ्चिद्रूपतया परिच्छेदात् । अत एवोपमानस्य प्रामाण्ये विवदन्ते किल** (हेला० वा० प० ३।१४। ३६४) इति ।

अत्र प्रत्यक्षमेव चार्वाका , प्रत्यक्षाऽनुमाने बौद्धवैशेषिकौ, ताभ्या सह शब्द इति साख्या , योगाश्च, तैस्सहोपमानमिति तार्किका:, तैस्सहाऽर्थापत्तिरिति प्राभाकरा , तैस्सहाऽनुपलब्धिरिति कौमारिलवेदान्तविज्ञा , तैस्सह सम्भवैतिह्ये अपि प्रमाणे पौराणिका , तैस्सह चेष्टेति लौकिका·, तान्त्रिकाश्चेति मन्यन्ते ।

यथोक्तम्—

> **प्रत्यक्षमेक चार्वाका·, कणादसुगतौ पुनः ।**
> **अनुमानञ्च तच्चाऽथ सांख्याश्शब्दञ्च तेऽपि ॥**
>
> **नैयायिकैकदेशिन उपमानञ्च केचन ।**
> **अर्थापत्तिसहैतानि चत्वार्याह प्रभाकरः ॥**
>
> **अभावषष्ठान्येतानि भाट्टा वेदान्तिनस्तथा ।**
> **सम्भवैतिह्ययुक्तानि तानि पौराणिका जगु ॥**

(मानसोल्लास. १।२।१७-१९) इति[1] ।

शब्दशास्त्रे पाणिनीयसूत्रेषु प्रमाणपद दृश्यते । तथा हि—

| | |
|---|---|
| १—**पुरुषात्प्रमाणेऽन्यतरस्याम्** | पा० सू० ४।१।२४ |
| २—**प्रमाणे द्वयसज्**— | पा० सू० ५।२।३७ |
| ३—**गाधलवणयो**—**प्रमाणे** | पा० सू० ६।१।४ |
| ४—**द्विगौ प्रमाणे** | पा० सू० ६।१।१२ |
| ५—**प्रमाणे च** | पा० सू० ३।४।५१ |

इत्यादिसूत्रेषूपात्त· प्रमाणशब्दो न प्रत्यक्षादिप्रमाणपर, अपि तु आयामस्य बाचकः । अत एव द्वौ पुरुषौ प्रमाणमस्या. सा द्विपुरुषी[2] द्विपुरुषा

---

१. अपि च द्र०—मानमेयो० प्र० परि० १ ।

२. परिखेति तस्यार्थ ।

वेति रूप सिध्यति । यथोक्त श्लोकवार्त्तिककृता—

**ऊर्ध्वमानं किलोन्मानम्**
**परिमाणन्तु सर्वतः ।**
**आयामस्तु प्रमाणं स्यात्**
**संख्या बाह्या तु सर्वत.** ॥ म० भा० (पा० सू०५।१।१९ उद्०)
इति ।

॥ इति प्रमाणपरिच्छेद. ॥

# परिशिष्टम्

## ग्रन्थेऽस्मिन् प्रयुक्तानां सङ्क्षेपसङ्केतानां सूची

अद्वै० सि० =अद्वैतसिद्धि.
अथर्व० =अथर्ववेद
अधि० =अधिकरणम्
अपो० सि० =अपोहसिद्धि
अ० को० =अमरकोश.
अनुप० परि० =अनुपलब्धि-परिच्छेद
अ० पा० =अध्यायः, पाद
उद्० पस्पशा० =उद्द्योतः पस्पशाह्निकम्
उद्० =उद्धृतः
उ० सू० =उणादिसूत्रम्
उप० =उपस्कार.
ऋ० =ऋग्वेदः
ऋ० स० =ऋक्सहिता
कामसू० =कामसूत्रम्
का० वा० =कात्यायन-वार्त्तिकम्
का० =कारिका
का० वृ० =काशिकावृत्तिः
का० व्या०दु०वृ० =कातन्त्रव्याकरणे-दुर्गवृत्ति.
का० प्र० =काव्यप्रकाशः
कि० टी० =किरणावली-टीका
क० टी० =कलाटीका
कु० टी० =कुञ्जिकाटीका
ख० ख० खा० =खण्डनखण्ड-खाद्यम्
क्षीर० =क्षीरस्वामी
क्षीरत० =क्षीरतरङ्गिणी
गी० =गीता
गौ० ब्र० =गौडब्रह्मानन्दी
गणरत्न० =गणरत्नमहो-दधिः
गौ० सू० =गौतमसूत्रम्
चतु० परि० =चतुर्थ परि-च्छेदः
च० सं०, शा० =चरकसहिता, शारीरकस्था-नम्
„ सू० =चरकसहिता, सूत्रस्थानम्
चि० सु० =चित्सुखी
छा०छान्दो०छा० =छान्दोग्योपनिषद्

जातिनि० =जातिनिर्णय
ज्यो० व्या० =ज्योतिष्मती-व्याख्या
टि० =टिप्पणी
तत्त्वचि० =तत्त्वचिन्तामणि
तत्त्वबो० =तत्त्वबोधिनी
तत्त्ववै० =तत्त्ववैशारदी
तत्त्वबि० =तत्त्वबिन्दु
तर्कस० =तर्कसङ्ग्रह.
ता० टी० =तात्पर्य्यटीका
तै० आ० =तैत्तिरीयम् आरण्यकम्
तै० प्रा० =तैत्तिरीयम् प्रातिशाख्यम्
तै० उप० ब्रह्मवल्ली ख० =तैत्तिरीयोपनिषद् ब्रह्मवल्लीखण्डम्
दि० टी० =दिनकरी टीका
दु० भा० =दुर्गभाष्यम् (निरुक्ते)
द० अ० वृ० =दयानन्दकृताष्टाध्यायीवृत्तिः
न्या० सि० मु० =न्यायसिद्धान्तमुक्तावली
नि० =निरुक्तम्
न्या० क० टी० =न्यायकन्दलीटीका
न्या० ली० =न्यायलीलावती
न्या० बो० =न्यायबोधिनी
न्या० वा० =न्यायवार्त्तिकम्
न्या० सू० =न्यायसूत्रम्
न्या० भा० =न्यायभाष्यम्
पदा० तत्त्व० नि० =पदार्थतत्त्वनिरूपणम्
पु० रा० =पुण्यराजीयम्
पदम० =पदमञ्जरी
पा० सू० =पाणिनिसूत्रम्
पा० शि० =पाणिनीयशिक्षा
प्र० प० =प्रथम⌒परिच्छेद.
प्र० पा० भा० =प्रशस्तपादभाष्यम्
प्र०पा०भा०भू०पृ० =प्रशस्तपादभाष्यभूमिकापृष्ठम्
प्र० =प्रदीप
प्र० त० =प्रस्तावतरङ्गिणी
प्र० मा० सू० =प्रदीपो माहेश्वरसूत्रे
प्रक्रि० कौ० =प्रक्रियाकौमुदी
प्रसा० टी० =प्रसादटीका
प्र० टी० =प्रभाटीका
प्रकी० प्र० टी० =प्रकीर्णप्रकाशटीका
प्रश्नोप० भा० =प्रश्नोपनिषद्भाष्यम्
प्र० पञ्जि० =प्रकरणपञ्जिका
प्र० पा० सू० =प्रदीप⌒पाणिनिसूत्रे
प्रमा० वा० =प्रमाणवार्त्तिकम्

| | |
|---|---|
| प्रप० सा० | =प्रपञ्चसारः |
| बालबो० | =बालबोधिनी |
| बालम० | =बालमनोरमा |
| ब्र० सू० | =ब्रह्मसूत्रम् |
| बृहदा० | =बृहदारण्यकोपनिषद् |
| बालबो० व्या० | =बालबोधिनी-व्याख्या |
| बृह० श० शे० | =बृहच्छब्देन्दुशेखर. |
| भा० | =भाष्यम् |
| भा० परि० | =भाषापरिच्छेद. |
| म०भा०मा०सू० | =महाभाष्य माहेश्वरसूत्रे |
| म० भा० | =महाभाष्यम् |
| म० भा०-पस्पशा० | =महाभाष्य पस्पशाह्निकम् |
| मणिप्र० | =मणिप्रभा |
| मा० धा० वृ० | =माधवीया धातुवृत्ति |
| मनुस्मृ० | =मनुस्मृति |
| म०भा०शान्ति० | =महाभारत |
| म० भा० शा० प० | शान्तिपर्व |
| मी० सू० | =मीमासासूत्रम् |
| मी० श्लो० वा० | =मीमासाश्लोकवार्त्तिकम् |
| मा० मेयो० प्रमे० प० | =मानमेयोदय, प्रमेयपरिच्छेद |
| मा० मे० अ० प्र० | मानमेयोदय, अनुमान प्रमाणम् |
| मा० मे० जा० प्र० | मानमेयोदय. जातिप्रमाणम् |
| यो० सू० | =योगसूत्रम् |
| वा० य० | =वाजसनेयि-यजुर्वेद. |
| वा० प० हे० | =वाक्यपदीय हेलाराजीयम् |
| वा० भा० | =वात्स्यायन-भाष्यम् |
| वा०रा०सु०का० | =वाल्मीकिरामायणे सुन्दर-काण्डम् |
| विवृ० | =विवृत्ति |
| वृ०दे०टी० | =वृषभदेवटीका |
| वेदा० परि० | =वेदान्तपरिभाषा |
| वेदा० सा० | =वेदान्तसार |
| वै० सू० | =वैशेषिकसूत्रम् |
| वै० सि० लघुम० | =वैयाकरण-सिद्धान्तलघुमञ्जूषा |
| वै० सि० म० | =वैयाकरण-सिद्धान्तमञ्जूषा |
| वै० भू० सा० | =वैयाकरणभूषण-सार |
| व्युत्० वा० | =व्युत्पत्तिवाद |
| व्या० भा० | =व्यासभाष्यम् |
| व्या० स० उद्० | =व्याकरणसम्प्रदाय उद्धृत |
| लघुश० शे० | =लघुशब्देन्दु-शेखर· |
| शा० भा० | =शाबरभाष्यम् |
| शा० प० | =शान्तिपर्व |
| शान्ति प० | = ,, ,, |

| | | | |
|---|---|---|---|
| श० कौ० | =शब्दकौस्तुभ | सि० शि० गो० भु० श्लो० | =सिद्धान्तशिरोमणौ गोलाध्याये भुवनवर्गश्लोक |
| शब्देन्दुशे० | =शब्देन्दुशेखर | सि शि० ग्रहग० म०अ० का० मा० श्लो० | =सिद्धान्तशिरोमणौ ग्रहगणिताध्याये मध्यमाधिकारे कालमानाध्याये श्लोक. |
| श्लो० वा० | =श्लोकवार्त्तिकम् | सि० वि० टी० | =सिद्धिविनिश्चयटीका |
| श्लो० स० | =श्लोकसङ्ग्रह | सुबो० टी० | =सुबोधिनीटीका |
| श्रीमद्भा० | =श्रीमद्भागवतम् पुराणम् | सुश्रु० सू० | =सुश्रुतसूत्रम् |
| सा० सू० | =साख्यसूत्रम् | स्फोटनि०का०स० | =स्फोटनिर्णय, कारिकासंख्या |
| सा० प्र० भा० | =साख्यप्रवचनभाष्यम् | स्वोप० व्या० | =स्वोपज्ञव्याख्या |
| सा० सू० वृ० | =साख्यसूत्रवृत्ति. | स्वोपज्ञटी० स्वोप० टी० | =स्वोपज्ञटीका |
| सा० का० | =साख्यकारिका | हेला० | =हेलाराजीयम् |
| सा० तत्त्वकौ० | =साख्यतत्त्वकौमुदी | | |
| सा० द० का० | =साहित्यदर्पणकारिका | | |
| सि० मु० | =सिद्धान्तमुक्तावली | | |
| सि० चन्द्रो० | =सिद्धान्तचन्द्रोदय. | | |
| सि० कौ० | =सिद्धान्तकौमुदी | | |

॥ इति सङ्क्षेपसङ्केताना सूची ॥

## अस्मिन् ग्रन्थेऽङ्कानां सङ्केतः

पाणिनीयसूत्रस्याऽय सङ्केतोऽधो लिख्यते। तेनैतेन सङ्केतेन पाणिनेः सर्वाणि सूत्राणि ज्ञेयानि। तथाहि—पा० सू० ५।१।११६, अष्टा० ५।१।११६ इत्यस्य स्थाने लाघवार्थं ५।१।११६, इत्येव सङ्केतितम्। अय सङ्केत, अध्याय, पादम्, सूत्रसख्याञ्च बोधयति। तेन ५।१।११६=अ० ५ पा० १ सूत्रस० ११६ इति बोध्यम्।

वाक्यपदीयकाण्डस्य, समुद्देशस्य, कारिकायाश्च कृतेऽङ्कस्यैव व्यवहारो व्यवाहारि। तेनैतेन १।१=प्रथमकाण्डस्य प्रथमा कारिकेति, २।१=द्वितीय-काण्डस्य प्रथमा कारिकेति, ३।३।५=तृतीयकाण्डस्य, तृतीयसमुद्देशस्य पञ्चम-कारिकेति बोध्यम्।

न्यायवैशेषिकेष्वय सङ्केत, अध्यायम्, आह्निकम् सूत्रसख्याञ्च बोधयति। तेनैतेन वै० सू० १।१।१५=वैशेषिकसूत्रस्य अ० १ आ० १ सूत्रस० १५, एव न्या० सू० १।१।१५=न्यायसूत्रस्य अ० १ आ० १ सूत्रस० १५ इति च बोध्यम्।

योगसूत्रस्य कृतेऽप्यस्य व्यवहारो विहितः। तेनैतेन पाद, सूत्रसख्या च बोध्यते। तथा च यो० सू० ३।१७=योगसूत्रम्, पाद ३, सूत्रसख्या १७ इति च बोधो भवति।

मीमासासूत्रेपु ब्रह्मसूत्रेषु, साख्यसूत्रेषु च अध्याय, पाद, सूत्रसख्या चेति बोध्यम्। अत एवैतेषा सङ्केताय मी० सू० १।१।५=मीमासासूत्रम्, अ० १ पा० १ सू० स० ५ इति। अयमेव क्रमो ब्रह्मसूत्रसाख्यसूत्रयोरपि बोध्य इति।

वाल्मीकीयरामायणे काण्डस्य, अध्यायस्य, श्लोकसख्यायाश्च कृतेऽपि अङ्कस्य सङ्केतोऽकारि। तेनाऽय सङ्केत काण्डम्, अध्यायम्, श्लोकसख्याञ्च बोधयति। महाभारते श्रीमद्भागवतपुराणे चाऽयमङ्कसङ्केतोऽध्यायं श्लोक-सख्याञ्च बोधयति।

# सहायकग्रन्थानां सूची

| ग्रन्थनाम | ग्रन्थकर्त्तुर्नाम |
|---|---|
| **वैशेषिकग्रन्थाः—** | |
| वैशेषिकसूत्रम् | कणाद |
| उपस्कार | शङ्करमिश्र |
| कणादरहस्यम् | ,, ,, |
| विवृत्ति | जयनारायणतर्कपञ्चाननभट्टाचार्य |
| भाष्यम् | चन्द्रकान्तभट्टाचार्य |
| सप्तपदार्थी | शिवादित्य |
| प्रशस्तपादभाष्यम् | प्रशस्तपादाचार्य |
| न्यायकन्दलीटीका | श्रीधरभट्ट. |
| **न्यायवैशेषिकग्रन्था —** | |
| न्यायलीलावती | श्रीवल्लभाचार्य |
| भाषापरिच्छेद | विश्वनाथपञ्चाननभट्टाचार्य |
| न्यायसिद्धान्तमुक्तावली | ,, |
| दिनकरी | महादेवभट्टः, दिनकरभट्टश्च |
| रामरुद्री | रामरुद्रभट्टः, प० राजश्रीराजेश्वरशास्त्री द्राविडश्च |
| किरणावली | श्रीकृष्णवल्लभाचार्य. |
| तर्कसङ्ग्रह. | अन्नभट्टः |

| ग्रन्थनाम | ग्रन्थकर्त्तुर्नाम |
|---|---|
| न्यायबोधिनी | गोवर्द्धन |
| **सिद्धान्तचन्द्रोदयः** | |
| **न्यायदर्शनग्रन्था —** | |
| पदार्थतत्त्वनिरूपणम् | रघुनाथ-शिरोमणि. |
| न्यायसूत्रम् | गौतम |
| वात्स्यायनभाष्यम् | वात्स्यायन |
| न्यायवार्त्तिकम् | उद्द्योतकर |
| तात्पर्य्यटीका | वाचस्पतिमिश्र |
| व्युत्पत्तिवाद | गदाधरभट्टाचार्य |
| शक्तिवाद | गदाधरभट्टाचार्य |
| शब्दशक्तिप्रकाशिका | जगदीशतर्कालङ्कारभट्टाचार्य |
| तत्त्वचिन्तामणि | गङ्गेशोपाध्याय |
| गादाधरी | गदाधरभट्टाचार्य |
| **व्याकरणग्रन्था —** | |
| अष्टाध्यायीसूत्रम् | पाणिनि |
| महाभाष्यम् | पतञ्जलिः |
| प्रदीप | कैयट |
| उद्द्योत | नागेशभट्टः |
| सिद्धान्तकौमुदी | भट्टोजिदीक्षितः |
| तत्त्वबोधिनी | ज्ञानेन्द्रसरस्वती |
| बालमनोरमा | वासुदेवदीक्षित. |
| सुबोधिनी-व्याख्या | जयकृष्णः |

| ग्रन्थनाम | ग्रन्थकर्त्तुर्नाम |
|---|---|
| प्रक्रियाकौमुदी | श्रीरामचन्द्राचार्य |
| प्रसादटीका | श्रीविट्ठलाचार्य |
| काशिकावृत्ति | वामनजयादित्यौ |
| न्यास | जिनेन्द्रबुद्धि |
| पदमञ्जरी | हरदत्त |
| वाक्यपदीयम् | भर्तृहरि. |
| (प्रकीर्णप्रकाश) | हेलाराज· |

**हेलाराजीयम्**

| | |
|---|---|
| पुण्यराजीयम् | पुण्यराज |
| | वृषभदेव |
| स्वोपज्ञवृत्ति | भर्तृहरि· |
| अम्बाकर्त्री | रघुनाथशर्मा |
| वैयाकरणसिद्धान्त-लघुमञ्जूषा | नागेशभट्ट |
| बृहन्मञ्जूषा | ,, ,, |
| रत्नप्रभाटीका | सभापतिशर्मोपाध्याय |
| कलाकुञ्जिका | दुर्बलाचार्य, बालम्भट्टश्च |
| लघुशब्देन्दुशेखर | नागेशभट्ट |
| परिभाषेन्दुशेखरः | ,, |
| वैयाकरणभूषण-सारः | कौण्डभट्टः |
| शब्दकौस्तुभ. | भट्टोजिदीक्षित |
| प्रौढमनोरमा | भट्टोजिदीक्षित· |
| शब्दरत्नम् | हरिदीक्षितः |
| माधवीयधातु-वृत्तिः | सायणाचार्य |
| क्षीरतरङ्गिणी | क्षीरस्वामी |

| ग्रन्थनाम | ग्रन्थकर्त्तुर्नाम |
|---|---|
| गणपाठ | पाणिनि |
| श्लोकवार्त्तिकम् | व्याडि |
| दशपाद्युणादि-वृत्ति | युधिष्ठिरमीमांसकसम्पादिता |
| भाषावृत्ति. | पुरुषोत्तमदेव |
| पाणिनीयशिक्षा | पाणिनि. |
| बृहच्छब्देन्दु-शेखर | नागेशभट्ट |
| व्याकरणदर्शन-भूमिका | रामाज्ञापाण्डेय· |
| ,, पीठिका | ,, |
| ,, प्रतिमा | ,, |

**वैदिकव्याकरणम्—**

| | |
|---|---|
| निरुक्तम् | यास्क |
| दुर्गभाष्यम् | दुर्गाचार्य |
| तैत्तिरीयप्रातिशाख्यम् | |
| काठकसंहिता | |

**मीमांसादर्शनग्रन्थाः—**

| | |
|---|---|
| मीमांसासूत्रम् | जैमिनिः |
| शाबरभाष्यम् | शबरस्वामी |
| मीमांसाश्लोक-वार्त्तिकम् | कुमारिलभट्टः |
| मानमेयोदयः | नारायणभट्ट. |
| प्रकरण-पञ्जिका | शालिकनाथमिश्रः |
| तत्त्वबिन्दु· | वाचस्पतिमिश्रः |

**वेदान्तग्रन्थाः—**

| | |
|---|---|
| ब्रह्मसूत्रम् | व्यासः (=कृष्ण- |

| ग्रन्थनाम | ग्रन्थकर्त्तुर्नाम |
|---|---|
| | द्वैपायन ) |
| शारीरिकम् भाष्यम् | शङ्कराचार्यः |
| भामती | वाचस्पतिमिश्र. |
| वेदान्तपरिभाषा | धर्मराजाध्वरीन्द्र |
| वेदान्तसार. | सदानन्द |
| पञ्चदशी | विद्यारण्यमुनिः |
| अद्वैतसिद्धि | मधुसूदनसरस्वती |
| गौडब्रह्मानन्दी | गौडब्रह्मानन्द. |
| प्रत्यक्तत्त्वप्रदीपिका(=चित्सुखी) | चित्सुखाचार्य ,, |
| खण्डनखण्डखाद्यम् | श्रीहर्ष. |
| **सांख्यग्रन्थाः—** | |
| साख्यसूत्रम् | कपिलः |
| साख्यप्रवचनभाष्यम् | विज्ञानभिक्षु· |
| साख्यसूत्रवृत्ति. | अनिरुद्ध· |
| साख्यकारिका | ईश्वरकृष्ण |
| साख्यतत्त्वकौमुदी | वाचस्पतिमिश्र |
| ज्योतिष्मतीव्याख्या | श्रीरामशङ्करभट्टाचार्यः |
| **योगग्रन्थाः—** | |
| योगसूत्रम् | पतञ्जलि. |
| व्यासभाष्यम् | व्यासः |
| तत्त्ववैशारदी | वाचस्पतिमिश्रः |
| मणिप्रभा | रामानन्द सरस्वती |

| ग्रन्थनाम | ग्रन्थकर्त्तुर्नाम |
|---|---|
| **बौद्धग्रन्थौ—** | |
| प्रमाणवार्तिकम् | धर्मकीर्ति. |
| अपोहसिद्धिः | रत्नकीर्ति |
| **जैनग्रन्थः—** | |
| सिद्धिविनिश्चयटीका | अनन्तवीर्याचार्य |
| **उपनिषद्ग्रन्थाः—** | |
| प्रश्नोपनिषद्भाष्यम् | |
| छान्दोग्योपनिषद् | |
| बृहदारण्यकोपनिषद् | |
| गीता | कृष्णद्वैपायन. |
| **स्मृतिग्रन्थ —** | |
| मनुस्मृति | मनु |
| **आयुर्वेदग्रन्थाः—** | |
| चरकसहिता | चरकमुनि. |
| सुश्रुतम् | धन्वन्तरि |
| **इतिहासग्रन्थाः—** | |
| पाणिनिकालीनभारतवर्षः | वासुदेवशरण अग्रवाल. |
| सस्कृतव्याकरणशास्त्र का इतिहास | युधिष्ठिरमीमासक |
| वाल्मीकिरामायणम् | वाल्मीकि |
| महाभारतम् | व्यास |
| **पुराणग्रन्थः—** | |
| श्रीमद्भागवतम् | व्यास· |
| **साहित्यग्रन्थाः** | |
| काव्यप्रकाश. | मम्मटभट्टः |

| ग्रन्थनाम | ग्रन्थकर्त्तुर्नाम |
|---|---|
| बालबोधिनी-व्याख्या | वामनाचार्य. |
| साहित्यदर्पणम् | विश्वनाथकवि-राज |
| **तन्त्रग्रन्थः** | |
| प्रपञ्चसार | |
| **वेदग्रन्थाः** | |
| ऋग्वेदसहिता | |
| यजुर्वेदसहिता | |
| अथर्ववेदसहिता | |
| **निबन्धग्रन्थः—** | |
| प्रस्तावतरङ्गिणी | चारुदेवशास्त्री |
| **कोशग्रन्था —** | |
| अमरकोश | अमरसिह |
| वाचस्पत्यम् | तारानाथभट्टा-चार्य |
| शब्दकल्पद्रुम | राजाराधाकान्तदेव· |
| सस्कृतहिन्दीकोश | वामनशिवरामआप्टे |
| **ज्योतिष्यग्रन्थः—** | |
| सिद्धान्तशिरोमणि | भास्कराचार्य. |

॥ इति सहायकग्रन्थाना सूची ॥

# अनुक्रमणी (INDEX)

**ग**

॥ इत्यनुक्रमणी ॥

# शुद्धिपत्रम्

| अशुद्धम् | शुद्धम् | पृष्ठम् | पङ्क्तिः |
|---|---|---|---|
| उपोद्घातः— | | | |
| निष्पन्तोऽय | निष्पन्नोऽय | १७ | ३१ |
| वश | वश | १६ | ४ |
| वाध्याय | स्वाध्याय | २० | १७ |
| ग्रन्थः— | | | |
| रत्वाद् | रसत्त्वाद् | ४ | २६ |
| बहिर्भतानि | बहिर्भूतानि | ५ | १८ |
| निवृर्त्तेषु | निवृत्तेषु | ३४ | २३ |
| चाच्छाव्दा० | चाच्छब्दा० | ३४ | २७ |
| र्निग्राह्य. | निर्ग्राह्य' | ४० | २६ |
| मा० | पा० | ४० | २७ |
| मा० | भा० | ४१ | १५ |
| ०मपेक्षते | ०मपेक्ष्यते | ४१ | २४ |
| वा० म० | वा० प० | ४४ | ३ |
| मत | मत | ४३ | १ |
| ०लासो | ०लास | ४६ | १६ |
| ०ब्रते | ०ब्रूते | ५८ | २ |
| ०परमाणना | परमाणूनां | ६६ | १६ |
| विश्ब | विश्व | ११६ | ७ |
| वेशे० | वैशे० | १२० | १० |
| घटबद् | घटवद् | १२५ | १६ |
| इण | इण् | १२८ | १६ |
| भ्रात्या | भ्रान्त्या | १३० | ३० |
| द्रबत्व | द्रवत्व | १४५ | २६ |
| सनि० | सन्नि० | १४७ | ६ |

| अशुद्धम् | शुद्धम् | पृष्ठम् | पङ्क्तिः |
|---|---|---|---|
| ०कामो | ०काम | १५२ | ३२ |
| ०प्रत्यक्ष | प्रत्यक्ष | १६२ | ९ |
| यथाक्तम् | यथोक्तम् | १६३ | १८ |
| पिण्ड | पिण्ड | १६४ | २ |
| धटो | घटो | १७१ | ४ |
| ०द्रव्य० | ०द्रव्य० | १७८ | १८ |
| विक्लित्त० | विक्लित्ते० | १८१ | ११ |
| सामान्मस्य | सामान्यस्य | २०१ | १९ |
| यागिनो | योगिनो | २१० | ३ |
| तथाय | तथाय | २१० | १२ |
| समादार | समादर | २१७ | २१ |
| ०तीति | ०तीती | २२४ | २६ |
| ०नामादाय | नादाय | २२८ | ८ |
| निरुपाख्ये | नीरुपाख्ये | ,, | २४ |
| ०त्व वश्य | ०त्वमवश्य० | २३१ | ६ |
| ०रूम खिल | रूपम | २३२ | १३ |
| गौप्तमीय | गौतमीय | २३४ | १५ |
| प्रनै० | अनै० | २४६ | २१ |
| शव्दत्व | शब्दत्व | २४८ | १२ |
| ०नकान्तिक | ०नैकान्तिक | २४९ | १० |
| नत्वायस्य | नत्वाश्रयस्य | २५१ | १५ |
| वित्रार्य्यते | विचार्य्यते | २५२ | ८ |
| नित्पो० | नित्यो | २५५ | १० |
| क्रियाया | क्रियाया | २६३ | २ |
| वलात् | बलात् | २६८ | ६ |
| एव | एव | २७१ | २४ |

॥ इति शुद्धिपत्रम् ॥